॥ श्रीः ॥

काशी संस्कृत ग्रन्थमाला

१९०



श्रीरूपगोस्वामिप्रभुपादप्रणीतं

# ललितमाधवं नाटकम्

नारायणप्रणीतया टीकया समुपेतम्

सम्पादकः

प्रा० बाबूलालशुक्लः शास्त्री

एम० ए०, साहित्याचार्यः

संस्कृतविभागाध्यक्षः

( शासकीयमहाविद्यालयः, नरसिंहगढ़, म० प्र० )

प्राक्कथनलेखकः

डॉ० रसिकबिहारी जोशी, एम. ए., डी. लिट्

( संस्कृतविभागाध्यक्षः, दिल्लीविश्वविद्यालयः, दिल्ली )

चौखम्बा संस्कृत सीरीज आफिस, वाराणसी-१

१९६९

THE

KASHI SANSKRIT SERIES

190

*****

# LALITAMĀDHAVA-NĀṬAKA

OF

ŚRĪ RŪPA GOSVĀMIN

*With the Commentary of Nārāyaṇa*

Edited with Introduction and critical notes

BY


Prof. BABŪLĀL ŚUKLA, ŚĀSTRĪ,

M. A., Sāhityāchārya,

*Head of Sanskrit Department, Government College,*

NARSINGHGARH ( M. P. )


WITH A FOREWORD BY


DR. RASIKA BIHĀRĪ JOSHĪ, M. A., D. Litt.

*Head of Sanskrit Department,*

*University of Delhi, DELHI.*



THE

CHOWKHAMBA SANSKRIT SERIES OFFICE

VARANASI-1

1969

# समर्पणपत्रम्

येषां महात्मनां दाक्षिण्यं समुपलभ्य मे कर्मजीवनं विकसितं
येषाञ्च कृपामृतैरहं सदैवाभिषिक्तः
तेषामेव प्रतिभा-प्रोद्भासिताशेषभारतानां विद्यारत्नपदमण्डितानां
डॉ० राजवलीपाण्डेय एम० ए०, डी०-लिट्-महाभागानां
जबलपुरविश्वविद्यालयस्योपकुलपतीनां करकमलेषु
दीनस्य मम सारस्वतश्रद्धार्घ्यरूपेण
समर्पितमिदं 'ललितमाधवं' नाम नाटकं
सप्रश्रयम् । —सम्पादकः

# पुरोवाक्

को हि नाम संस्कृतज्ञो न विजानीयात् परमभागवतं विद्वत्तल्लजं श्रीरूपगोस्वामिप्रभुपादमहाभागम् ? को वा श्रीरूपगोस्वामिप्रणीतवैष्णव-रसशास्त्रप्रतिष्ठापयितॄन् भक्तिरसामृतसिन्धूज्ज्वलनीलमणिनाटकचन्द्रिका-प्रभृतीन् ग्रन्थान् पाठं पाठं नान्दोलयेत् स्वकीयं मूर्धानम् । एतेषां विदग्ध-माधवाख्यं नाटकं कस्य वा सहृदयस्य हृदये कन्दर्पकोटिलावण्यस्य वृन्दावन-विहारिणः श्रीकृष्णचन्द्रस्य व्रजलीलारसमधुरिमाणं न प्रादुर्भावयेत् ? श्रीरूपगोस्वामिप्रभुपादप्रणीतं ललितमाधवाख्यं नाटकं नाद्यावधि प्राकाश्य-मभजतेति सत्यं जिह्नेतितमां नश्चेतः ।

साम्प्रतं नाटकमिदमस्मत्प्रियसुहृदैः उज्जयिनीवास्तव्यैः पण्डितप्रकाण्डैः स्वीयग्रन्थराशिकुन्दकुसुमस्तवकसुरभितविद्वद्हृदयान्तरालैः श्रीबाबूलालशुक्ल-शास्त्रिमहाभागैः सम्पादितं सत् प्राकाश्यमलम्भीति भृशं प्रसीदामः । ललितललितं ललितमाधवं श्रीनारायणविरचितसंस्कृतव्याख्यापरिमण्डितं श्रीसम्पादकमहाभागानां भूमिकादिभिः समुल्लसितं वैष्णवमतानुमतनाट्य-शास्त्रीयनिखिललक्षणसमन्वितं सर्वाङ्गपूर्णं महानाटकं भगवतो व्रजलीलो-पाख्यानवलम्ब्य प्रसरीसरीति । ललितमाधवं केवलं स्थालीपुलाकन्यायेना-वलोकयितुं प्रवृत्तेनापि मया यत्र क्वापि व्यापारि स्वकीयं चक्षुस्तत्रैव बलादा-वर्जितान्तःकरणेन तत्रत्यस्तादृशोऽननुभूतपूर्वो रसनिस्यन्दोऽन्वभावि यदेके-नैवाह्ना सर्वथा स्तिमितमानसेन विस्मृतपूर्वव्यापारेण 'पिबत भागवतं रसमालयं मुहुरहो रसिका भुवि भावुकाः' इति श्रीमद्भागवतमहापुराणवचः स्मारं स्मारमाद्योपान्तमपाठि । सर्वेऽपि संस्कृतप्रणयिनो नाटकेऽस्मिन् व्यापारयन्तः स्वकीयां नयनयुगलीं भक्तिरसमन्दाकिन्यामवगाहिष्यमाणा राधाराधितविग्रहस्य नन्दनन्दनस्य परामनुकम्पामनुभविष्यन्तीत्यत्र नास्ति नः सन्देहकणिकापि ।

श्रीमन्तः बाबूलालशुक्लमहोदयाः दिष्ट्या वर्धाप्यन्त सटीकं ललितमाधवं सम्पाद्य प्रकाशयितुम् । सर्वेष्वपि महाविद्यालयेषु विश्वविद्यालयेषु विदग्धानां पण्डितानां भावुकानां भक्तानाञ्च गृहेषु विलसतुतरां ललितमाधवमित्यनन्तकोटिब्रह्माण्डनायकं श्रीकृष्णं राधास्वरूपिणं साञ्जलिबद्धं सभक्त्युन्मेषं प्रार्थयमानः श्रीबाबूलालशुक्लशास्त्रि-महोदयानां सर्वात्मना सर्वाङ्गीणं मङ्गलं कामये ।

'तपस्विनो दानपरा यशस्विनो
मनस्विनो मन्त्रविदः सुमङ्गलाः ।
क्षेमं न विन्दन्ति विना यदर्पणं
तस्मै सुभद्रश्रवसे नमो नमः ॥'

संस्कृतविभागाध्यक्षः
दिल्लीविश्वविद्यालयः

विदुषां विधेयः
**रसिकविहारी जोशी**

# उपोद्घातः

श्रीमद्रूपगोस्वामिप्रभुपादप्रणीतस्य ललितमाधवनाटकस्येदं नारायणप्रणीत-संस्कृतव्याख्यया सहितं संस्करणं विद्वत्तल्लजानां करकमलेष्विदानीं समुपह्रियते। संस्करणमिदं मातृकाचतुष्टयसाहाय्येन पाठान्तराणि समीक्ष्य सुबहु परिश्रम्य च सम्पादितम्। एतस्मिन् संस्करणे सम्प्राप्तानामादर्शपुस्तकानां विवरणन्त्वित्थम्—

(१) भाण्डारकरप्राच्यविद्यासंशोधनमन्दिरात् पुण्यपत्तनस्थात् समुपलब्धं नारायणप्रणीतटीकासहितं देवनागराक्षरलिखितं ८५ पत्रात्मकम् 'अ' संज्ञमेककं सम्पूर्णम्।

(२) भाण्डारकरप्राच्यविद्यासंशोधनमन्दिरस्थमेव नारायणप्रणीतटीकासहितं वङ्गाक्षरलिखितं ९० पत्रात्मकं 'व' संज्ञकमपरं सम्पूर्णञ्च।

(३) कलिकातास्थविक्रमज्योतिप्रकाशनसंस्थानाल्लब्धं वङ्गाक्षरलिखितं ५० पत्रात्मकमपि पाठसाम्याद् 'अ' संज्ञकपुस्तकान्तर्भूतं मूलमात्रं सम्पूर्णञ्च।

(४) कलिकातानगरस्थाद् विक्रमज्योतिप्रकाशनसंस्थानसंग्रहस्थं वङ्गाक्षर एव लिखितं ४८ पत्रात्मकं मूलमात्रं प्राचीनमन्त्यपत्ररहितञ्च 'स' संज्ञकम्।

## श्रीरूपगोस्वामिप्रभुपादः

वृन्दावनस्थगौडीयवैष्णवसम्प्रदायप्रवर्त्तकेषु षट्सु गोस्वामिष्वन्यतमश्चासीद् श्रीमद्रूपगोस्वामिप्रभुपादः तदग्रजः श्रीसनातनगोस्वाम्यपि। तावेतावास्तां श्रीगौरमहाप्रभोः चैतन्यस्य शिष्यौ समसामयिकावपि। एतयोरनुजस्य वल्लभस्यात्मजः जीवगोस्वामी अपि षट्सु गोस्वामिष्वन्यतमः चैतन्यसिद्धान्तप्रख्यापकश्चासीत्। एतेषां गोस्वामिमहाभागानां साहित्यभक्तिशास्त्रादिरचनाजातमस्ति गुणवत्तरं गभीरं गरिमादिभिस्सम्भृतञ्चेति नातितिरोहितं विमर्शकानाम्। सनातनगोस्वामिप्रणीतस्य लघुभागवतामृतस्य स्वविरचितव्याख्यायां श्रीजीवगोस्वामिप्रभुपादैः स्ववंशस्यानुक्रमश्चापि सङ्कलितः वरीवर्ति यत्र च श्रीसनातनगोस्वामिप्रणीतानां श्रीरूपगोस्वामिप्रणीतानां ग्रन्थरत्नानां सूची च सम्प्रदत्ता वर्तते। श्रीसनातनरूपगोस्वामिप्रणीतानां ग्रन्थानामेतादृशी सूची च भक्तिरत्नाकर-ग्रन्थेऽपि सन्दृश्यते या च कृष्णदासकविराजप्रणीतस्य प्रेमविलासाख्यग्रन्थस्य विवरणादपि संवदति। वृन्दावननिवासिनामेतेषां त्रयाणां गोस्वामिपादानां जीवनादिविवरणं भक्तिरत्नाकरप्रभृतिग्रन्थे प्राप्यते तत एतज्ज्ञायते यदेतेषां मूलपुरुषाः कर्नाटकब्राह्मणा ह्यासन् ये परम्परायातं स्वं प्रदेशं परित्यज्य वङ्गदेशे स्वावासं कल्पयाम्बभूवुः।

कर्नाटकेषु आसीत् राजकीयवंशपरम्परायां भारद्वाजगोत्रः सर्वज्ञः जगद्गुरुर्नाम मूलपुरुषः यः खलु त्रिवेदाध्ययनजन्यज्ञानेन कर्नाटकेषु निखिलेष्वपि विश्रुतः! एतस्याभवदनिरुद्धो नामात्मजः जगद्गुरुः यः खलु यजुर्वेदपण्डितो भूत्वा पण्डितमण्डलीषु सम्मानपरम्परामभजत। अनिरुद्धस्याप्यास्तामात्मजौ रूपेश्वरहरिहराभिधौ ज्येष्ठकनिष्ठभार्ययोः। तयोर्मध्ये आद्यः रूपेश्वरः शास्त्राद्यध्ययनेन विद्वन्मण्डलीषु प्रसिद्धिमातेने परमपरः हरिहरस्तु स्वकीयात् स्वच्छन्दाचारात् स्वं ज्येष्ठं भ्रातरं राजपुत्रपदादपि परिच्यावयामास। स्वभ्रात्रा सह कलहायमानः स्वपदात् परिभ्रष्टश्च रूपेश्वरः परम्परायातं स्वावासं स्वदेशञ्च परित्यज्य देशाद् देशान्तरं भ्रममाणः भारतस्य पूर्वप्रदेशे गौडप्रान्ते बङ्गदेशे अनुगङ्गं नवहट्टग्राममासाद्य स्वावासं रचयाम्बभूवाससाद च पद्मनाभाभिधमात्मजमपि तत्रैव।

अथ गच्छति काले रूपेश्वरात्मजः पद्मनाभश्च नवहट्टग्रामे एवैकं यज्ञमाचर्य तत्पुण्यप्रभावाच्चापेदे पुरुषोत्तम-जगन्नाथ-नारायण-मुरारि-मुकुन्दाख्यांश्च पञ्च पुत्रान्। तत्र पञ्चस्वपि पुत्रेषु कनिष्ठतमः मुकुन्दोऽपि ज्येष्ठभ्रातृभिः सह कलहमासाद्य परम्परायातमपि नवहट्टग्रामस्थं स्वावासं परित्यज्य फतेयावादग्रामे स्वकीयं स्वतन्त्रं नवीनञ्चावासं रचयाम्बभूव। मुकुन्दस्याभवदेक एव सूनुः श्रीकुमारो नाम। श्रीकुमारस्यासन् त्रयः सूनवः सनातनः, रूपः, वल्लभश्चेति यस्यानुपम इति चासीन्नामान्तरमपि।

तत्र ज्येष्ठतमः सनातनश्च तदानीं नवद्वीपे सुप्रसिद्धानां वासुदेवसार्वभौमस्यानुजकल्पानां रत्नाकरविद्यावाचस्पतिमहाभागानां शिष्यत्वमासाद्यालभत संस्कृतभाषादिषु दर्शनशास्त्रादिषु च परमां नैपुणीम्। ततश्च लब्धविद्यादिपरिकरोऽसौ गौडदेशाधिपस्य हुशेनशाहस्य सभायां महामन्त्रिपदमधिगत्य शक्तिसम्पत्तिसमुपेतश्च फतेयावादग्रामसमीपवर्तिनि रामकेलिग्रामे स्वानुजैः सहावासं परिकल्पयाम्बभूव। एतस्यैव चानुजो रूपोऽपि क्रमेण शास्त्रादिषु निपुणतां समासाद्य एतस्यैव गौडदेशाधिपस्य सभायां मन्त्रिपदमध्यगच्छत्। मन्त्रित्वकाले च एतयोः साकरमल्लिक—दबीरखासेत्युपाधिरप्यासीत् इति ऐतिह्यविदः, परमेताभ्यामुपाधिभ्यामेतयोः मुस्लिमधर्मस्वीकरणस्य च कल्पनाऽनुचितैव। न चास्मात् एव विवरणात् सिद्ध्यत्येतयोः राज्यसेवाकालसमये मुस्लिमधर्मानुयायिता। भक्तिरत्नाकराद्यनुशीलनादेतदपि ज्ञायते यत्तेषामासीत् म्लेच्छजनसम्पर्कमात्रं राज्यसेवनात् ततो वृत्त्यधिगमाच्च। परं ते ब्राह्मणपरम्परायातं निखिलमाचारजातं कृत्यादिकं च निर्वाहयन्त एव चिरमवसन् रामकेलिग्रामे एव। यत्र च तेषामासीत् नवद्वीपवासिभिः वैष्णवैश्च सहैवाधिकः सम्पर्कः। एतस्यैव च प्रभावादेव चैतन्यदेवसाक्षात्कारात् प्रागपि श्रीविष्णुचरितेऽभिरुचिः श्रीकृष्णलीलानिरूपणपरे प्रबन्धादिरचने चैतेषां प्रवृत्तिरप्यासीदिति ग्रन्थानुशीलनादितोऽवसीयत एव। यतो हि श्रीरूपः चैतन्यमहाप्रभुसाक्षात्कारात् प्रागेव दानकेलिकौमुदीं नाम भाणिकां हंसदूतमुद्धवदूतं नाम खण्डकाव्यञ्च प्रणिनाय। सेयं प्रवृत्तिः कुलपरम्परायातस्य स्वधर्मस्य श्रीकृष्णलीलादिवर्णनपरस्य वैष्णवधर्मस्यानुसरणमभिद्योतयन्तीव वरीवर्ति न तु शाहसम्पर्कादनुज्ञातस्य चाभिनवमुस्लिमधर्मस्यानुयायित्वमिति सुस्पष्टमेव स्यादालोचकानाम्।

एकदा गौडीयवैष्णवधर्मप्रचाराय स्वयमेव श्रीचैन्यदेवः रामकेलिग्रामे समाजगाम। तत्र च श्रीचैतन्यदेवदर्शनात् तेषां प्रवचनादिश्रवणात् च जातवैराग्यौ उभावप्येतौ सनातनरूपदेवौ नितरां प्रभावितौ स्वपरम्परायातमावासं मन्त्रिपदञ्च परित्यज्य तस्यान्तेवासित्वमुररीचक्रतुः। श्रीचैतन्यदेवप्रेरणयैव वृन्दावने निवसन्तौ वैष्णवसिद्धान्तनिदर्शकान् नैकान् स्तोत्रगीतादिप्रबन्धान् काव्यनाटकादिविविधरूपसमन्वितान् ग्रन्थान् विरचयामासुः। एतयोश्चानुजः वल्लभोऽपि कतिपयदिवसापगमेऽग्रजाभ्यां सङ्गतः जातवैराग्यश्च श्रीकृष्णधामावाप्नोत्। वल्लभस्यापि एक एव सूनुरासीद् जीवो नाम। यदा तज्जनकः स्वगृहं परितत्याज तदा सोऽल्पवया आसीत्। एकाकितया बाल्य एव जातवैराग्यः जीवोऽपि स्वगृहं परित्यज्य नवद्वीपे नित्यानन्दाख्येन सुहृदा सह किञ्चित्कालमुवास। ततश्च स वाराणसीयात्रार्थं नवद्वीपात् प्रस्थाय वाराणस्यां श्रीमधुसूदनवासरस्वतीमहाभागानां शिष्यत्वमासाद्य च व्याकरणस्मृतिदर्शनादिशास्त्राणामतिगभीरमध्ययनं निरवर्तयाञ्चकार। यतो हि श्रीमधुसूदनसरस्वतीमहाभागा तदानीं वाराणस्यामद्वितीयाश्चासन् पण्डिताः। ततश्च लब्धशास्त्रादिपरिकरोऽसौ स्वज्येष्ठपितृव्ययोर्निवासं वृन्दावनम् एव समागत्य तयोश्च साहित्यादिनिर्माणकार्ये साहाय्यमाचरन्नैकान् भक्तिशास्त्रादिप्रतिपादकान् ग्रन्थान् प्रणयन् श्रीसनातनगोस्वामिरूपगोस्वामिप्रणीतानां ग्रन्थानां टीकादिनिर्माणकार्यञ्च प्रकुर्वन् चैतन्यसिद्धान्तप्रतिपादनार्थमाजीवनमुद्योगपरोऽजायत। असावपि लब्धगोस्वामिपदः पञ्चाशीतिवर्षाणि यावद्वृन्दावनवासमासाद्य तत्रैव सायुज्यभावमध्यगच्छत्। वैष्णवदिग्दर्शिनीतो एतदपि ज्ञायते यत् जीवस्य विंशतिवत्सरान् गृहे वासः ततश्चोर्ध्वं वृन्दावनवास आसीत्। एतस्य पौषशुक्लतृतीयाऽऽसीज्जन्मतिथिः १५४० शकवत्सरश्च सायुज्यकालः इति।

गौडीयवैष्णवसिद्धान्तप्रचारे तत्प्रतिष्ठापने चैतेषां गोस्वामिप्रवराणामासीत् सुमहद्विक्थमिति नातितिरोहितं भवेत् सचेतसाम्, यतो हि चैतन्यराद्धान्तस्यास्थापनार्थं विहितानामेतेषामेव प्रयत्नानां सुपरिणामोऽयमद्यापि सन्दृश्यते इति सुस्पष्टमेव।

## रूपगोस्वामिप्रणीताः ग्रन्थाः

श्रीजीवगोस्वामिना सनातनप्रणीतस्य लघुभागवतामृतस्य लघुतोषिणीव्याख्यायां सनातनगोस्वामिप्रणीतानां रूपगोस्वामिप्रणीतानां ग्रन्थानाञ्चैकानुक्रमणिकोपन्यस्ता वर्तते। ततश्चैज्ज्ञायते यच्छ्रीमद्रूपगोस्वामिपादैः सप्तदशग्रन्था विरचिता इति। ते च—(१) हंसदूतम् (खण्डकाव्यम्), (२) उद्धवसन्देशः (खण्डकाव्यम्), (३) अष्टादशलीलाच्छन्दः, (४) उत्कलिकावल्लरी, (५) गोविन्दविरुदावली, (६) प्रेमेन्दुसागरः, (७) विदग्धमाधवम् (नाटकम्), (८) ललितमाधवम् (नाटकम्), (९) दानकेलिकौमुदी (भाणिका), (१०) भक्तिरसामृतसिन्धुः, (११) उज्ज्वलनीलमणिः, (१२) मथुरामहिमा, (१३) पद्यावली, (१४) नाटकचन्द्रिकाः, (१५) सङ्क्षिप्तं भागवतामृतम्, (१६) आनन्दमहोदधिः (१७) मुकुन्दमुक्तावलिः। इति।

परं भक्तिरत्नाकरादिग्रन्थेषु श्रीरूपगोस्वामिप्रणीतानामन्येषामपि ग्रन्थानामेव-मुल्लेखः प्राप्यते—(१) श्रीराधाकृष्णगणोद्देशदीपिका (श्रीगणोद्देशदीपिका), (२) प्रयुक्ताख्यातचन्द्रिका, (३) कृष्णजन्मतिथिविधिः (४) अष्टकालिक-श्लोकावलिः च।

## स्थितिकालः

यद्यपि श्रीमद्रूपगोस्वामिप्रभुपादानां जन्मादिविषये नोपलभ्यते प्रामाणिकमैतिहासिकञ्च विवरणं तथापि श्रीचैतन्यदेवेन सह साक्षात्कारस्य केषाञ्चिद् रूप-गोस्वामिविरचितानां ग्रन्थानामन्ते रचनाकालस्योल्लेखाच्च स्थितिकालः सुकर एव। तत्र हंसदूतकाव्ये उद्धवसन्देशकाव्ये च तत्तत्पुष्पिकायां न च प्राप्यते निर्माण-वत्सरसमुल्लेखस्तथापि तत्र श्रीचैतन्यदेवाय विहितायाः नमस्क्रियायाश्चानुपलब्धे-श्चैतद्द्वयं काव्यं चैतन्यसाक्षात्कारपूर्वभावीति निश्चेतुं सुकरम्। एतत्प्रणीता पद्यावल्यपि चैतन्यसाक्षात्कारात् प्रागेव संङ्गृहीता यतश्चास्मिन् सङ्ग्रहे रूप-गोस्वामिप्रणीतेभ्यः नाटकादिभ्यो नोद्धरणानि सङ्गृहीतानि परं भक्तिरसामृत-सिन्धुनाटकचन्द्रिकोज्ज्वलनीलमणिप्रभृतिषु च पद्यावलीपद्यानामुपलब्धेश्चेयं पद्यावल्यपि चैतन्यसाक्षात्कारात् प्रागेव विनिर्मितेति सुस्पष्टं वक्तुं शक्यते। [अस्मिंश्च सङ्ग्रहे चैतन्यदेवाय न च प्राप्यते गुरुभक्तिपुरस्सरं प्रह्वीभावोऽपि ग्रन्थकारस्येत्यतदपि एतस्य चैतन्यदेवसाक्षात्कारात् पूर्वभावमेव प्रकटयतीति सुधीभिरवधारणीयम्।]

परं केषाञ्चिद् रूपगोस्वामिप्रणीतानां ग्रन्थानामन्ते रचनाकालस्योल्लेखोऽपि सम्प्राप्यते। तत्रादौ दानकेलिकौमुदी नाम भाणिका १४१७ शकाब्दे विनिर्मितासीत्। एतन्निर्माणकालश्च चैतन्यसाक्षात्कारात् प्राक् दशवत्सरपूर्वभावीत्यपि प्रामाणिकैरभ्यु-पपत्योररीक्रियते। अस्यामपि भाणिकायां चैतन्यदेवस्य न प्राप्यते नमस्क्रिया ग्रन्थकारस्येत्यपि प्रकृततर्कपरिपोषायैवेति। विदग्धमाधवनाटकस्य निर्मितिः १५८९ विक्रमवत्सरेऽभवदिति ग्रन्थान्तश्लोकैः परिज्ञायत एव।

इदञ्च ललितमाधवं नाम नाटकं ज्येष्ठमासे १४५९ शकवत्सरे रूपगोस्वामिना सुनिर्मितमिति तु सुस्पष्टमेव प्राप्यते एतत्पुष्पिकायाम्।

नाटकचन्द्रिकायाञ्च पद्यावलीविदग्धमाधवललितमाधवादीनामुद्धरणानामुप-लब्धेः भक्तिरसामृतसिन्धूज्ज्वलनीलमणिप्रभृतिग्रन्थानामनुल्लेखाच्चेयं नाटकचन्द्रिका भक्तिरसामृतसिन्धुतः पूर्वभाविनीति सुस्पष्टैव। भक्तिरसामृतसिन्धोश्च रचना १४६३ शाके पूर्णाऽभवदिति चास्य ग्रन्थस्य पुष्पिकातोऽवबुध्यत एव। भक्तिरसा-मृतसिन्धोश्च परिशिष्टभूत एव उज्ज्वलनीलमणिरतोऽस्य निर्माणमपि भक्तिरसा-मृतसिन्धोरनन्तरमेव विहितमिति नातितिरोहितमेव। एतत्प्रणीता उत्कलिका-वल्लरी च पौषमासे १४७१ शकाब्दे विलिखितासीति तत्पुष्पिकातोऽवसीयते।

अत इदमायातं यत् श्रीरूपगोस्वामिप्रभुपादानां १४१७ शकाब्दादारभ्य १४७१ शकाब्दपर्यन्तः यदि साहित्यनिर्माणकालः स्यात्तदा एतेषां महाभागानां जन्मादि-

समयश्च विंशतिवर्षपूर्वभावित्वं स्पष्टेदेव। अतश्च १३९८ शकाब्दनिकट एवैतेषां जन्मवत्सर इति। तत आरभ्य च १४७५ शकवत्सरपर्यन्तं जीवनकाल इति सुस्पष्टमेव भवेत्। स चायं समयः ख्रिस्ताब्दस्य पञ्चदशशतकस्यान्तिमचरणादारभ्य षोडशशतकस्य पूर्वार्द्धपर्यन्त आसीदिति निश्चेतुं सुकरः।

## ललितमाधवम्—नाटकम्

रसोर्मिपरिप्लुतं निखिलनाटकलक्षणसन्धिसन्ध्यन्तरादिसमुपेतं माधुर्यादिनिखिलगुणगणाञ्चितमेतल्ललितमाधवं नाम दशाङ्कं महानाटकं पूर्वकालिकेभ्यः संस्कृतरूपकेभ्यः विशिष्टं स्वरूपं दधद्राजतेतराम्। परमत्र कथावस्तुविषयिण्यपि वर्तते च समधिका सङ्कीर्णता संश्लिष्टता च। नाटकलक्षणाक्रान्ततया खल्वेतस्मिन् या च सन्दृश्यते विस्तीर्ण-सम्वादपरम्परा साऽवश्यं प्रेक्षावतां समुद्वेजनपरैवेति समालोकगणैरवधेया। अत्र च श्रीकृष्णस्य वृन्दावनद्वारिकादिलीलाव्याजेन सम्वृद्धिमत् शृङ्गारस्य शास्त्रीयं प्रस्तुतीकरणमपीष्टं प्रयोजनञ्च आसीद् ग्रन्थकारस्येति चापरो हेतुरित्यपि विभावनीयम्। परमत्र प्रसादमाधुर्यगुणानां ललितपदविन्यासादिरचनारीतीनामपि चोपलब्धेश्चैतन्नाटकं युगपदेव पाण्डित्यसहृदयत्वयोर्निकषत्वमादधद्वर्ततेतरामिति च सुस्पष्टमेव भवेत् सहृदयानाम् एतस्य ग्रन्थकारस्य काव्यनिर्माणपाटवमपीति।

ललितमाधवनाटकस्येदानीं प्रत्यङ्कं कथासारश्च समासतो विलिख्यते—

तत्रादौ देवर्षेर्नारदस्यान्तेवासिनी सान्दीपनिमुनिजननी पौर्णमासी स्वशिष्यायै गार्ग्यै चन्द्रावलीराधिकयोरतिरहस्यसमावृतं विचित्रञ्च जन्मवृत्तान्तं कथयन्ती तयोश्च विन्ध्यगिरेर्दुहितृभावं संसूचयामास। परमेतद्वृत्तान्तमतिरहस्यावृतत्वान्नास्ति विदितं चन्द्रावल्याः नापि राधिकायाः यत् ते परस्परं भगिन्यौ एवेति। सैव बोधयामासात्रैव यत् चन्द्रावली च जातमात्रैव कंसभूपतिविनियुक्तया पूतनयाऽपहृता परं सा दैवात्तस्याश्च हस्ताद्विच्युताऽपतन्नदीप्रवाहे ततश्च तयैव नद्या वाहिता सा विदर्भदेशाधिपेन भीष्मकेनासादिता पुत्रीव संवर्द्धिता च। एतस्या एव रुक्मिणीति भीष्मककृतमभिधानमपि। विन्ध्यस्यैवापरा दुहिताऽपि निहतायाः पूतनायाः क्रोडे गोकुले एव वृषभानुना समासादिता पुत्रीकृत्य च संवर्द्धिता सैव राधिका या खलु पूतनयैव समाहृताऽऽसीदिति। न केवलमस्याः क्रोडे राधिकैवासादिता परमत्रैव पञ्च अपरा अपि कन्यकाः समासादिताः याश्च पद्मा–नाग्नजिती–भद्रा–लक्ष्मणा–शैव्याभिधाः गोपकन्यकारूपा वर्तन्ते, परमेता अपि राजकन्यका एव। श्यामलापरनामधेया भद्रा ललिता अपि एवमेव राजकुलप्रसूता अपि गोपकन्यकाभावेनात्रैव निवसन्ति। या हि विशाखा नाम राधासखी वर्तते सा तु सूर्यतनयायाः यमुनायाश्चावतार एव। अत्र च यद्यपि गोवर्द्धनमल्लाभिमन्युगोपाभ्यां सह चन्द्रावलीराधिकयोरुद्वाहोपि प्रथितः ह्यासीत् परमेतन्निखिलमपि कार्यजातं मायाविवर्तादेव समापादितं यतो हि प्रेक्षणमप्यनयोः पतिम्मन्ययोर्दुर्लभमासीत् स्वभार्ययोरिति।

अङ्कस्यास्य प्रधानं प्रयोजनञ्च चन्द्रावलीराधिकयोश्च श्रीकृष्णे पूर्वानुराग-संवृद्धिः। एतस्मादेव हेतोरस्याभिधानमपि 'सायमुत्सव' इति। अत्र च वर्तते कथापि स्वल्पैव यद्गोकुलोपान्तवर्तिनि वने निखिलमपि दिवसं गाश्चारयन् सन्ध्याकाले प्रत्यावर्तते श्रीकृष्णः स्वभवनम्। सोऽयमनुरागप्रेरितो रहसि चन्द्रावलीं राधिकाञ्च समागन्तुम् उद्यतते परं तच्छ्वश्र्वोः भारुण्डाजटिलयोश्चानवरतविघ्नसमुत्पादनादवधानदानाच्च घटितुं न शक्यते समागमः। अङ्केऽस्मिन् चन्द्रावलीराधिकयोश्च श्रीकृष्णे पूर्वानुरागोत्पादः प्रधानं प्रयोजनमतश्चास्याङ्कस्यापि तदनुरूपमेवाभिधानं 'सायमुत्सव' इति।

अपराङ्के प्रभातप्रायायां रजन्यां गोकुले यदा गोपाङ्गनाः विविधाः लीलाः कुर्वन्त्यश्चासन् तदैव चन्द्रावली सख्योर्विप्रलब्धा-स्वाधीनभर्तृकास्वरूपयोः पद्मा-श्यामलयोरासीदुपस्थितिः। एतस्मिन्नेव रमणीयावसरे कंसराजप्रेपितः शङ्खचूडो नाम दैत्यस्तत्रैव समाजगाम। असौ राधिकायाः श्रीकृष्णेऽभिरतिं शृण्वन् रत्नसिंहासनेऽधिरूढां राधिकाञ्च पश्यन्नेव तस्या ततो हरणे कृतमतिः भूत्वाऽपहरणावसरं प्रतीक्षमाणश्च लतान्तरे आच्छन्नस्तस्थौ।

तदैव ब्राह्मणकुमाररूपमास्थाय राधिकायाः सूर्यपूजनं सम्पादयितुं श्रीकृष्णोऽपि समाजगामाध्यगच्छच्च शङ्खचूडस्य गोकुलगमनप्रवृत्तिमपि। तामिमामुपश्रुत्य यदा निखिला अपि गोपिकाः व्याकुलितास्तदैवावसरं सम्प्राप्य शङ्खचूडः रत्नसिंहासन-सहितामेव राधिकां मायामुद्भाव्यापजहार। श्रीकृष्णोऽपि राधिकापहरणं श्रुत्वा तमनुससार सम्प्राप्य च नियुद्धे एव दुष्टं तमाजघान च। अङ्कोऽसौ शङ्खचूडवध-वृत्तान्तस्य प्राधान्यादेव समाजगाम शङ्खचूडवधेत्याख्यामपि।

तृतीयेऽङ्के कंसभूपतेर्नियोगवशाद् गोकुले श्रीकृष्णं बलदेवञ्चानेतुं मथुरां समाजगामाक्रूरः। तामिमां प्रवृत्तिमुपश्रुत्य मथुरां गच्छन्तौ श्रीकृष्णं बलदेवञ्च रथारूढौ समवलोक्य गोपाङ्गनाः विह्वलाः परिदेवनतत्पराश्चासन्नतीवतद्विरहकातराः तद्वारणतत्पराश्च। परं तत्रासमर्था यदा रथसमेतमेव श्रीकृष्णं दृष्टिपथादतिक्रान्तं विज्ञाय भृशं रुरुदुः सर्वाः एव। तदानीं राधापि विशाखया सह सुवहु विलपन्ती यमुनाक्रोडे आत्मानं सह ललितया निपात्य सूर्यलोकमध्यगच्छत्। राधिकायाश्चेमां प्रवृत्तिमुपश्रुयात्तीव परिखिन्ना ललिता पर्वतशिखरादात्मानं पातयाम्बभूव।

चतुर्थाङ्के च यदा श्रीकृष्णः व्रजे विहृत्य कंसनिधनादिकं सम्पाद्य द्वारिकायां गतस्तदा तत्रापि वृन्दावनस्थाः गोपिका अनुस्मरन् राधिकाचन्द्रावल्योश्चानवाप्त्याऽतीवजातानुतापोऽजायत। इतश्च चन्द्रावल्याः गोकुलेऽवस्थानवृत्तान्तेन च लज्जितस्तद्भ्राता रुक्मी तत्रागत्य तां भगिनीं स्वनगरं कुण्डिनं निनाय। असौ रुक्मी चेदिभूपालेन शिशुपालेन च सह स्वभगिन्याश्चन्द्रावल्यापरनामधेयायाः रुक्मिण्याश्चोद्वाहं कर्तुं कृतमतिः प्रायतत स्वसमक्षं शीघ्रमेव तद्विवाहं सम्पादयितुम्। तदैव च गोकुलेऽवस्थिताः श्रीकृष्णविरहार्त्ताः षोडशसहस्रगोपिका अपि नरकासुरेणा पहृत्य कामरूपदेशस्थे स्वकारागारे निपातिताः। एतस्मात् कारणादजायत निखिलमपि गोकुलं गोपिकाशून्यम्।

द्वारिकायाञ्च पौर्णमासी खिन्नस्य श्रीकृष्णस्य मनो-विनोदनार्थं रूपकं प्रस्तोतुमुपक्रमते यत्र श्रीकृष्णस्यैव वृन्दावनवृत्तान्तमासीत् कथावस्तु। श्रीकृष्णश्चोद्धवादिभिः सम्भूय रूपकमिममवलोकनार्थं सभायामवतिष्ठते। तत्र च नाट्यप्रयोगं पश्यन्नेवासौ सन्दीपितार्तिः चन्द्रावलीमधिगन्तुं समधिकञ्चाभजदौत्सुक्यम्।

पञ्चमाङ्के पौर्णमासी कुण्डिननगराच्चन्द्रावलीहरणाय श्रीकृष्णं प्रेरयति स्वयमपि स्वपुत्रस्यागारगमनं व्याजीकृत्य भीष्मकराजधानीं कुण्डिनपुरीं प्रति प्रतिष्ठते च। इतः श्रीकृष्णोऽपि रुक्मिणीहरणे कृतमतिः नटवेषमास्थाय गरुडेन सह कुण्डिननगरं प्रविश्यावसरं प्रतीक्षमाणस्तस्थौ। यदैव रुक्मिणी देवी चन्द्रभागाराधनाय नगराद् बहिः प्रसरति तदैवान्तः प्रविश्य श्रीकृष्णोऽपि झटिति तामपहृत्य पितुः भीष्मकनरपतेः समक्षं पाणिग्रहणं निर्वर्त्य तदनुमतः पौर्णमासीसाहाय्येन प्रेरितश्च रुक्मिविरोधं सम्भाव्यैव नयति च तां द्वारकामेव।

षष्ठाङ्के प्राधान्येन स्यमन्तकमणिवृत्तान्तः समुपनिबद्धः कविना। यत्र सुप्रीतः सूर्यः •सत्राजिन्नरपतये स्यमन्तकमणिं राधिकाञ्च सत्यभामेत्याख्यां समापाद्य स्वापत्यकृत्तिकां च विधायार्पयाम्बभूव। सूर्यस्य संज्ञाख्यायाश्च भार्यायाः जनकः आसीद्विश्वकर्मा सूर्यश्वसुरः। श्रीकृष्णस्याज्ञयासौ विश्वकर्मा द्वारिकायां नववृन्दावनं निर्ममे। द्वारिकायां श्रीकृष्णस्यान्तःपुरे चन्द्रावली पट्टमहिषीपदमधिष्ठिताऽवर्तन्त। सत्राजिज्जननी तत्रान्तःपुरे नारदनिदेशेन च स्वपुत्रीं सत्यभामां रुक्मिण्या हस्ते तत्संरक्षकत्वे च स्थापयाम्बभूव। सत्यभामा च स्वनिभृतवासाय रुक्मिणीं निवेदयति यतश्चैतस्याः सत्यभामायाश्चान्तःपुरेऽवस्थानस्यावधिरासीन्निश्चिता स्यमन्तकमणिसम्प्राप्तिपर्यन्ता। ततश्च जाम्ववन्तं निर्जित्य तत्सकाशाच्च यावत् स्यमन्तकमणिं समादाय सह जाम्ववत्या नायाति श्रीकृष्णः नार्पयति च स्यमन्तकमणिं तस्यै तदवधि राधिकाभिधानं त्वया गोपनीयं सर्वेभ्य इति भगवता सूर्येणापि पूर्वमेव राधिकायै उपदिष्टमासीत्।

सप्तमाङ्के कविना नाटिकानुकरणविधया सत्यभामाख्यामापन्नायाश्च राधिकायाः समागमाय श्रीकृष्णस्य समधिकः समुद्योगः समुपनिबद्धः। नववृन्दावने विश्वकर्मा खलु निर्ममे राधिकायाश्चैतादृशीं प्रतिमां या खलु प्रवदन्तीवाभासत। एतामेव प्रतिमामवलोकयन् यदा श्रीकृष्णश्चावर्तत नववृन्दावने तदैव सत्यभामायां तदासक्तिमसहमाना चन्द्रावली सहसैव तत्रागत्य राधिकया सह प्रस्ताविते श्रीकृष्णस्य समागमादिसमुद्योगे विघ्नमुत्पादयामास।

अष्टमाङ्केऽपि द्वारिकायामेवानुदिनमेधमानः श्रीकृष्णसत्यभामयोः प्रणयश्चाभिनवया सरण्या समुपनिबद्धः कविना। यत्र सत्यभामां प्रति विद्यमाना रुक्मिण्या सहजा मत्सरिता कविना तथा निबद्धा यथा सा हास्यरसस्यापि अपूर्वामल्पीयसीञ्च सृष्टिं विदध्यात्। सेयं सृष्टिः चन्द्रावलीसत्यभामयोः कृते निर्मितयोः करण्डकयोश्च विपरिवर्तनादेव साधिता कविना यत्र सत्यभामायाः वेषं रुक्मिणी तस्याश्च वेषं सत्यभामा परिधत्ते। अत्रैव विशाखायाः नववृन्दारूपेण पुनर्जन्मापि कविना संसूचितः। तामेतां नववृन्दां श्रीकृष्णः द्वारिकामानयदपि।

नवमाङ्के पद्माभद्राश्यामलादिभिः सह शतोत्तरषोडशसहस्राणां गोपिकानामपि कविना नरकासुर–कारागारतः मुक्तिः द्वारिकायामानयनादिकञ्च समुपनिबद्धम्। भवभूतेरुत्तररामचरितनाटकस्य चित्रदर्शनप्रसङ्ग इवात्रापि गिरिकन्दरायां विश्वकर्मणा निर्मितानां श्रीकृष्णस्य पूर्वलीलानिदर्शकानां चित्राणां सत्यभामायै श्रीकृष्णद्वारा सन्दर्शनप्रसङ्गोऽपि महता संरम्भेण समुपनिबद्धः वरीवर्ति।

दशमाङ्के सत्राजिन्महीपतिः स्यमन्तकमणिं श्रीकृष्णस्यान्तःपुरे पिङ्गलाहस्तेन सत्यभामार्थं प्रेषयति, यं खलु श्रीकृष्णः जाम्बवन्तं निर्जित्य सह जाम्बवत्या आनयत्। श्रीकृष्णः तन्मणिमादाय सत्यभामावलोकनसमुत्सुकः योषिद्वेषमास्थायान्तःपुरं प्रविशति परं सत्राजित्प्रेषितायाः परिचारिकायाश्चानवधानेन तत्रैव श्रीकृष्णस्याभिव्यक्तिरजायत। चन्द्रावली निखिलमपि वृत्तजातं विचार्य श्रीकृष्णेन सह सत्यभामायाः पाणिग्रहणमेव समुचितमिति निश्चित्य च सत्यया सह पाणिग्रहणाय श्रीकृष्णमेव प्रार्थयते। अन्ते तु स्यमन्तकमणिमधिगत्य सत्यभामा यदात्मनः राधिकात्वं चन्द्रावलीभगिनीत्वञ्चाभिधत्ते तदा द्विगुणतरहर्षेण चन्द्रावली राधिकायाः श्रीकृष्णेन सह पाणिग्रहणमहोत्सवं निरवर्तयत। तदानीमेव नन्दयशोदाप्रभृतयः सम्बन्धिनोऽखिलाश्च देवगणा अपि द्वारिकां समागत्यैतस्य महोत्सवस्य द्विगुणां शोभामुपजनयन्तः आनन्दस्य परां कोटिमधिजग्मुः यतो द्वारकेदानीं नववृन्दावनरूपमास्थाय विराजिताऽऽसीदिति।

## नाटक–समीक्षा

रूपगोस्वामिप्रभुपादानां निखिला अपि नाट्यरचनाः गभीरप्रकृतिमापन्ना अपि निखिलसाहित्यलक्षणादिक्रोडीकरणेन गौडीयवैष्णवानां शास्त्रीयां सिद्धान्तसरणिमनुसृत्य च श्रीकृष्णस्य विविधाः लीलाः प्रस्तुवते। अत एव चास्मिन् ललितमाधवे दशाङ्के नाटकेऽपि कविना भागवतादिषु सुप्रसिद्धात् श्रीकृष्णख्यानात् किञ्चित् किञ्चित् परिवर्त्यैव च यत् कथावस्तु समुपनिबद्धं तदपि परम्परायाताद् भक्तिरसशास्त्राद्यनुरोधादेवेति नातितिरोहितं भवेत् समीक्षकाणाम्। एतदप्यत्रावधेयं यल्ललितमाधवादिनाटकरचनानामपरं प्रयोजनमप्यासीद्रूपगोस्वामिप्रभुपादानां यद् भक्तिरसामृतसिन्धु–नाटकचन्द्रिका–उज्ज्वलनीलमणिप्रभृति ग्रन्थानां कृते स्वोपज्ञानामेवोदाहरणपद्यानां निर्माणमपि। यद्यपि एता नाट्यरचनाः नैकपात्रभरविचित्रिताः शास्त्रीयसिद्धान्ताभिव्यञ्जनपराश्च तथापि चैतासां गभीरामर्थसरणिमाश्रित्य वर्तमानं वर्तते काव्यात्मकं पक्षमपि प्रबलमेव। तस्मादत्र भक्तरसिकयोः विद्वद्विदग्धयोश्चापूर्वः खलु समागमः ज्ञायेतानुशीलकैरिति सुधीरं वक्तुं शक्यते।

अस्मिन् हि नाटके निखिलान्यपि लक्षणप्रभृतीनि कविना तथा विचार्यैव च सन्दब्धानि यथैतानि प्रेक्षकाणामनुशीलकानाञ्चाल्पमपि वैरस्यं नोत्पादयेयुः। अत्र च पौराणिककथावैदग्ध्या सह शास्त्रीयलक्षणादीनां निर्वाहः मणिकाञ्चनसंयोग इवापूर्वां खलु शोभामाधत्ते। अस्मिन् हि नाटके क्वचन गभीरा सम्वादसरणिः,

क्वचिच्च चित्रोपमं वर्ण्यानां वर्णनं, क्वचनान्तरभावानां हृदयस्पर्शित्वं, क्वचिच्च शब्दानां नृत्यत्प्रायत्वं बन्धकौशलञ्च दर्शं दर्शमनुभूयते क्वश्चनालौकिकः रसपरिपाकः। यद्यपि संस्कृतनाटकानामुत्तरार्धकाले नाटकादिषु न च प्राप्यतेऽभिनयादीनां समुचितः निर्वाहः, नैव च पात्राणां समुचितं चरितचित्रणादिकमपि परमस्मिन् नाटके न च प्राप्यते एतत्कविकृतमभिनयादिषु शैथिल्यमल्पमपीति। अत्र तु घटनाप्रभृतीनां चातुर्येण सन्निवेशः, वैष्णवसिद्धान्तानां वैष्णवपरम्परायाश्च सुविहितो निर्वाहः, स च स्वयमेव सामान्यनाट्यरचनाभ्योऽस्य विभेदमापाद्यैतस्य गौरवमभिव्यनक्ति।

नाटकस्यास्य नायकः श्रीकृष्णः धीरललितः नायिका च राधिका परकीया मुग्धा च। रुक्मिणी चात्र ज्येष्ठा नायिका परकीया स्वकीया पट्टमहिषी च। प्रतिनायकश्चात्र शङ्खचूडः परिलक्ष्यते। अन्ये च नायकस्य सहायाः। अत्र प्राधान्येन श्रृङ्गाररसः हास्यरौद्रादय रसाश्चाङ्गभूताः, वैदर्भी रीतिः प्रसादमाधुर्यादयश्च गुणाः। इति नायकादिविवेचनम्।

## संस्कृतव्याख्याकारः नारायणः

ललितमाधवस्यास्य खलु समुपलभ्यते नारायणप्रणीता एकैव टीका। श्रूयते च श्रीविश्वनाथचक्रवर्तिप्रणीताऽपि ललितमाधवस्यासीद् एका व्याख्या परं सा नावलोकिताऽस्माभिरप्राप्या चेति। इयं हि नारायणप्रणीता व्याख्या कवेराशयं समीचीनतया प्रकटयन्ती वर्ततेतरामिति निश्चित्यैतयैव सह मण्डितं प्रस्तुतं संस्करणं यथामति सम्पादितम्। एतद्व्याख्याकारः नारायणश्च विश्वनाथचक्रवर्तिभट्टाचार्यान् स्मरति स्वटीकायामतोऽस्य स्थितिकालश्च तदुत्तरभावीति। श्रीमद्विश्वनाथचक्रवर्तिमहोदयः उज्ज्वलनीलमणिटीकानिर्माणवत्सरं १६१८ शकवत्सरं ग्रन्थसमाप्तौ संसूचयति। अतश्च श्रीनारायणः १६१८ शकवत्सरादनन्तरमेव ललितमाधवटीकां रचयामासेति निश्चित्य विरम्यते। नास्य विषये विशेषोऽस्माभिर्ज्ञातः कोऽपि।

## कृतज्ञताप्रदर्शनम्

एतस्य ललितमाधवनाटकस्य संस्करणार्थं पुण्यपत्तनस्थ भाण्डारकरप्राच्यविद्यासंशोधनमन्दिरात् आदर्शपुस्तकद्वयं नारायणटीकासहितं सम्प्राप्तमतो तदध्यक्षाणां डॉ० श्री० ए० डी० पुसलकरमहाभागानां हार्दञ्चैतत्साहाय्यमभिनन्दन् वितरामि तेभ्यश्च सर्वप्रथमं धन्यवादशतानि। कलिकातानगरवास्तव्यसुहृद्वरश्रीघनश्यामदेवडाऽपि मम धन्यवादार्हः यतोऽनेन महाभागेन ललितमाधवनाटकस्य वंगाक्षरलिखितं मूलमात्रमादर्शपुस्तकद्वयं सम्प्रेष्य ममापरिमितं साहाय्यकमाचरितम्।

दिल्लीविश्वविद्यालयस्य संस्कृतविभागाध्यक्षाः सुहृद्वराः श्री डॉ० रसिकविहारीजोशीमहाभागा अपि मम प्रार्थनामुररीकृत्यैतस्य प्राक्कथनं विलिख्य मत्समीपे

प्रेषयामासुरतश्च तेषामप्येतत् उपकृतं संस्मरन् तेभ्योऽपि धन्यवादान् वितरामि। ललितमाधवनाटकसम्पादने प्रोत्साहनपरामर्शप्रदानादिभिर्मम साहाय्यं कुर्वतां संस्कृतविद्यापीठदिल्लीस्थानां प्राध्यापकानां डॉ० रुद्रदेवत्रिपाठिमहाभागानामपि चोपकारभारमिममावहन् कृतज्ञतासंसूचकं तेषामुपकृतं संस्मरामि।

संस्कृतभाषासमुद्धारार्थं विहितसङ्कल्पाश्च चौखम्बासंस्कृतग्रन्थमालाध्यक्षा अपि मम धन्यवादार्हाः प्रस्तुतग्रन्थस्य मुद्रणप्रकाशनादिभारस्योररीकरणात्। एवं सावधानतया संशोधिते पाठान्तरादिपरिष्कृते प्रस्तावनापद्यानुक्रमणादिभिर्यथौचित्यमुत्तेजितेऽप्यस्मिन् ललितमाधवनाटके मन्मतिमान्द्यात् प्रमाददृष्टिदोषेभ्यश्च जातानि स्खलितानि सहजसौजन्येन सुज्ञाः संशोधयन्तु कुर्वन्तु च ममेदं सफलं परिश्रमम्।

अन्ते च विनतजनमनःसन्तोषावहं सर्वेश्वरं भगवन्तमुमापतिं रमापतिञ्च प्रार्थये यदेतन्नाटकं सहृदयहृदयेषु परमां मुदमादधद्विलसन्तुतरामिति।

संस्कृतविभागः,
शासकीय महाविद्यालयः,
नरसिंहगढः ( मध्यप्रदेशः )

विदुषां वशंवदः
बाबूलालशुक्लः शास्त्री

# INTRODUCTION

It gives me a great pleasure in placing in the hands of Sanskrit readers and scholars, this edition of Lalita Mādhava Nāṭaka of Rupa-Gosvāmin along with the old commentary of Nārāyaṇa, for the first time critically edited with the help of four manuscripts—two manuscripts with the commentary of Nārāyaṇa, obtained from Bhandarkar Oriental Research Institute, Poona and two manuscripts obtained from Vikram Jyoti Prakāshana, Calcutta.

## Rūpa Gosvāmin—The Author

Rūpa Gosvāmin was a scion of the Gosvāmin-line and was a poet and rhetorician of high order. The previous history of the family of Rūpa and Sanātana Gosvāmin is given by Śrī Jīva Gosvāmin as below :—

There was a prince of Karṇāṭaka, named Sarvajña Jagadguru of the Bhāradvāja Gotra. His son Aniruddha was also a renowned prince. Of Aniruddha's two sons Rūpeśvara and Harihara, by his two wives, the first became an accomplished scholar, but the second took to evil ways and turned out his elder brother from his principality. Rūpeśvara, who had somewhere in the east, a son, named Padmanābha, who settled down on the banks of the Ganges at Navahaṭṭa Grāma performed a sacrifice ( Yajña ). He had five sons, of whom Mukunda was the youngest. On account of a quarrel with his relatives Mukunda left Navahaṭṭa Grāma and went to Fateyābad. Mukunda had a son named Śrīkumāra. Śrīkumāra appears to have three sons—Amara, Santoṣa and Vallabha, to whom Lord Chaitanya Deva gave the names of Sanātana, Rūpa and Anupama respectively.

The eldest Sanātana appears to have learnt Sanskrit from Ratnākara Vidyāvāchaspati, a scholar of Navadvīpa. He became a high official at the Mohammadan Court of Hussain

Shah of Gauḍa and settled with his brothers at the village Rāmakeli. Rūpa also appears to have held some official position at the same court. By nature of a religious disposition, they were attracted by the Great Reformer Lord Chaitanya Mahāprabhu. They left home to become his disciples.

With regard to the exact dates of Rūpa Gosvāmin no authentic information is available, but from his relation to Śrī Chaitanya Mahāprabhu and from the dates of composition recorded at the end of some of his own works, we can approximately fix the period of his literary activity. These dates would make it clear that the most flourishing period of Rūpa Gosvāmin's literary activity falls between 1533 and 1550 A. D., but it probably began as early as 1495. A. D.

## The works of Rūpa Gosvāmin

The list of seventeen works composed by Śrī Rūpa Gosvāmin mentioned by Śrī Jīva Gosvāmin is as follows :—

( 1 ) Haṃsa Sandeśa ( Kāvya ), ( 2 ) Uddhava Sandeśa ( Kāvya ), ( 3 ) Aṣṭādaśa chhandas, ( 4 ) Utkalikā Vallarī, ( 5 ) Govinda-birudāvalī, ( 6 ) Premendu Sāgara ( all stavas and stotras ), ( 7 ) Vidagdha mādhava ( Nāṭaka ), ( 8 ) Dānakelikalā alias Dānakeli Kaumudī ( Bhāṇikā ), ( 9 ) Lalita Mādhava ( Nāṭaka ), ( 10 ) Bhakti Rasāmṛta Sindhu, ( 11 ) Ujjvalanīlamaṇi, ( 12 ) Mathurā Mahimā ( now included in the Varāhapurāṇa ), ( 13 ) Nāṭaka chandrikā ( Dramaturgy ), ( 15 ) Saṃkṣipta Bhāgvatāmṛita, ( 16 ) Ānanda Mahodadhi and ( 17 ) Mukunda Muktāvali. But the Bhakti–Ratnākara quotes some traditional verses from which four more works are added to the list of Rūpa Gosvāmin's literary efforts. They are :—

( 1 ) Śrī Gaṇoddeśa Dīpikā known as Rādhākṛṣṇa Gaṇoddeśa Dīpikā ( both Bṛhat and Laghu ), ( 2 ) Prayuktākhyāta chandrikā, ( 3 ) Kṛṣṇa janmatithi Vidhi and ( 4 ) Aṣṭa-Kālikaślokāvalī. A work entitled as Smaraṇa Maṅgalaikādaśa is also ascribed to Śrī Rūpa Gosvāmin.

## Lalita Mādhava Nāṭaka

In the three dramatic works of Śrī Rūpa Gosvāmin the Lalita Mādhava Nāṭaka is more extensive being in ten acts, a more complicated in theme and plot, more narrative than dramatic in conception and execution because there is a great deal of dialouges but little incident. The commentary of Nārāyaṇa explains that the object of the drama is to illustrate the main features and characteristics of Samṛddhimat Sambhogaśṛṅgāra defined by Rūpa Gosvāmin himself in his Ujjvalanīlamaṇi. It describes not only the episode of Śrīkṛṣṇa's erotic sports at Vṛndāvana, but also at Mathurā and Dwārikā.

Briefly speaking, the plot of the Lalita Mādhava Nāṭaka is as follows :—

Paurṇamāsī Mother of Sāndīpani Muni and disciple of Devarṣi Nārada muni, reveals the origin of Chandrāvalī and Rādhikā, who, as two daughters of Vindhya Giri, are related as sisters, a fact of which they themselves were unaware. The infant Chandrāvalī, having been stolen by Pūtanā ( Demoness ), an emissary of Kaṃsa-Rāja fell from her hands in a stream and was found by Bhīṣmaka the king of Vidarbha. She was maintained by him as his own daughter. Rukmiṇī and Rādhā's story is ascribed later on to the Sixteen thousand and one hundred Gopīs, who worshipped Kātyāyanī Devī and Kāmākhyā Devī of Kāmrūpa Deśa and received the boon of obtaining Śrīkṛṣṇa as their husband. The other chief Gopīs—Padmā, Nāgnijiti, Bhadrā, Lakṣmaṇā, Śaivyā, Śyāmalā or Madrā and Lalitā, were all originally Princesses, while Viśākhā was the incarnated river Yamunā, daughter of the Sun God. We are also intimated here that there was regular marriage of Chandrāvalī and Rādhikā with Śrīkṛṣṇa, who already being the wives of Gopas, Govardhana and Abhimanyu respectively, is described as the effect of Māyā ( मायाविवर्त्त ). This is also true in the case of other Gopīs, when their so-called husbands, the Gopas could never look upon them as their wives.

The object of the first act is to describe पूर्वराग chiefly with reference to Chandrāvalī and Rādhikā. It depicts the return

ing home of Śrīkṛṣṇa in the evening after tending cows all the day, and his meetings, separately with Chandrāvalī and Rādhikā, but both the meetings are interrupted by the vigilance of their respective mother-in-laws Bhāruṇḍā and Jaṭilā.

The next morning opens in act II with reference to Śrīkṛṣṇa's nocturnal sports with the Gopīs. It thus gives the poet an opportunity to present Padmā and Śyāmalā, the two companions of Chandrāvalī as विप्रलब्धा and स्वाधीनभर्तृका heroines respectively. In the meantime, the demon Śaṃkhachūḍa is sent by Kaṃsa to kidnap Rādhikā, who is reported to have been married to Śrīkṛṣṇa, and who is enthroned as the chief of the Gopīs. She goes to worship the Sun God, Śrīkṛṣṇa in disguise appears as a Brāhmaṇakumāra, the priest to officiate at the cermony, but the little comedy is upset by the reported arrival of Śaṃkhachūḍa demon, whom Śrīkṛṣṇa duly kills behind the scene. This act is called शङ्खचूडवध on account of this incident,

In act III Akrūra comes to fetch Śrīkṛṣṇa and Baladeva to Mathurā, and the sorrows of the various Gopīs at their departure are described, but the main theme of the act, which is called 'Unmatta Rādhikā', consists of Rādhikā's wailing and mad search for Śrīkṛṣṇa. She jumps into the river Yamunā and is lost with Viśākhā, but a voice from divine ( आकाशवाणी ) reveals that she has gone to the other world by passing through the orb of the Sun. Her companion Lalitā also jumps from the top of a hill to kill herself.

The fourth act changes the scene from the joyless Vṛndāvana to Mathurā, and reveals the corresponding sorrows of Śrīkṛṣṇa due to separation from Chandrāvalī, Rādhikā and his beloved Gopikās. In the meantime, Chandrāvalī, who is really Rukmiṇī, has been carried away by her brother Rukmin, who is ashamed of her being brought to Vṛndāvana, in order that she should be suitably married to Śiśupāla, king of Chedi. The sixteen thousand and one hundred Gopikās were also forcibly abducted by the Narakāsura, so that one must imagine that Vṛndāvana was by this time desolated.

In order to entertain sorrowful Śrīkṛṣṇa, Paurṇamāsī arranges the staging of a play which Śrīkṛṣṇa witnesses. It discribes an episode of Śrīkṛṣṇa–Līlā at Vṛndāvana, in which Śrīkṛṣṇa manages to deceive Jaṭilā by assuming the disguise of Abhimanyu, her son and Rādhikā's husband and obtains her permission to sport with Rādhikā.

The act fifth gives a new version of the abduction of Chandrāvalī at Kuṇḍina-Nagara, contrived by the scheme of Paurṇamāsī. Śrīkṛṣṇa accompanied by Suparṇa ( Garuḍa ) enters and abducts Chandrāvalī with the connivance of her father Bhīṣmaka but against the wishes of her brother Rukmin.

The sixth act is concerned mainly with a new version of the winning of Satyabhāmā, daugther of king Satrājita, and recovery of the Syamantaka Jewel ( स्यमन्तकमणि ). Satyabhāmā, we are told before, is transformed Rādhikā, who, along with the Syamantaka Jewel, was given by the Sun God as a reward of devotion to king Satrājita. Viśvakarman, father of Sungod's wife Saṁjñā, builds a Nava–Vṛndāvana at Dwārikā, where Chandrāvalī is installed as the queen and Satyabhāmā is left in her protection. The idea of a token or अभिज्ञान is also introduced, for Satyabhāmā would not have been recognised as Rādhikā until Śrīkṛṣṇa presents her with the Syamantaka Jewel recovered from Jāmbavata, along with his daughter Jāmbavatī ( Lalitā ).

The seventh act describes the secret meeting of Satyabhāmā with Śrīkṛṣṇa, who shows her a speaking image of Rādhikā made by Viśvakarman, but Chandrāvalī, of course, comes upon the scene and interrupts the meeting.

The eighth act continues the love-affairs at Dwārikā in a new atmosphere. This act makes a little comedy of errors based upon Chandrāvalī's jealousy of Satyabhāmā by the exchange of two caskets of ornaments made by Viśvakarman for the two ladies respectively. This is incidentaly related to the rescue of Viśākhā, reborn as a woman ascetic by Śrīkṛṣṇa who brings her to Dwārikā.

The ninth act reports similar rescue of Padmā, Bhadrā and Śyāmalā, as well as sixteen thousand one hundred Gopīs, but its principal theme is the depiction of reminiscent love by Śrī kṛṣṇa's showing to Satyabhāmā a series of cave-frescoes, made by Viśvakarman, bearing on the Vṛndāvana-Līlā.

The tenth and last act describes the denouncement with an alround happy ending. The Syamantaka jewel at last is sent by Satrājita King. Śrīkṛṣṇa enters in the disguise of one of the maids sent by the king with Syamantaka jewel, but the trick is discovered. This brings about Chandrāvalī's recognition of Rādhikā and grace of the situation in the approved style of Nāṭikā. The play ends with reunion affected by the efforts of Nanda, Yaśodā and others who came to Dwārikā, which is now converted into a really new Vṛndāvana.

The dramatic works of Śrī Rūpa Gosvāmin are more serious composition of an entirely different characters, although all of them deal with certain aspects of Śrīkṛṣṇa–Līlā and its mystic erotic possibilities.

The old Kṛṣṇa–legend is modified in the light of the conception of Chaitanya sect and the works are deliberately composed in conformity with its own Rasa Śāstra in order that they may illustrate the hundreds of niceties of its elaborate scheme of devotional sentiment. It is natural that profuse quotations are given from these dramatic works in the treatises—The Bhaktirasāmṛta Sindhu, the Ujjvalanīlamaṇi and the Nāṭaka–Chandrikā of Rūpa Gosvāmin himself by way of illustration. These works are rightly held in high esteem by the devotees of the faith, and marked by considerable and careful literary efforts. They are remarkably brilliant on the poetic side. Normally these dramas are peculiar types of composition in which the Vidagdha and vidvat combine with the Rasika and Bhakta.

In spite of an elaborate effort to bring about a variety by bold and ingenious modification of the simplicity of the original Kṛṣṇa-legend, it will be seen that the construction of the Lalita

Mādhava Nāṭaka complicated as it is, is mostly based on traditional Nāṭaka and Nāṭikā style and does not reveal so much of originality. Rūpa Gosvāmin certainly possesses considerable literary skill, and it is always elegant, often picturesque and sometimes touching. The poverty of action and weakness of characterisation are characteristics common enough in the latter decandent Sanskrit dramas, but Rūpa Gosvāmin, out of respect for texts and traditions, writes more for literary and theological than really to dramatic effects. The central idea of the superiority of the Vṛndāvana Līlā, no doubt, supplies a dramatic motive, but in spite of the unity of action which imparts, the works are really a series of narrative episodes loosely strung together by a semblance of dramatic form. Here, as elsewhere, most of the important incidents are reported instead of being represented.

## Acknowledgements

I feel a great pleasure in putting on record my sincere thanks to the authorities of the Bhandārkar Oriental Research Institute, POONA for sending me two copies of the manuscripts of the Lalitamādhava Nāṭaka with Nārāyaṇa's commentary in their possession. I also thank Shree Ghanshyāma Dās Deora of Vikram Jyoti Prakāshana, Calcutta for arranging the two mss of Lalita Mādhava Nāṭaka in the Bengali script.

I am graetful to Dr. Rasikabihārī Joshi, Head of Sanskrit Department, University of Delhi for contributing an introductory preface of the Lalitamādhava Nāṭaka. I am also grateful to Dr. Rudradeo Tripathi, M. A., Ph D. Sāhityāchārya of All India Sanskrit Vidyāpeeṭha, Delhi for many useful suggestions and encouragement.

I am deeply grateful to Shri Vithal Dasjee and Shri Mohandas jee Gupta, proprietors of the Chowkhamba Sanskrit Series for including the Lalitamādhava in their Valuable series and to Pandit Rāmchandrajee Jhā, Vyākarṇāchārya for co-operation in reading the proofs and arranging the printing of the work. Though, utmost care has been taken in

editing the text, it is quite possible that through oversight etc., there might have been a few mistakes, here and there, for which the learned readers will kindly forgive and extend their valuable cooperation. Their suggestions on this publication will always be welcome and will cordially be considered in the next edition.

Department of Sanskrit
Government College,
Narsinghgarh (M.P)

**Babulal Shukla Shastri**

# पात्राणां परिचयः

## तत्र पुरुषाः

| | |
|---|---|
| सूत्रधारः | नाटकीयकथावस्तुप्रस्तावकः प्रधानो नटः । |
| श्रीकृष्णः | चरितनायकः । |
| मधुमङ्गलः | सान्दीपनिमुनितनयः श्रीकृष्णस्य नर्मसचिवः । |
| रामः | श्रीकृष्णस्य ज्येष्ठो भ्राता बलदेवः । |
| उद्धवः | श्रीकृष्णस्य प्रधानसचिवः । |
| भीष्मः | चन्द्रावली-जनकः । |
| अभिमन्युः | जटिलातनयः गोपः राधिकाभर्त्ता च । |
| सुनन्दः | श्रीकृष्णनिकटे रुक्मिणीपत्रवाहकः विप्रः । |
| क्रथकैशिकौ | श्रीकृष्णपक्षीयौ भूपालौ । |
| सुपर्णः | श्रीकृष्णस्य वाहनः पक्षिराजः गरुडः । |
| गोवर्द्धनः | भारुण्डातनयः गोपः चन्द्रावलीभर्तृत्वेन प्रसिद्धः । |
| नारदः | देवर्षिः । |
| शङ्खचूडः | कंसपक्षीयः दैत्यः । |
| विश्वकर्मा | सूर्यश्वसुरः श्रीराधादीनां मातामहः । |
| कञ्चुकी | अन्तःपुरपरिचारकः । |

## स्त्रियः

| | |
|---|---|
| नटी | सूत्रधारभार्या । |
| राधिका | विन्ध्यतनया सत्यभामापरनामधेया सत्राजित्तनया च । |
| चन्द्रावली | विन्ध्यतनया रुक्मिण्यपरनामधेया भीष्मकतनया च । |
| पद्मा | नग्नजित्तनया । |
| ललिता | राधिकायाः प्रियसखी । |
| विशाखा | श्रीयमुनावताररूपा श्रीराधायाः सहचरी । |
| माधवी | चन्द्रावल्याः विश्वस्ता सखी । |
| नववृन्दा | राधिकायाः सहचरी । |

| | |
|---|---|
| वकुला | श्रीराधिकायाः सखी परिचारिका च । |
| वृन्दा | वृन्दावनदेवी राधिकायाः प्रियसखी च । |
| पौर्णमासी | सान्दीपनिमुनेर्जननी । |
| गार्गी | गर्गमुनेः आत्मजा । |
| कुन्दलता | उपनन्दपुत्रस्य सुभद्रस्य वधूः । |
| यशोदा | श्रीकृष्णाम्बा नन्दपत्नी । |
| रोहिणी | नन्दस्यापरा भार्या बलदेवजननी च । |
| जटिला | अभिमन्युजननी श्रीराधायाः श्वश्रूः ( गोपिका ) । |
| मुखरा | जटिलायाः सहचरी । |
| भारुण्डा | गोवर्द्धनजननी श्रीचन्द्रावल्याः श्वश्रूः ( गोपिका ) । |
| वृद्धा | यशोदायाः सहचरी । |
| शरद् | पौर्णमासी सहचरी ऋतुस्वरूपा च । |
| सुकण्ठी | चन्द्रावल्याः सेविका । |
| मालती | अन्तःपुरपरिचारिका । |
| तुलसी | अन्तःपुरपरिचारिका । |
| पिङ्गला | सत्यभामायाः सखी अन्तःपुरपरिचारिका च । |



श्रीरूपगोस्वामिप्रभुपादप्रणीतं

# ललितमाधवं नाटकम्

## नारायणप्रणीतया व्याख्यया समुद्भासितम्

## प्रथमोऽङ्कः

नान्दी—

सुररिपुसुदृशामुरोजकोकान् मुखकमलानि च खेदयन्नखण्डः ।
चिरमखिलसुहृच्चकोरनन्दी दिशतु मुकुन्दयशःशशी मुदं वः ॥ १ ॥

---

वन्देऽहं श्रीगुरोः श्रीयुतपदकमलं श्रीगुरून् वैष्णवांश्च
श्रीरूपं साग्रजातं सहगणरघुनाथान्वितं तं सजीवम् ।
साद्वैतं सावधूतं परिजनसहितं कृष्णचैतन्यदेवं
श्रीराधाकृष्णपादान् सहगणललिताश्रीविशाखान्वितांश्च ॥ १ ॥
स्वार्थाभिसारमिदमित्यनुभूयपूर्वैस्तैस्तैर्महद्भिरपि शश्वदुपास्यपादैः ।
यत्पादपद्मरज एव हि कामितं तंश्रीरूपमेव शरणं मम यातु चेतः ॥२॥

नाटकादौ श्रीकृष्णस्य वृन्दावनक्रीडावर्णनं प्रयोजनम् । आह—यत्तु रामादिवद्वर्त्तितव्यं न क्वचिद्रावणादिवदित्येष [1]मुक्तिधर्मादिपराणां नय इर्यते तत्तु नात्र । 'वर्त्तितव्यं शमिच्छद्भिर्भक्तवन्नतु कृष्णवत् । इत्ययं भक्तिशास्त्राणां तात्पर्यस्य विनिर्णयः ॥' न तु कृष्णवदिति प्रकटयति—नैतदिति ।

"नैतत्समाचरेज्जातु मनसापि ह्यनीश्वरः ।
विनश्यत्याचरन्मौढ्याद् यथा रुद्रोऽब्धिजं विषम् ॥"

किन्तु भजनोपायः कर्तव्यः । यथा सप्तमस्कन्धे—

'तस्मात्केनाप्युपायेन मनः कृष्णे निवेशयेत् ।'

तत्रापि भक्तवद्वर्त्तितव्यमित्यत्र गोपीनां भावस्य [2]कामरहितत्वात् सर्वमाधुर्य-

---

१. मुक्तिपराणाम्—अ. । २. राहित्यात्—ब. ।

अपि च—

सारस्वाच्च । तथा ( च ) श्रीमदुद्धवादिभिरपि महाभागवतैः 'आसामहो चरण-रेणुजुषामहं स्याम्' इत्यादिनोक्तं तस्यैव 'श्रेष्ठत्वमिति च । केषाञ्चिदियं लीलैव साधनं जीवनञ्च । ²तथा हि—

"वेदाः पुराणं काव्यञ्च प्रभुर्मित्रं प्रियेव च ।
मुहुः प्रबोधयत्यर्थं त्रिवृद्भागवतं परम् ॥"

इति श्रीकृष्णभक्तिसाधने साध्येषु च सुसाध्योऽयमुपाय इति । श्रीकृष्णस्य गोकुलाङ्गनाकुलमन्तरेण नान्यत्रानुरागः क्वचिदपि । यत्तु ³महिषीवृन्दे दृश्यते तास्त्वेता एव । तथा च स्कन्दपुराणे—

"कैशोरे गोपकन्यास्ताः यौवने राजकन्यकाः ।
भूत्वा देवाङ्गनाः सर्वा जनयन्ति हरेर्मुदम् ॥"

इति कृष्णस्य तद्वल्लभानाञ्च निविडप्रेमसिन्धुं प्रकटयन् श्रीभागवतोक्तस्य 'कृष्णस्तु भगवान् स्वयम्'इत्यादिनैश्वर्यादिभिः षड्भिः परिपूर्णस्य स्वयं भगवतः श्रीकृष्णस्य 'मल्लानामशनिर्नृणां नरवरः स्त्रीणां स्मरो मूर्तिमान्' इत्यादिश्री-भागवतपद्येन तथा 'रसो वै स" इत्यादिश्रुतिवाक्येन च तस्याञ्चितशक्त्या यत्सर्वं रसमयत्वं तेषु मध्ये 'स्त्रीणां स्मरो मूर्तिमान्' इत्यनेन शृङ्गाररसास्वादकेन तेन ताभिः सह विभावानुभावसात्त्विकसञ्चारिभावैः परिपुष्टस्य रसस्य सम्भोग-विप्रलम्भाभ्यां सम्यगास्वादितचरप्रकारस्य दिग्दर्शनार्थं ललितो माधवो यत्रेति व्युत्पत्त्योदात्तादिनायकगुणं परित्यज्य ललितनायकगुणस्यैवात्र ग्रन्थे प्रकटनाल्ललित-माधवाख्यं ⁴मिश्रेतिवृत्तयुग्नाटकं चिकीर्षुस्तथा च—

'इतिवृत्तं भवेत्ख्यातं क्लृप्तं मिश्रमिति त्रिधा ।
शास्त्रप्रसिद्धं ख्यातं स्यात् क्लृप्तं कविविनिर्मितम् ॥
तयोस्सङ्कुलता मिश्रम्' ( ना० चं० । १२ ) इति ।

एवं नाटकचन्द्रिकायां नाटकलक्षणम् । यथा—

दिव्येन दिव्यादिव्येन तथा दिव्येन वा युतम् ।
धीरेणाढ्यमुदात्तेन कृष्णश्चेल्ललितेन च ॥
शृङ्गारवीरान्यतरमुख्यं रम्येतिवृत्तयुक् ।
प्रस्तावनान्तसम्बद्धं सन्धिसन्ध्यङ्गसङ्गतम् ॥
सन्ध्यन्तरैकविंशत्या षट्त्रिंशद्भूषणैर्युतम् ।

---

१. श्रैष्ठ्य–च. ।
२. यथा हि–अ. ।
३. महर्षिवृन्दे–अ. ।
४. मिश्रेतिवृत्तम्–अ. ।

पताकास्थानकैर्युक्तमर्थोपक्षेपकैस्तथा ॥
भाषाविधानसंयुक्तं सत्काव्यगुणगर्भितम् ।
नाटकं दोषरहितं सर्वानन्द प्रदायकम् ॥ ( ना० चं० । ३–६ )

इति । तत्र नायकः—

स्वयं प्रकटितैश्वर्यो दिव्यः कृष्णादिरीरितः ।
दिव्योऽपि नरचेष्टत्वाद्दिव्यादिव्यो रघूद्वहः ॥
अदिव्यो धर्मपुत्रादिरेषु कृष्णो गुणाधिकः ।
नायकानां गुणास्सर्वे यत्र सर्वविधाः स्मृताः ॥
लालित्योदात्तयोरत्र व्यक्त्या शोभाभरोऽधिकः ।
तेनैव नायको युक्तः शृङ्गारोत्तरनाटके ॥
यत्परोढोपपत्योस्तु गौणत्वं कथितं बुधैः ।
तत्तु कृष्णञ्च गोपीश्च विनेति प्रतिपद्यताम् ॥ (ना० चं० । ७–१० )

तथा चोक्तम् । रसविलासे—

नेष्टा यदङ्गिनि रसे कविभिः परोढा
स्तद्गोकुलाम्बुजदृशाङ्कुलमन्तरेण ।
आशंसया रसविधेरवतारितानां
कंसारिणा रसिकमण्डलशेखरेण ॥ ( ना० चं० पृ० १० )

ग्रन्थकर्तुः स्वाक्षरपुस्तके सर्वजनबुद्ध्यगम्याः स्वाक्षरटीकाः सङ्क्षिप्ताः प्राप्य दुरूहाद्भुतानन्तध्वनिगुणालङ्कारभावार्थसिद्धान्तादिमयस्यास्य नाटकग्रन्थस्य टीकाकरणे प्रवृत्तस्सर्वथैवाज्ञोऽहमिति बिभेमि तथापि सच्चरणं शरणं कृत्वा प्रवृत्तस्य मम सन्त एवावलम्बनम् । तथाहि—

इयमज्ञकृता टीका भक्तैः शोध्या कृपालुभिः ।
इति निश्चित्य मनसि मयात्र साहसः कृतः ॥ इति ।

राधामाधवप्रेमापारसरोवरामलहंसः कविः प्रथमं विघ्ननिरासार्थं आशीरन्वितां नान्दीं शंसति—सुररिपुसुदृशामिति । इयन्तु द्वादशपदा नान्दी मङ्गलार्थपदोज्ज्वला च । नान्दीलक्षणं यथा नाटकचन्द्रिकायाम्—

प्रस्तावनायास्तु मुखे नान्दी कार्या शुभावहा ।
आशीर्नमस्क्रियावस्तुनिर्देशान्यतमाश्रिता ॥
अष्टाभिर्दशभिर्युक्ता किं वा द्वादशभिः पदैः ।
चन्द्रनामाङ्किता प्रायो मङ्गलार्थपदोज्ज्वला ॥
मङ्गलं चन्द्रकमलचकोरकुमुदादिकम् । ( ना० चं०।१५–१६ )

प्रसिद्धः शशी चन्द्रः कोकान् कमलानि च खेदयन् मुकुन्दस्य यशोरूपः

अष्टौ प्रोद्य दिगङ्गना घनरसैः पत्राङ्कुराणां श्रिया
कुर्वन्मञ्जुलताभरस्य च सदा रामावलीमण्डनम् ।
यः पीने हृदि भानुजामतुलभाञ्चन्द्राकृतिञ्चोज्वलां
रुन्धानः क्रमते तमत्र मुदिरं कृष्णं नमस्कुर्महे ॥ २ ॥

( नान्द्यन्ते सूत्रधारः )

सूत्रधारः—अलमति विस्तरेण । ( समन्तादवलोक्य ) हन्त सन्तत-

---

शशी । सुररिपुसुदृशामसुरस्त्रीणां स्तनरूपचक्रवाकान् मुखकमलानि च तासां पत्यादिवधश्रवणादिना खेदयन् वो युष्माकम् मुदं दिशतु । शशी कीदृशः ? अखिलेति । चन्द्रपक्षेऽखिलसुहृत्स्वरूपा ये चकोरास्तान् । यशःपक्षे शोभनानि हृदयानि येषान्ते सुहृदस्साधव एव चकोरास्तानानन्दयितुं शीलं यस्य सः । अखण्डः पूर्णः ॥ १ ॥

पूर्वश्लोके आशीर्वादान्वितां नान्दीमुक्त्वा नमस्क्रियान्वितां वस्तुनिर्देशान्विताञ्च नान्दीमाह—अष्टौ प्रोदयेति । वस्त्वत्र गोपाङ्गनासु राधाचन्द्रावल्योश्च कृष्णस्यानुरागः तासां कृष्णे चानुरागः । यः कृष्णो मेघश्च । तत्र कृष्णपक्षे घनरसैः श्रृङ्काररसैः अष्टौ दिगङ्गनाः प्रोदय प्रकर्षेण उदय । उन्द् सेचने धातुः । अष्टौ दिगङ्गनाश्चात्राष्टदलकमलकर्णिकारवासादिस्थस्य श्रीकृष्णस्याष्टदिग्वर्तिन्यो गोप्यः । 'समस्तस्यासमस्तेन नित्यापेक्षेण सङ्गतिः' इति न्यायेन अष्टौ या दिशस्तास्वंगना इति योजना । अभिसारिकाद्यष्टविधाः गोप्यः । अभिसारिकादयो यथा—

"अथाभिसारिका वासलज्जाप्युत्कण्ठिता तथा ।
विप्रलब्धा खण्डिता च कलहान्तरिता परा ॥
प्रोषितप्रेयसी प्रोक्ता तथा स्वाधीनभर्तृका ।
इत्यष्टौ नायिकाभेदाः रसतन्त्रे प्रकीर्तिताः ॥"

मेघपक्षे—पूर्वाद्यष्टदिग्रूपा अङ्गना घनरसैर्जलैः सिक्त्वा पत्राङ्कुराणां श्रिया गण्डादौ चित्रविशेषाणां मञ्जुलताभरस्य च श्रिया आरामावलीनां पुष्पोद्यानश्रेणीनां मण्डनं कुर्वन् । पीने हृदि अतुलाऽऽभा दीप्तिर्यस्यास्तां वृषभानुजां राधामुज्ज्वलां चन्द्राकृतिं चन्द्रावलीं यूथेश्वरीञ्च । पक्षे-अतुला चासौ भावेति तथाभूतां भानुजां सूर्यप्रभां चन्द्राकृतिं चन्द्रञ्च रुन्धानः आवृण्वानः सन् क्रमते वर्तते । वृत्तिसर्गतायनेषु क्रमः आत्मनेपदत्वम् । तायनं स्फीतता । अत्र क्रमधातोर्वर्तनाद्यर्थत्रयमेव संगतं स्यात् । तं मुदिरं कामुकं कृष्णं पक्षे कृष्णवर्णमेघम् । 'मुदिरः कामुके मेघे हर्षणे च निगद्यते' इत्यमरः ॥ २ ॥

नान्द्यन्ते सूत्रधारो मुख्यनट आह इति शेषः । किमाह—सन्ततः सदा श्री-

वृन्दाटवीनिकुञ्जवेदिकानिवासदीक्षारसस्य स्फुरदुद्दण्डपुण्डरीकमण्डलीमण्डितब्रह्मकुण्डतीरोपान्तस्थलीमहाभौमिकस्य भगवतो गोपीश्वरतया प्रसिद्धस्य चन्द्रार्द्धमौलेः स्वप्नाविर्भूतमादेशमासाद्य दीपावलीकौतुकारम्भे गोवर्द्धनाराधनाय राधाकुण्डरोधसि माधवमन्दिरस्य पुरतः सङ्गतानि वैष्णववृन्दानि स्वप्रबन्धेन ललितमाधवनाम्ना नाटकेनाहमुपस्थातुं पर्युत्सुकोऽस्मि। तदभीष्टदैवतमभ्यर्थयिष्ये।

निजप्रणयितासुधामुदयमाप्नुवन् यः क्षितौ
किरत्यलमुरीकृतद्विजकुलाधिराजस्थितिः।
स लुञ्चिततमस्ततिर्मम शचीसुताख्यः शशी
वशीकृतजगन्मनाः किमपि शर्म विन्यस्यतु॥ ३॥

(आकाशे) किं ब्रवीषि? हन्त, कथमत्र [1]महासाहसे कृताध्यवसायोऽसीति। भोः सत्यमिदं विदाङ्करवाणि तथापि परवानस्मि। श्रूयताम्—

क्वेयं सभा गुणवती बत मुग्धरूपः
क्वाहं जितोऽस्मि गुरुणा गुरुगौरवेण।

---

वृन्दावनकुञ्जस्थवेदिकायां निवासे या दीक्षा तत्र रसज्ञस्य प्रफुल्लश्वेतकमलसमूहमण्डितब्रह्मकुण्डस्य निकटवर्तिभूमौ महाभौमिकस्याध्यक्षस्य गोपीश्वरनाम्नो महादेवस्यादेशं प्राप्य ललितमाधवनाम्ना नाटकेन [2]वैष्णववृन्दान्युपस्थातुमाराधयितुं पर्युत्सुकोऽस्मि।

निजेति। यः क्षितावुदयमाप्नुवन्निजप्रणयितासुधां प्रणयोऽस्यास्तीति प्रणयि तस्य भावः प्रणयिता सैव सुधा तां प्रणयाख्यप्रेमसुधामित्यर्थः। किरति स शचीसुताख्यः शशी किमपि प्रेमाख्यं शर्म सुखं विन्यस्यतु। उरीकृतं स्वीकृतं द्विजकुलेष्वधिरधिकं राजते स्थितिर्मर्यादा यस्य तथा भूतत्वं द्विजराजत्वं येन सः। लुञ्चिता नाशिता तमसोऽन्धकारस्य पक्षे अविद्यायाश्च ततिः समूहो येन सः॥ ३॥

आकाशे किं ब्रवीषीति। आकाशभाषितमेतत्। तल्लक्षणं यथा—(नाटकचन्द्रिकायाम्)

अन्येनानुक्तमप्यन्यो वचः श्रुत्वैव यद्वदेत्।
इति किं भणसीत्येतद् भवेदाकाशभाषितम्॥ (ना० चं०।२२८)

विदाङ्करवाणि जानामि। परवानधीनः।

क्वेयमिति। गुणवतीयं सभा क्व। मुग्ध रूपनामाहं क्व। मुग्धो मूढः। पक्षे

---

१. महासाहसेन—अ०। २. वैष्णवानि उपस्थातु—ब०।

आद्या ममाद्य शरणं शरणङ्गतानां
दत्तोत्सवस्य करुणां करुणार्णवस्य ॥ ४ ॥

( पुरस्तादवलोक्य ) हन्त भोः, कृष्णपादारविन्दभृङ्गाः प्रसादं विधत्त। भवद्विधानामेव कृपावलम्बनेनात्र निरातङ्कमुद्यतोऽस्मि । यतः–

शान्तश्रियः परमभागवतास्समन्ताद्
वैगुण्यपुञ्जमपि सद्गुणतां नयन्ति ।
दोषावलीमपरितापकतामृदूनि
ज्योतींषि विष्णुपदभाञ्जि विभूषयन्ति ॥ ५ ॥

( इति मूर्द्धन्यञ्जलिमाधाय )

वक्तुं पारमहंस्यपद्धतिमिह भक्तिङ्गतानां हि यः
सिद्धानां भुवने बभूव सनकादीनां तृतीयः पुरा ।
साङ्गं भक्तिरसं रहस्यमधुना भक्तेषु सञ्चारय-
न्नेकः सोऽवततार विश्वगुरवे पूर्णाय तस्मै नमः ॥ ६ ॥

तदहं निरवद्यसंगीतविद्यायां विद्याधरीं माननीयां नटवृन्देश्वरीं वृद्धां रङ्ग सन्निधापयितुमिच्छामि ।

---

मुग्धः सुन्दरः । 'मुग्धः सुन्दरमूढयो'रिति धरणिः । अत्यन्तासम्भावनायां क्व-द्वयम् । तदपि गुरौ यो गौरवस्तेन । कीदृशेन ? गुरुणातिशयेन । जितोऽस्म्यधी-नोऽस्मि । तथा च गुरोराज्ञाधीनस्सन् प्रवृत्तोऽस्मि । तत्र किं शरणं तत्राह-शरण-ङ्गतानां दत्तोत्सवस्य यतः करुणाऽर्णवस्य गुरोर्मम सम्बन्धे आद्या या करुणा सैवाद्य शरणं रचिता । 'शरणं गृहरक्षित्रो'रित्यमरः । आदौ करुणाङ्कृत्वा या पश्चादाज्ञा कृता सैव शरणमित्यर्थः ॥ ४ ॥

अत्र ललितमाधवाख्यनाटककरणे निरातङ्कं निश्शङ्कमुद्यतोऽस्मि ।

शान्तेति । यतो हेतोर्भागवता वैगुण्यपुञ्जं सद्गुणतां नयन्ति ज्योतींषि नक्षत्राणि कर्तृणि । दोषावलीं रात्रिपङ्क्तिम् । भक्ताः दोषश्रेणीञ्च विभूषयन्ति । यथा नक्षत्राण्यप्यपरितापकतया[1] शीतकिरणतया मृदूनि तथा भक्ताः शान्तश्रियः । ज्योतींष्यपि विष्णुपदभाञ्जि । विष्णुपदोऽत्राकाशः । तथा भक्ताश्च विष्णोश्चरण-भाजः । अर्थश्लेषेण शब्दश्लेषेण चोपमा ॥ ५ ॥

वक्तुमिति । य इह भुवने पारमहंस्यपद्धतिं वक्तुं सिद्धानां सनकसनन्दन-सनातनसनत्कुमाराणां मध्ये तृतीयः सनातननामा पुरा बभूव । स एकः सनातनः भक्तिरसं भक्तेषु सञ्चारयन् सञ्चारयितुमवततार ॥ ६ ॥

माननीयां वृद्धां मुखरां रङ्गे रङ्गभूमौ सन्निधापयितुमहमिच्छामि यतो निर-

---

१. ण्यप्यपरितापक–अ० ।

( प्रविश्य नटी )

नटी—वच्छ, रंगमंडलसंविहाणे संपदं अणहिणिइट्ट मणीसह्मि।
[वत्स, रङ्गमंडलसंविधाने साम्प्रतमनभिनिविष्टमनीषास्मि।]

सूत्रधारः—आर्ये, किमित्येवमुच्यते। पश्य पश्य।

चकास्ति शरदुत्सवः स्फुरति वैष्णवानां सभा
चिरस्य गिरिरुद्गिरत्यमलकीर्तिधारां हरेः।
किमन्यदिह माधवो मधुरमूर्तिरुद्भासते
तदेष परमोदयस्तव विशुद्धपुण्यश्रियः ॥ ७॥

नटी—वच्छ, महाणुहाअजणव्वसणसंभूदा एसा मह आदंगसिंखला ण क्खु लोअचरिआसाहारणी। [वत्स, महानुभावव्यसनसम्भूतैषा मे आतङ्कश्रृङ्खला न खलु लोकचर्यासाधारणी।]

सूत्रधारः—आर्ये, नियतमनैकान्तिकानि भवन्ति महानुभावानां व्यसनानि। तथा हि—

विपिनं यदि वा दिगन्तराणि त्रिदिवं वा गमितं रसातलं वा।
स्वपदान्तिकमानयत्यवश्यं भगवान् भक्तजनं न मोक्तुमीष्टे ॥ ८॥

---

वद्यसङ्गीतविद्यायां विद्याधरीमनिन्द्यसङ्गीतविद्यायां निपुणामिति।

चकास्तीत्यादिना प्रस्तुत तव विशुद्धपुण्यश्रियः परमोदय एष चिरस्य चिरकालं व्याप्य गिरिर्हरेरमलकीर्तिधारामुद्गिरति। अत्र प्रस्तावनायां भारतीवृत्तिरुचिता। सा चतुरङ्गिका। 'प्ररोचनामुखे चैव वीथीप्रहसने तथेति'। तत्र 'चकास्ति शरदुत्सव' इति प्ररोचनेयम्। यथा—( नाटकचन्द्रिकायाम् )

"देशकालकथानाट्यसभ्यादीनां प्रशंसया।
श्रोतॄणामुन्मुखीकारः कथितेयं प्ररोचना॥" ( ना० चं०।१९ )

अत्र शरदिति कालस्य, वैष्णवानामिति सभ्यानां, गिरिरित्यादिना देशस्य, अमलकीर्तिधारामित्यनेन कथायाः, किमन्यदित्यादिना नाट्यस्य नायकस्य च प्रशंसया श्रोतॄणामुन्मुखीकरणरूपा प्ररोचना उपस्थिता कुतस्ते मनसोऽनभि-[1]निवेशतेति भावः ॥ ७॥

महानुभावानां व्यसनानि नियतं[2] सदानैकान्तिकानि अनित्यानि भवन्ति। अत्र भगवतो वात्सल्यमेव हेतुमाह—विपिनमिति। भगवान्। भक्तजनं स्वपदान्तिकमवश्यमानयतीत्यनेन मोक्तुं त्यक्तुं नेष्टे इत्यनेन च विपिनादिषु स्थितिरूपव्यसनमनित्यमतस्तवाप्यातङ्कश्रृङ्खला न स्थिरतरेति ॥ ८॥

---

१. नभिनिदेश—अ०। २. नियतमनैकान्तिका—अ०।

नटी—पुत्त, सच्चं भणसि। तहवि सिणेहाणं क्खु विवेअहारिणो पइत्ति त्ति मुद्धम्हि। [ पुत्र, सत्यं भणसि। तथापि स्नेहानां खलु विवेकहारिणी प्रवृत्तिरिति मुग्धास्मि। ]

सूत्रधारः—आर्ये, कथय कुत्र निबद्धस्नेहासि ?

नटी—पुत्त, अत्थि चारणउलणंदणो को वि कलाणिही णाम [ पुत्र, अस्ति चारणकुलनन्दनः कोऽपि कलानिधिर्नाम। ]

सूत्रधारः—कस्तं न जानीयात्। यतः—

वरताण्डववीथिपण्डितो गुणशाली नवयौवनोन्मुखः।
प्रथितो भुवि सङ्गराङ्गणे रिपुभङ्गोद्धुरधीः कलानिधिः ॥ ९ ॥

नटी—विहिणो आणुउल्लेण उवत्थिदा णित्तिणीबुद्धीए मए संभाइदा ताराणाम लोइत्तरा कण्णआ तस्स दादुं संकप्पिदा। [ विधेरानुकूल्येनोपस्थिता नप्त्रीबुद्ध्या मया सम्भाविता तारा नाम लोकोत्तरा कन्यका तस्मै दातुं सङ्कल्पिता। ]

सूत्रधारः—

लोके धिक्कारभिया विधिस्तथा साधुवादलोभेन।
मिथुनं मिथोऽनुरूपं घटयति दुर्घटमपि प्रसभम् ॥ १० ॥

नटी—णं क्खु अहिलसंतेण देसाहिआरिणा चिलादराएण णच्चणविलोहणच्छलादो कलाणिहिं आआरिअ इमस्स पराहओ अज्झवसीअदित्ति। [ एनां खल्वभिलषता देशाधिकारिणा किरातराजेन नर्तनविलोकनच्छलेन कलानिधिमाकार्यास्य पराभवोऽध्यवसीयते इति। ]

सूत्रधारः—आर्ये मां ज्योतिर्विदं विद्धि। तदद्य वर्तमानलग्नानुसारेण तत्त्वं ते वर्णयामि। ( [1]विमृश्य ) ( [2]सहर्षम् )

नटता किरातराजं निहत्य रङ्गस्थले कलानिधिना।
समये तेन विधेयं गुणवति ताराकरग्रहणम् ॥ ११ ॥

---

वरेति। चारणः नटः। 'उपदेवे चारणः स्यादाभीरेऽपि नटेऽपि च'। समराङ्गणे युद्धभूमौ रिपोर्भङ्गे मारणे उद्धुरधीः उद्धटधीः ॥ ९ ॥

तारात्र राधिका कलानिधिः श्रीकृष्णः। लोके इति। विधिः धिक्कारभिया साधुवादलोभेन च दुर्घटं मिथुनमपि घटयति। प्रसभं हठात् ॥ १० ॥

एनां राधिकाम्। किरातराजेन कंसेन। आकार्य आहूय। नटतेति। नटता

---

१. इति विमृश्य—व०। २. ( सहर्षम् ) हन्त ! मा ते चिन्ताभूत्—इति ब० पु० अधिकम्।

( नेपथ्ये )

हन्त ! राधामाधवयोः पाणिबन्धं कंसभूपतेर्भयादभिव्यक्तमुदाहर्तुमसमर्थो 'नटता किरातराज'मित्यपदेशेन बोधयन् धन्यः कोऽयं चिन्ताविक्लवां मामाश्वासयति ।

सूत्रधारः—( नेपथ्याभिमुखमालोक्य[1] ) पश्य पश्य ।

अम्बा सान्दीपनिमुनिपतेरत्र शिष्येति साध्वी
याता लोके परिचयमृषेः वल्लकीवल्लभस्य ।
कासश्रेणीधवलचिकुरा व्याहरन्तीह गार्गी
रङ्गे धन्या प्रविशति पुरः सम्भ्रमात् पौर्णमासी ॥ १२ ॥

तदेहि तूर्णमुत्तरभूमिकां ग्रहीतुं प्रयावः । ( इति निष्क्रान्तौ ) ।

प्रस्तावना ।

---

कलानिधिना रङ्गस्थले किरातराजं निहत्य ताराकरग्रहणं विधेयम् । हे गुणवति गुणशीले । भारतीवृत्तेरामुखान्तर्गतवीथ्यङ्ग उद्घात्यकमिदम् । यथा—

पदानि त्वगतार्थानि तदर्थगतये नराः ।
योजयन्ति पदैरन्यैस्तदुद्घात्यकमुच्यते ॥ (ना०चं० । २६) ॥ ११ ॥

हन्त इत्यादि पौर्णमासीवाक्यम् ।

अम्बेति । सान्दीपनिमुनिपतेरम्बा माता वल्लकीवल्लभस्य नारदस्यर्षेः शिष्या पौर्णमासी रङ्गे नाट्यस्थले प्रविशति । कीदृशी ? कासश्रेणीति । कास इति ख्यातस्य पुष्पश्रेणीव शुक्लकेशा गार्गी व्याहरन्ती कथयन्ती ॥ १२ ॥

उत्तरकाले कर्त्तव्यां भूमिकामुत्तरभूमिकाम् । आमुखमेवात्र प्रस्तावना । यथा नाटकचन्द्रिकायाम्—

सूत्रधारो नटीं ब्रूते स्वकार्यं प्रति युक्तितः ।
प्रस्तुताचेपि चित्रोक्त्या यत्तदामुखमीरितम् ॥
यदामुखमिति प्रोक्तं सैव प्रस्तावनोच्यते । ( ना०चं० । २०-२१ )

तथा

अर्थस्य प्रतिपाद्यस्य तीर्थं प्रस्तावनोच्यते । ( ना०चं० । १४ )

तीर्थमवसरः । अत्र ललितमाधवे पञ्चसन्धीनां मध्ये प्रथमं मुखसन्धिमाह । मुखादिसन्धीनां लक्षणानि नाटकचन्द्रिकोक्तानि ज्ञेयानि । यथा—

एकैकस्यास्त्ववस्थाया प्रकृत्या चैकैकया ।
योगः सन्धिरिति ज्ञेयो नाट्यविद्याविशारदैः ॥ ( ना०चं० । ३० )

तत्र पञ्चधा प्रकृतिः । यथा—

---

1. मुखमवलोक्य—ब० ।

( ततः प्रविशति यथानिर्दिष्टा पौर्णमासी )

पौर्णमासी—( हन्त ! राधामाधवयोरित्यादि पठित्वा ) वत्से गार्गि, श्रूयताम्—

कृष्णापाङ्गतरङ्गितद्युमणिजासम्भेदवेणीकृते
राधायाः स्मितचन्द्रिकासुरधुनीपूरे निपीयामृतम् ।

---

बीजं विन्दुः पताका च प्रकरी कार्यमेव च ।
पाञ्चविध्यात् कथायास्तु प्रकृतिः पञ्चधा स्मृता ॥ ( ना०चं० । ६१ )

अथ पञ्चावस्थाः ।

कार्यस्य पञ्चधावस्था नायकादिक्रियावशात् ।
आरम्भयत्नप्राप्त्याशा नियताप्तिफलागमाः ॥ ( ना०चं० । ४१ )

अथ सन्धिः ।

मुख्यप्रयोजनवशात् कथाङ्गानां समन्वये ।
अवान्तरार्थसम्बन्धः सन्धिस्सन्धानरूपतः ॥
मुखप्रतिमुखे गर्भविमर्शावुपसंहृतिः ।
पञ्चैते सन्धयस्तेषु मुखलक्षणमुच्यते ॥ ( ना०चं० । ४५-४६ )

बीजप्रकृतेरारम्भावस्थया योगो मुखसन्धिः । यथात्र प्रथमद्वितीययोरङ्कयोः कल्पिते मुखसन्धौ निगूढो राधामाधवयोरनुरागबीजमुच्यते । बीजस्य लक्षणं यथा—

यत्तु स्वल्पमुपक्षिप्तं बहुधा विस्तृतिं गतम् ।
कार्यस्य कारणं धीरैस्तद्बीजमिति कथ्यते ॥ ( ना०चं० । ३२ )

अथारम्भलक्षणम्—

बुधैर्मुख्यफलोद्योगमत्र आरम्भ इष्यते । ( ना० चं० । ४१ )

अस्य द्वादशाङ्गानि । यथा—

उपक्षेपः परिकरः परिन्यासो विलोभनम् ।
युक्तिः प्राप्तिः समाधानं विधानं परिभावना ।
उद्भेदभेदकरणान्येषां लक्षणमुच्यते ॥ ( ना०चं० । ४९-५० )

अत्र प्रथमद्वितीययोरङ्कयोरुदाहरणानि—तत इति । पौर्णमासी प्रविशति वक्ष्यमाणमाह च । राधामाधवयोरित्यादि किरातराजमित्यन्तं पूर्वलिखितं पठित्वा । गार्गी गर्गमुनेः कन्या, तां सम्बोध्याह ।

कृष्णापाङ्गेति । राधायाः स्मितचन्द्रिकैव सुरधुनी गङ्गा तस्याः पूरे प्रवाहे । कीदृशे ? कृष्णापाङ्गतरङ्गितद्युमणिजा यमुना तत्कर्तृकभेदेन वेणीकृतो ओष्ठाधरयोररुणिम्नैव सरस्वत्या मिलनात् त्रिवेणीकृते । गङ्गायमुनासरस्वतीनां सङ्गमरूपे

अन्तस्तोषतुषारसम्प्लवलवव्यालीढतापोच्चयाः
क्रान्त्वा सप्त जगन्ति सम्प्रति वयं सर्वोद्र्ध्वमध्यास्महे ॥ १३ ॥

गार्गी—अज्जे, अहिमण्णुणा राहीए उव्वाहो तुए च्चे अ कारिदो ता किंत्ति पुणो वि हरिणा समं अहिलसिज्जइ ?

[आर्ये, अभिमन्युना राधाया उद्वाहस्त्वयैव कारितस्तस्मात् किमिति पुनरपि हरिणा सहाभिलष्यते ? ]

पौर्णमासी—पुत्रि, मायाविवर्तोऽयं न चेद्विरिञ्चेर्वरामृतेन समृद्धै-र्विन्ध्यनगतपःप्रसूनैर्गुम्फितां माधवहृन्मेदुरताकारिमाधुरीमकरन्दां राधि-कावैजयन्तीं कथं पृथग्जनः पाणौ कुर्वीत ?

गार्गी—केरिसं तं वरामिअं ? [ कीदृशं तद्वरामृतम् ? ]

पौर्णमासी—त्वदभीष्टमेव धूर्जटिजित्वरजामातृकं विन्ध्यगुणविस्मा-पितभुवनं भविता तव बालिकायुगलम् ।

---

त्रिवेण्याम् अमृतं निपीय वयं सर्वोद्र्ध्वमध्यास्महे । कीदृशाः ? अन्तःकरणस्य तोष एव तुषारा हिमकणास्तस्य सम्प्लव-लवेन स्नानलवेन व्यालीढो नाशितः ताप-समूहो येषान्ते । श्रीराधायाः—स्मितसुधाप्रसरसमय एव तत्र श्रीकृष्णस्य कटाक्ष-पातस्तज्जन्यरसस्यक्तोष एव मोक्षसुखं तद्दर्शनमेवामृतपानं नत्वन्यम् । अन्येषां त्रिवेणीजलपानस्नानादिना सुखमयवैकुण्ठादिस्थितिरेव सर्वोद्र्ध्वस्थितिरिति मतम् । अस्माकन्तु राधाकृष्णयोः सानुरागस्मितकटाक्षाद्यनुभव एवेति भावः ।

मुखसन्धेरुपक्षेपं नाम सन्ध्यङ्गमिदम् । यथा—

उपक्षेपस्तु बीजस्य सूचनं कथ्यते बुधैः । ( ना०चं० । ५० )

अत्र राधाकृष्णयोरनुरागबीजसूचनमुपक्षेपः ॥ १३ ॥

माया विवर्तोऽयमिति । मायाशब्देनात्र योगमायैव गृह्यते । राधाया उद्वा-हस्त्वयैव कारित इति गार्ग्योक्त्या निर्णीतम् । योगमायायाः कृष्णस्य समीपे सदैव स्थिरत्वं सर्वमतसिद्धम् । ग्रन्थकर्त्रापि अत्रैव ग्रन्थे विदग्धमाधवोज्ज्वलनील-मणिग्रन्थयोरारम्भे परिसमाप्तौ च सर्वत्र कृष्णस्योपपतित्वबोधकलीलायाः अभि-मन्योः पतित्वबोधकलीलाया एव वर्णनं कृतम् । श्रीशुकदेवगोस्वामिनापि देवर्षि-ब्रह्मर्षिराजर्षीणां सभामध्ये तथैव लीलादिकं कथितम् । तस्माद् राधास्वरूपे त्व-भिमन्योरेव पतित्वं सत्यभामास्वरूपे तु कृष्णस्य पतित्वमित्येतद्ग्रन्थतात्पर्यं सर्व-त्रैव व्यक्तं विचार्य बोध्यम् । विरिञ्चेर्वरामृतेन समृद्धैर्विन्ध्यस्य तपःप्रसूनैर्गुम्फितां राधारूपवैजयन्तीं पृथग्जनोऽन्यो जनः श्लेषेण विवर्णः । 'विवर्णः पामरो नीचः प्राकृतश्च पृथग्जनः' ।

कीदृशं तद्वरामृतम् । हे विन्ध्यनग तव बालिकायुगलं भविष्यति कीदृ-शम् ? धूर्जटीत्यादि । धूर्जटिर्महादेवः । 'जामाता वल्लभे सूर्यावर्त्ते च दुहितुः

गार्गी—मुत्तं उत्तिअं। कण्णआ उण कहं विंझस्स अहिट्ठा संवुत्ता। [ युक्तमुक्तम्। कन्यका पुनः कथं विन्ध्यस्याभीष्टा संवृत्ता। ]

पौर्णमासी—जामातृसङ्गर्वितस्य गौरीपितुर्गिरीन्द्रस्य विस्पर्द्धया।

गार्गी—अम्महे सगोत्तुक्करिसं सोढुं एसो ण क्खमो। जं पुरा मेरुं जेदुकामो वि कुंभजोणिं संमाणिअ उण ण वड्ढिदो।

[ आश्चर्यम्! सगोत्रोत्कर्षं सोढुमेष न क्षमः। यत् पुरा मेरुं जेतुकामोऽपि कुम्भयोनिं सम्मान्य न पुनर्वर्द्धितः। ]

पौर्णमासी—बाढ़मीदृगेव स्वभावो मनस्विनाम्।

गार्गी—केण राहिआ विंज्झादो गोउलं लंहिदा? [ केन राधिका विन्ध्यतो गोकुलं लम्भिता? ]

पौर्णमासी—जातहारिण्या पूजनया।

गार्गी—( सभयम् ) अज्जे, जातहारिणीहिं क्खु बालआ भुंजअंति ता दिठ्ठिआ उव्वरिदा कल्लाणी। [ आर्ये, जातहारिणीभिः खलु बालका भुज्यन्ते तद्दिष्ट्योर्वरिता कल्याणी। ]

पौर्णमासी—पुत्रि, लोकोत्तराणां कुमाराणां संहाराय कुमारीणां पुनरपहारायैव कंसेन सा नियुक्ता।

गार्गी—कहं एत्थ उहअम्हि रण्णा पउत्तं? [ कथमत्रोभयस्मिन् राज्ञा प्रवृत्तम्? ]

पौर्णमासी—देव्या देवकीबालिकायाः व्याहारेण।

गार्गी—केरिसो वाहारो? [ कीदृशः व्याहारः? ]

पौर्णमासी—

यस्तुङ्गेन पुरोत्तमाङ्गमहरच्चक्रेण ते सङ्गरे
यं वृन्दारकवृन्दवन्दितपदद्वन्द्वारविन्दं विदुः।

---

पतौ'। पुत्रं त्यक्त्वा कन्यका कथं विन्ध्यस्य अभीष्टा संवृत्ता? जामात्रा गर्वितस्य गिरीन्द्रस्य हिमालयस्य विस्पर्द्धया प्रतिस्पर्द्धया।

अम्महे आश्चर्यम्। अत्र पौराणिकी कथा—सुमेरुं जेतुकामो विन्ध्यो ववर्द्ध। ततो देवताप्रेरितोऽगस्त्यो विन्ध्यनिकटे गतस्तं दृष्ट्वा भूमौ मस्तकं धृत्वाऽसौ ननाम। ततोऽगस्त्येनोक्तम्—यावदहं पुनर्नायास्ये तावदेवं तिष्ठ। सोऽपि गुरोराज्ञयाऽद्यापि तथैव तस्थौ।

लम्भिता प्रापिता। जातहारिण्या पूतनया। लोकोत्तराणामित्युभयत्रान्वयः। कथमिति। उभयस्मिन् कुमाराणां संहारे कुमारीणामाहरणे च प्रवृत्तम्।

यस्तुङ्गेनेति। यः पुरा तुङ्गेन चक्रेण ते उत्तमाङ्गं मस्तकं सङ्गरेऽहरत्। यं

आनन्दामृतसिन्धुभिः प्रणयिनां सन्दोहमान्दोलयन्
प्रादुर्भावमविन्ददेष जगतीकन्दोऽद्य चन्द्रोदये ॥ १४ ॥

किञ्च,

माधुर्यैर्मुदिता मदप्यधिगुणैः श्वो वा परश्वोऽथवा
गन्तारः क्षितिमण्डले प्रकटतामष्टौ महाशक्तयः ।
वृन्दिष्ठे गुणवृन्दमन्दिरतया तत्र स्वसारावुभे
राजेन्द्रो भविता हरस्य च जयी पाणौ गृहीता ययोः ॥ १५ ॥

गार्गी—का पउत्ती दुदिआए वहिणीए ? [ का प्रवृत्तिर्द्वितीयाया भगिन्याः ? ]

पौर्णमासी—

रक्षोघ्नमन्त्रकृतिनाद्रिपुरोहितेन
वित्रासविक्लवमतेः समनुद्रुतायाः ।
आद्या ततः करतलात् किल पूतनाया
नद्याः प्लवे परिपपात विदर्भगायाः ॥ १६ ॥

गार्गी—अज्जे, दुव्वाससो[1] वरेण उप्पण्णा विसभाणुणो ओरसी कण्णा राहित्ति कहं सव्वण्णो वि तादो भणादि ? [ आर्ये, दुर्वाससो वरेणोत्पन्ना वृषभानोरौरसी कन्या राधा इति कथं सर्वज्ञोऽपि तातो भणति ? ]

---

देववृन्दवन्दितपदं विदुः । 'वृन्दारकः सुरश्रेष्ठे मनोज्ञेऽपि च वाच्यवत्' । जगत्याः कन्दो मूलः स एष चन्द्रोदयसमयेऽद्य प्रादुर्भावमविन्दत् ॥ १४ ॥

माधुर्यैरिति । अष्टौ महाशक्तयः श्वः परश्वः प्रकटतां गन्तारः कीदृशाः ? माधुर्यैस्तथा मत् मत्तः सकाशादप्यधि अधिका ये गुणास्तैः मुदिताः । 'मन्माधुर्यविडम्बिदिव्यसुषमा' इत्यपि पाठः । तत्रैतासु मध्ये उभे स्वसारौ भगिन्यौ राधाचन्द्रावल्यौ गुणवृन्दमन्दिरतया वृन्दिष्ठेऽतिशयमनोज्ञे ययोः । पाणौ गृहीता राजेन्द्रो भविता । कीदृशः ? हरस्य जयी । अष्टौ शक्तयश्च राधा-चन्द्रावली-श्यामला-भद्रा-ललिता-विशाखा-पद्मा-शैव्याः ॥ १५ ॥

का प्रवृत्तिः कीदृशी प्रकर्षेण स्थितिर्द्वितीयायाः भगिन्याश्चन्द्रावल्याः ।

रक्षोघ्नेति । रक्षोघ्नमन्त्रनिपुणेन विन्ध्यपुरोहितेन हेतुना वित्रासविक्लवमतेः पलायितायाः पूतनायाः करादाद्या चन्द्रावली विदर्भदेशगतायाः नद्याः प्रवाहे पपात ॥ १६ ॥

---

१. दुव्वासिणो—ब० ।

पौर्णमासी—

चन्द्रभानुवृषभानुरमण्योर्गर्भतः किल विकृष्य निनाय ।
बालिके कमलजार्थनया ते विन्ध्यदारजठरे हरिमाया ॥ १७ ॥

गार्गी—( साश्चर्यम् ) किं पिदरेहिं एदं जाणीअदि ? [ किं पितृभ्यामेतज्ज्ञायते ? ]

पौर्णमासी—अथ किम् । स दुर्वासाः कथं निजोपकारमनावेद्य विश्राम्यतु ।

गार्गी—एदं सव्वं तुए कधं विण्णादं ? [ एतत्सर्वं त्वया कथं ज्ञातम् ? ]

पौर्णमासी—गुरोरुपदेशप्रसादेन येनाहं राधायामासञ्जितास्मि ।

गार्गी—णूणं णिहदाए रक्खसीए कोडे[1] एका राहिआ तुए लद्धा । [ नूनं निहताया राक्षस्या क्रोडे एका राधिका त्वया लब्धा । ]

पौर्णमासी— न केवलमेका राधिका पञ्चाप्यपराः ।

गार्गी—( सविस्मयम् ) का क्खु ताए ? [ काः खलु ताः ? ]

पौर्णमासी—

राधासखीह ललिता ललितास्यचन्द्रा
चन्द्रावली सहचरी रुचिरा च पद्मा ।
भद्रा च भद्रचरिता शिवदा च शैव्या
श्यामा च धाममुदिता विदितास्तवेमाः ॥ १८ ॥

गार्गी—इमाओ केण गोइणं समप्पिदाओ ? [ इमाः केन गोपीभ्यस्समर्पिताः ? ]

पौर्णमासी—

कुमारीणामासां निभृतमभितः पञ्चकमहं
विभज्याभीरीभ्यस्त्वरितमथ राधामधिगुणाम् ।

---

चन्द्रेति । कमलजार्थनया ब्रह्मणः प्रार्थनया विन्ध्यपत्नीगर्भे हरिमाया ते द्वे कन्ये निनाय इति हेतोः चन्द्रभानोः कन्या चन्द्रावली वृषभानोश्च राधा ॥१७॥

किं पितृभ्यां चन्द्रभानुवृषभानुभ्याम् इदं स्वपत्न्योर्गर्भाद् विन्ध्यपत्नीगर्भे हरिमायया बालिकाद्वयं नीतमिति ज्ञायते ?

निजोपकारं मम वरेण जाता कन्या कथमन्यथा भवेदित्यादिकमनावेद्य कथं विश्राम्यतु । तस्माद् दुर्वाससा सर्वं कथितमिति भावः । येन राधामहिमाज्ञानेन ।

कुमारीणामिति । कन्यापञ्चकमहमाभीरीभ्यस्त्वरितं विभज्य हे जरति, तव

---

1. कोणे—ब० ।

सुता ते जामातुर्जरति वृषभानोरिति मुदा
यशोदाया धात्र्यां रहसि मुखरायामघटयम् ॥ १६ ॥

गार्गी—फुडं राहीए दुदीआ सही विसाहा च्चेअ गोउलुप्पुण्णा। [ स्फुटं राधाया द्वितीया सखी विशाखैव गोकुलोत्पन्ना । ]

पौर्णमासी—नहि नहि । यदेषा कालिन्दीपूरेण वाह्यमाना जटिलया लेभे ।

गार्गी—ण जाणे णइपूरेण वाहिदा सा जेट्ठा विंधकण्णआ केण लद्धा । [ न जाने नदीपूरेण वाहिता सा ज्येष्ठा विन्ध्यकन्या केन लब्धा । ]

पौर्णमासी—भीष्मकेन ।

गार्गी—अव्वो, दोणं वहिणीणं विहट्ठणआरिणीए भविदव्वदाए णिठ्ठुरदा[1] । [ अहो ! द्वयोर्भगिन्योर्विघटनकारिण्या भवितव्यताया निष्ठुरता । ]

पौर्णमासी—पुत्रि, पुनस्सङ्गमकारिण्यास्तस्याः करुणा चावधार्यताम् ।

गार्गी—कहं विअ ? [ कथमिव ? ]

पौर्णमासी—सैवेयं करालायाः नप्त्री चन्द्रावली या खलु पाञ्चवार्षिकी गोवर्धनविन्ध्ययोः कन्दरावास्तव्येन जाम्बवता विन्ध्यवासिन्या निदेशेन कुण्डिनादाकृष्टा ।

गार्गी—( स्वगतम् )सुदं मए तादमुहादो जं चंदहाणुप्पहु दीणं कण्णआ भिस्सपहुदीणं कण्णआए एक्कतत्ता अविविग्गहादीहिं भिण्णा ज्जेव्वेत्ति । ता वाढमेक्क विग्गहदा संविहाणं माआआ च्चेअ प्पवंचिदं । होदु । पच्चादो जाणिस्सं । किं दाणिं तस्स रहस्सस्स उठ्ठंअणेण[2] । ( प्रकाशम् ) णूणं गोअठ्ठणादिगोएहिं चंदाअली पहुदीणं उव्वाहो वि माआए णिव्वाहिदो । [ श्रुतं मया तातमुखतः यच्चन्द्रभानुप्रभृतीनां कन्यका भीष्मकप्रभृतीनां कन्यका एकतत्वा अपि विग्रहादिभिर्भिन्ना एवेति । तस्माद्बाढमेकविग्रहतासंविधानं माययैव प्रपञ्चितम् । भवतु । पश्चाद् ज्ञास्यामि । किमिदानीं तस्य रहस्यस्योट्टङ्कनेन । ( प्रकाशम् ) नूनं गोवर्द्धनादिगोपैः चन्द्रावलीप्रभृतीनामुद्वाहोऽपि मायया निर्वाहितः । ]

---

जामातुर्वृषभानोः सुतेयमित्युक्त्वा मुखरायां राधामघटयम् ॥ १९ ॥

अव्वो दुःखे । द्वयोर्भगिन्योर्विघटनकारिण्या भवितव्यतायाः निष्ठुरता ।

तस्याः भवितव्यतायाः । कन्दरावास्तव्येन कन्दरासु वसता । कर्तरि तव्यप्रत्ययः । जाम्बवता कर्त्रा विन्ध्यवासिन्या देवकीपुत्र्या निदेशेन कुण्डिनात् कुण्डिनपुराद् या आकृष्टानीता ।

---

1. णिट्ठुरदा–अ० ।    2. उण्णंकणेण–अ० ।

पौर्णमासी—अथ किम्। पतिम्मन्यानां वल्लभानां ममतामात्रावशेषा कुमारीषु दारता। यदेषां प्रेक्षणमपि ताभिरतिदुर्घटम्।

गार्गी—अदो ण क्खु अच्चरिओ जं अट्ठाणं कण्हे गरिट्ठो अणुराओ। [ अतो न खल्वाश्चर्यं यदष्टानां कृष्णे गरिष्ठोऽनुरागः। ]

पौर्णमासी—अष्टानामिति किमुच्यते। गोकुले कस्याः खलु कुरङ्गीदृशस्तत्र नानुरागः।

गार्गी—सच्चं भणासि। जं दाणिं सदुत्तराइं सोलहाइं गोउलकणआसहस्साइं

---

ममतामात्रेति। ममेयं भार्येत्यभिमानमात्रम्। यद्यस्मादेषां दर्शनमपि ताभिरतिदुर्घटम्[1]। एतास्तान् द्रष्टुमपि न शक्नुवन्तीति भावः। एतदेवोक्तं भङ्गया दशमे—

> यर्ह्यम्बुजाक्ष तव पादतलं रमाया
> दत्तक्षणं क्वचिदरण्यजनप्रियस्य।
> अस्प्राक्ष्म तत्प्रभृति नान्यसमक्षमङ्ग
> स्थातुं त्वयाभिरमिता बत पारयामः॥ ( भा० द० स्कन्ध० )

पौर्णमासीगार्गीसंवादेनेदमायातं यद्दुर्वाससो वरेण चन्द्रभानुपत्न्यां श्रीचन्द्रावली जाता वृषभानुपत्न्यां श्रीराधा जाता। ब्रह्मणो वरेण विन्ध्याचलपत्न्यां रुक्मिणी सत्यभामा च जाता। राधासत्यभामयोस्तत्त्वत ऐक्यकथनानन्तरं विग्रहादिभिः भिन्ना इत्युक्त्वा पुनरेकविग्रहतासंविधानं माययैव प्रपञ्चितमिति कथनाद् ब्रह्मणः प्रार्थनया चन्द्रभानुवृषभानुरमण्योर्गर्भतो विकृष्य चन्द्रावलिराधिके ते बालिके हरिमाया विन्ध्यदारजठरे निनाय इति कथनाच्च देवकीगर्भाद् रोहिणीगर्भे सङ्कर्षणस्य नयनमिव चन्द्रावलीराधयोर्मातृगर्भाद् विन्ध्यपत्नीगर्भे नयनमिति। ततस्तु समस्तग्रन्थतात्पर्यादिदमायास्यति यन्नन्दनन्दने वसुदेवनन्दनस्य प्रवेशमिव राधायां सत्यभामाया चन्द्रावल्यां रुक्मिण्याः प्रवेशः। ततः सत्यभामया सह मिलिताया राधाया व्रजे गमनं श्रीकृष्णेन सह विहारादिकञ्च। ततः श्रीकृष्णस्य मथुरागमनसमये सैव योगमाया राधिकातः सत्यभामां पृथक्कृत्वा यमुनाप्रवेशं सूर्यलोकगमनं तस्माद् द्वारिकागमनादिकं सत्यभामाया एव कृतवती नन्दनन्दनराधिकादीनां व्रजभूमावेव स्थित्यादिकञ्च। इत्यग्रे सर्वं व्यक्तं भविष्यति।

अच्चेरो महाराष्ट्रीभाषायां शौरसेन्याञ्च अच्चरिअं। चन्द्रावल्यादिपञ्चानां

---

१. ताभिरसिदुर्घ—अ०।

'कात्यायानि महाभागे[1] महायोगिन्यधीश्वरि ।
नन्दगोपसुतं देवि पतिम्मे कुरु ते नमः ॥'

एदं मंतं जवन्ताइं [2]पंचेहिं चंदाअलीप्पहुदीहिं संगमिउण चंडिअं अच्चंति । [ सत्यं भणसि । यस्मादिदानीं शतोत्तराणि षोडशगोकुलकन्या-सहस्राणि 'कात्यायनि...' इदं मन्त्रं जपन्तीभिः पञ्चभिश्चन्द्रावलीप्रभृतिभिः सङ्गमय्य चण्डिकामर्चयन्ति । ]

पौर्णमासी—

सा कामान् परिचरिता कुमारिकाभिः
कामाख्या वितरति कामरूपदेवी ।
इत्येनां व्रजहरिणीदृशामुपास्ते
वर्गोऽयं गुणवति गर्गभाषितेन ॥ २० ॥

गार्गी—केण सूराराहणे राही णिउत्ता ? [ केन सूर्याराधने राधिका नियुक्ता ? ]

पौर्णमासी—तव तातेनैव ।

गार्गी—अज्जे, सुदं मए तादमुहादो जं कण्णाणं भाइणा कंतेण संगमो विप्पओअं उप्पादेइ त्ति । [ आर्ये, श्रुतं मया तातमुखात् यत्कन्यानां भाविना कान्तेन सङ्गमो विप्रयोगमुत्पादयिष्यतीति । ]

पौर्णमासी—वत्से, सम्यगिदमुक्तम् । तेन मयापि ते किशोरिका शिरोरत्ने निरोद्धुमभिमन्युगोवर्द्धनयोर्जनन्यौ जटिला [3]भारुण्डेऽतिनिर्बन्धेन नियुक्ते ।

गार्गी—कहं दुवे सोअरे तुमं ण संघट्टेसि । [ कथं द्वे सोदरे त्वं न सङ्घट्टयसि । ]

---

केवलं चण्डिकार्चनमेव शतोत्तरषोडशसहस्राणान्तु कात्यायनीत्यादिपाठपूर्वकमर्चनमिति भेदः ।

सा कामानिति । सा कामाख्या कामरूपदेवी कुमारिकाभिः परिचरिता कामान् वितरतीति हेतोः हे गुणवति, एनां देवीं व्रजसुन्दरीणां वर्गः उपास्ते ॥ २० ॥

भाविना कान्तेन श्रीकृष्णेन । विप्रयोगं वियोगम् । ते राधिकाचन्द्रावल्यौ । निरोद्धुं बहिर्गमनादिकरणेऽतिनिर्बन्धेन नियुक्ते कृते । न सङ्घट्टयसि न सङ्घा-

---

१. महामाये—ब० । २. पंजेहिं—ब० ।
३. भारुण्डनिर्बन्धेन—अ० ।

पौर्णमासी—सदा सञ्चरतां दुष्टकंसचराणां वितर्कशङ्कया ।

गार्गी—णं अणुरूव्वं अपुव्वं वुत्तन्तं अण्णो को विजणो जाणेइ ?

[ नन्वनुरूपमपूर्वं वृत्तान्तमन्यः कोऽपि जनो जानाति ? ]

---

लयसि । श्रीराधादीनां विगतप्रकरणे स्वरूपद्वयेन प्राकट्यादिकं कविनिर्मितं तु स्फुटमेव । तत्र शास्त्रप्रसिद्धं प्रमाणमपि श्रीराधातन्त्रे यथा—

विन्ध्यशैलप्रसूता च कीर्तिका प्रसुता तथा ।
द्वयोरेवात्र प्राकट्यं लीला च द्विविधा मता ॥
अथ भाद्रपदे शुक्ला चाष्टमी स्वातिसंयुता ।
तत्र जाता महालक्ष्मीः कीर्तिकागर्भसम्भवा ॥
राधा तु द्विविधा जाता स्वयंरूपा च स्वांशिनी ।
कीर्तिकागर्भजाता[1] सा विन्ध्याचलनिवासिनी ॥

तात्पर्यार्थमिदं कीर्तिजा स्वयं-रूपा विन्ध्यजा [2]अंशरूपा इति । स्कन्द-पुराणे च—

कैशोरे गोपकन्यास्ता यौवने राजकन्यकाः ।
भूत्वा देवाङ्गनाः सर्वाः जनयन्ति हरेर्मुदम् ॥ इति ।

याः कैशोरे गोपकन्यास्ता एव यौवने राजकन्यका इत्यनेनापि द्वयोरेकतत्त्वता स्थापिता । तथा च राधिकादिगोपीनां प्रकाशभेदा एव सत्यभामादिमहिष्यः अन्यथा एतद्ग्रन्थकृत्प्रभृतिमहानुभावाद्यनेकाचार्यैस्तथा प्राचीनाचार्यैरपि शास्त्र-युक्ति [3]आप्तवाक्यानुभवादिभिर्भगवद्विग्रहनामधामलीलादीनां नित्यत्वेन संस्थापितं कथं सुसङ्गतं स्यात् । अतएव श्रीयुत[4]चक्रवर्तिठक्कुरचरणैरपि दशमस्कन्धटीकायां कंसवधान्तरं श्रीव्रजराजस्य व्रजागमनसमये श्रीकृष्णवाक्योपरि श्रीकृष्णस्य तथा व्रजवासिनाञ्च प्रकाशद्वयमेव निर्द्धारितम् । व्रजवासिनामेकप्रकाश(र)स्तु श्रीकृष्णेन सह पूर्ववत् नानालीलां कुर्वन् विलसत्येव प्रकाशान्तरेण तु श्रीकृष्ण-विरहक्षीणानामुद्धवेन सह संवादं कुरुक्षेत्रगमनादिकञ्च ( यथा ) सुसङ्गमं ( तं ) स्यात् तथा शास्त्रयुक्त्यादिभिर्निर्णीतम् । एतदेव ग्रन्थकर्त्रापि भागवतामृते लिखितम् । यथा—

सदानन्तैः प्रकाशैश्च लीलाभिश्च स दीव्यति ।
आश्चर्यमेकदैकत्र वर्तमानान्यपि ध्रुवम् ॥
परस्परमलं पृक्तस्वरूपाण्येव सर्वथा ॥ इति ।

---

१. जातांशा—व० । २. अंशनारूपा—अ० । ३. वाक्यानुभावादि—अ० ।
४. वन्धुचरणै—अ०

पौर्णमासी—नहि नहि। किन्तु मदुपदेशादेव केवलं हरिरामयोर्जन्यौ जानते।

( नेपथ्ये )

मञ्चादुत्तिष्ठ पद्मे मुकुटविरचनं मुञ्च पिच्छेन भद्रे
श्यामे दामानुबन्धं परिहर ललिते पिण्ढि माजागुडानि।
शारीपाठाद्विशाखे व्युपरम कबरीसंस्क्रियां मुञ्च शैब्ये
पूर्वां वेवेष्टि काष्ठां सुरभिखुरपटीपांसुपिष्टातपुञ्जः ॥ २१ ॥

पौर्णमासी—पश्य पश्य।

हरिमुद्दिशते रजोभरः पुरतः सङ्गमयत्यमुं तमः।
व्रजवामदृशां न पद्धतिः प्रकटा सर्वदृशः श्रुतेरपि ॥ २२ ॥

---

श्रीमद्भागवते च श्रुतदेवबहुलाश्वयोर्गृहे प्रकाशद्वयेन द्वारकायामष्टोत्तरशतषोडशसहस्रमहिषीणां गृहे प्रकाशबाहुल्येन रासेऽनन्तव्रजसुन्दरीभिः सहानन्तप्रकाशेन लीला व्यक्तमेवास्तीति।

एतद्ग्रन्थानुसारेण तु कीर्तिकागर्भतः कन्यामाकृष्य विन्ध्याचलपत्न्या गर्भे नीतां पूतनया पुनरानीतां तामेव पौर्णमासी मुखराहस्ते ददौ। कीर्तिकागर्भजातायां स्वयं रूपायां या प्रविष्टा सैव सत्या रूपेण द्वारकायां गता। अत्रैव पञ्चमे दशमाङ्के च सविशेषं वक्ष्यति यथा भागवतामृते नन्दनन्दनवसुदेवनन्दनस्य प्रवेशः कथितः इति दिक्।

श्रीकृष्णप्रेयसीनां जन्मतत्त्वमुक्त्वा व्रजलीलां परकीयाभावेन वर्णयन् आदौ सायं गतां लीलामाह—नेपथ्ये इति। अत्र शास्त्रप्रसिद्धं—'प्रातः व्रजाद्व्रजतश्च सायम्' इति। अक्षण्वतां फलमिदमित्यनन्तरं 'वक्त्रं व्रजेशसुतयोरणुवेणुजुष्टं यैर्वा निपीतमनु[1]रक्तकटाक्षमोक्षम्' इत्यादि। कविनिर्मितन्तु—श्रीकृष्णतत्प्रेयसीराधादीनां सानुरागप्रेममयचेष्टावाग्विलासादीनां परममाधुर्यं यावदङ्कसमाप्तिः।

मञ्चादिति। हे भद्रे मञ्चात् खट्वायास्सकाशादुत्तिष्ठ। कथं तत्राह—सुरभिखुरपुटीपांसुपिष्टातपुञ्जः गोखुररजोरूपगन्धचूर्णसमूहः पूर्वां काष्ठां दिशं वेवेष्टि। 'पिष्टातः पटवासकः'। वनाद् गोष्ठे श्रीकृष्णागमनं गोखुररजोवेष्टिता पूर्वा दिक् कथयतीति भावः। एवमग्रेऽपि ॥ २१ ॥

हरिमिति। रजोभरः धूलिसमूहः हरिमुद्दिशते। पक्षे रजोगुणाधिकः। तमोऽन्धकारः अमुं हरिं सङ्गमयति। पक्षे तमोगुणः। रजस्तमगुणयोः कृष्णोद्देशादौ विरोधितया ( वर्णनाद् ) विरोधाभासो नामालङ्कारः। अतो गोपीनां पद्धतिः

---

१. मनुरन्तुं—ब०।

गार्गी—( संस्कृतेन )

ह्रियमवगृह्य गृहेभ्यः कर्षति राधां वनाय या निपुणा ।
सा जयति निसृष्टार्था वरवंशजकाकली दूती ॥ २३ ॥

( नेपथ्ये )

धन्ये कज्जलमुक्तवामनयनापद्मे पदोढाङ्गदा
सारङ्गिध्वनदेकनूपुरधरापालिस्खलन्मेखला ।
गण्डोद्यत्तिलकालवङ्गिकमले नेत्रार्पितालक्तका
मा धावोत्तरलं त्वमत्र मुरली दूरे कलं कूजति ॥ २४ ॥

गार्गी—णीलंबररुइधारी फुरिदो गोवोड्डुचक्कवालेण ।
सिदगोमंडलमहुरो माहुरचंदो परिफ्फुरइ ॥ २५ ॥
[ नीलाम्बररुचिधारी स्फुरितो गोपोड्डुचक्रवालेन ।
सितगोमण्डलमधुरो माथुरचन्द्रः परिस्फुरति ॥ ]

पौर्णमासी—( सानन्दम् )

बिभ्रन्नीलच्छविमविषमामग्रहस्तेन यष्टिं
जुष्टश्श्रोणीतटरुचिरसौ पीतपट्टांशुकेन

---

मार्गः सर्वदृशः श्रुतेः कर्णस्य वेदस्य चापि प्रकटा न गम्या न । सर्वदृश इति वेदस्य विशेषणं वा ॥ २२ ॥

ह्रियमिति । या निपुणा काकलीरूपा दूती राधां वनाय वने नेतुं कर्षति । कीदृशी ? निसृष्टार्था । निसृष्टार्थालक्षणं यथा—

विन्यस्तकार्यभारा स्याद् यूनोरेकतरेण या ।
युवत्योभौ घटयेदेषा निसृष्टार्था निगद्यते ॥

परिकरं नाम मुखसन्ध्यङ्गमिदम् । तथा च—'बीजस्य बहुलीकारो ज्ञेयः परिकरो बुधैः ।' ( ना० चं० का०। ५१ ) इति । अत्र वनाकर्षणादिनाऽनुरागस्य बहुलीकरणात् परिकरः ।

धन्ये इति । धन्य इत्यादिना गोष्ठात् श्रीकृष्णागमनं श्रुत्वा दर्शनावेगेन कृतार्धवेषा च सती गमनोन्मुखीं स्वयूथेश्वरीं प्रति सखीनां वाक्यं मुरलीकलं यथा स्यात्तथा दूरे कूजति । अतः उत्तरलं यथा स्यात्तथा माधव मा धाव ॥ २४ ॥

नीलेति । नीलवर्णाम्बरे आकाशे रुचिधारी चन्द्रः । श्रीकृष्णपक्षे नील-कान्तियुक्तः । सितगोमण्डलेति चन्द्रपक्षे श्वेतांशुकमण्डलैः पक्षे श्वेतगोमण्डलै-र्मधुरः ॥ २५ ॥

बिभ्रन्निति । आभीरीणां प्रेमरूपलक्ष्म्या विवर्तः श्रीकृष्णः नीलच्छवि-मविषमां सरलां यष्टिमग्रहस्तेन बिभ्रत् । कीदृशः ? पीतपट्टांशुकेन जुष्टा श्रोणि-

निन्दन्निन्दीवरमविरलोत्सर्पिभिः कान्तिपूरै-
राभीरीणामिह विहरति प्रेमलक्ष्मीविवर्त्तः ॥ २६ ॥

तदावां यशोदामासादयावः । ( इति निष्क्रान्ते । )

अङ्कमुखम् ।

( ततः प्रविशति वयस्यैरुपास्यमानः कृष्णः )

कृष्णः—सखे मधुमङ्गल, पश्य पश्य ।

अतनुतृणकदम्बास्वादशैथिल्यभाजा-
मविरलतरहंम्बारम्भताम्यन्मुखीयम् ।
चटुलितनयनश्रीरावलिर्नैचिकीनां
पथिषु वलितकण्ठी गोकुलोत्कण्ठिताऽभूत् ॥ २७ ॥

मधुमङ्गलः—दिट्ठिआ वच्छलाहिं सुरहीहिं कंतारब्भमणखिण्णए एत्थ बम्हणे कालुण्णं विरइदं । [ दिष्ट्या वत्सलाभिः सुरभीभिः कान्तारभ्रमणखिन्नेऽत्र ब्राह्मणे कारुण्यं विरचितम् । ]

रामः—पश्यत पश्यत ।

गत्वा पुरस्त्रिचतुराणि जवात् पदानि
पश्चाद्विलोकयति हन्त तिरश्शिरोधि ।
वत्सोत्करादपि वक्रीमथने गरिष्ठ-
प्रेमानुबन्धविधुरं पथि धेनुवृन्दम् ॥ २८ ॥

---

तटस्थ रुचिर्यस्य । सदा उच्छलद्भिः कान्तिसमूहैरिन्दीवरं निन्दन् विहरति ॥ २६ ॥

अंकमुखमिति । अंकमुखलक्षणम् यथा ( नाटकचन्द्रिकायाम् )—

यत्र स्यादंक एकस्मिन्नङ्कानां सूचनाखिला ।
तदंकास्यमिति प्राहुर्बीजार्थख्यापकञ्च यत् ॥ (ना० चं० का० २००)

अतन्विति । अतनुरतिशयं यत्तृणकदम्बभक्षणं तेन शैथिल्यभाजां नैचिकीनां श्रेष्ठगवामावलिर्वलितकण्ठी तिरःकण्ठी सती गोकुलोत्कण्ठिताऽभूत् । विचारं नाम नाटकभूषणमिदम् । तथा च—

'विचारस्त्वेकसाध्यस्य बहुसाधनवर्णनम्' । ( ना० चं० का० । १६९ )

अत्रोत्कण्ठितत्वसाध्यस्य साधनानि तृणास्वादशैथिल्यादीनि । कश्चित्तु 'विचारो युक्तिवाक्यैर्यदप्रत्यक्षार्थदर्शनम्' इत्याह । अत्राप्येतदेवोदाहरणम् ॥२७॥

गत्वेति । वत्सोत्करादपि श्रीकृष्णे प्रेमकातरं धेनुवृन्दं पश्यतेति विषादहर्षावेशेन यतः त्रिचतुराणि पदानि जवेन गत्वा तिरःशिरोधि यथा स्यात्तथा पश्चात् स्थितं श्रीकृष्णं पश्यति ॥ २८ ॥

कृष्णः—( प्रतीचीमवेक्ष्य )

विचलितुमसमर्थं व्योम्नि मुक्तप्रतिष्ठे
समयविपरिणामाद्वीर्यविस्रंसनेन ।
शिथिलतरकरेणालम्ब्य भाण्डीरचूडां
चरमगिरिशिखायां लम्बते भानुबिम्बम् ।। २९ ।।

रामः—पश्यत ।

विपुलोत्पालिककूटैर्गिरिकूटविडम्बिभिर्निविडम् ।
वयमभजाम करीषक्षोदपरीतं व्रजाभ्यर्णम् ।। ३० ।।

तदद्य कालिन्दीमवगाढा प्रगाढपरिश्रान्तिमुत्सारयामः ।

( इति सखीभिः सह निष्क्रान्तः )

कृष्णः—सखे मधुमङ्गल, पश्य पश्य ।

द्रवन्नवविधूपलप्रकरदत्तपाद्यः शशी
सरत्नतरलोच्चलज्जलधिकल्पितार्घक्रियः ।
हरित्परिजनेरितस्फुटतरोडुपुष्पाञ्जलिः
स्फुरत्तनुरुदञ्चितस्मररसोर्मिरुन्मीलति ।। ३१ ।।

मधुमङ्गलः—पिअवअस्स, किं [1]एमिणा वराएण कलंकिणा चंदेण । पेक्ख लदाजालंदरे णिक्कलंकाइं सोलहचंदमंडल-सहस्साइं उम्मीलिदाइं । [ प्रियवयस्य, किमनेन वराकेण कलङ्किना चन्द्रेण । पश्य लताजालान्तरे निष्कलङ्कानि षोडशचन्द्रमण्डलसहस्राण्युन्मीलितानि । ]

---

विचलितुमिति । भानुबिम्बं सूर्यबिम्बं चरमगिरिरस्ताचलस्तस्य शिखायां शिथिलतरकरेण किरणेन श्लेषात् हस्तेन भाण्डीराग्रमालम्ब्य लम्बेत । कीदृशम्—मुक्तप्रतिष्ठे मुक्तावलम्बेऽवलम्बनशून्ये व्योम्नि आकाशे समयविपरिणामाद् वार्धक्याद् बलराहित्येन च विशेषेण चलितुमसमर्थम् ॥ २९ ॥

विपुलेति । उत्पालिका उपला इति प्रसिद्धस्य कूटः समूहो यत्र तैः विढोरा इति ख्यातैर्निविडं व्रजाभ्यर्णं व्रजनिकटवर्तिभूमिं करीषं पाकार्थगोमयनिर्मितं तस्य क्षोदेन चूर्णेन परीतं वयमभजाम ॥ ३० ॥

अवगाढाः स्नाताः ।

द्रवन्निति । शशी उन्मीलति । द्रवन्नवविधूपलश्चन्द्रकान्तमणिस्तस्य समूहेन दत्तं पाद्यं यस्मै स हरितो दिश एव परिजनास्तैरीरिता दत्ता [2]स्फुटतराणामुडुपरूपपुष्पाणामञ्जलिर्यस्मै सः । उदञ्चिता उद्गता स्मररसस्य ऊर्मिर्यस्य यस्माद्वा ॥ ३१ ॥

---

१. एदमिणा–अ० । २. उडुरूपपुष्पा–अ० ।

कृष्णः—( समीक्ष्य )—सखे, सम्यगात्थ। बहुधा साम्येऽपि बाढमेकेन कर्मणा मुषितोऽयमोषधीशः। तथाहि—

नवनवसुधासम्बाधोऽपि प्रियोऽपि दृशां सदा
सरसिजवनीं म्लानां कुर्वन्नपि प्रभया स्वया।
शुचिरपि कलापूर्णोऽप्युच्चैः कुरङ्गधरः शशी
व्रजमृगदृशां वक्त्रैरेभिस्सुरङ्गधरैर्जितः ॥ ३२ ॥

मधुमङ्गलः—भो वअस्स, जुत्तं उक्कण्णोसि जं दक्खिणेण कलंबकुडुंगस्स का वि आअट्ठणमंतं पढेदि। [ भो वयस्य, युक्तमुत्कर्णोऽसि यद्दक्षिणेन कदम्बकुञ्जस्य काप्याकर्षणमन्त्रं पठति। ]

कृष्णः—

सेयं दीव्यति शैव्या या पाविका विश्वपाविका।
वेणुर्यद्विभ्रमारम्भे स्तम्भमालम्बते मम ॥ ३३ ॥

( इत्यग्रतो गत्वा सौत्सुक्यम् )

तुम्बीफलस्तनीयं प्रवालसुषमाधरा कलोल्लसिता।
अवति धृतिं मम भद्रा नवल्लवी[1] वल्लकी चास्याः ॥ ३४ ॥

---

ओषधीशश्चन्द्रः एकेन कर्मणा मुषितः।

नवेति। नवनवसुधासम्बाधत्वादिगुणैः साम्येऽपि सुरङ्गधरैः शोभनरङ्गधरैर्वक्त्रैर्मुखैः शशी जितः। शशी तु कुरङ्गधरः। कुरङ्गो मृगः। श्लेषेण कुत्सितरङ्गधरः कलङ्कीत्यर्थः। साम्यमाह—नवनवसुधायाः सम्यक् बाधा चरणं वा यस्मात् सः, दृशां प्रियः, स्वया प्रभया सरसिजवनी म्लानां कुर्वन्। कलाभिः अमादिषोडशकलाभिः पक्षे वैदग्ध्यादिभिः पूर्णः। अतिशयं नाम नाटकभूषणमिदम्।

तथा च।

बहून् गुणान् कीर्तयित्वा सामान्यत्वेन संश्रितान्।
विशेषः कीर्त्यते यत्र ज्ञेयः सोऽतिशयो बुधैः ॥ (ना० चं० का० । १७२)

अत्र मुखचन्द्रयोः सुधासम्बाधत्वादिसामान्यगुणकीर्तनानन्तरं मुखे सुरङ्गत्वकीर्तन विशेषः ॥ ३२ ॥

दक्षिणेन कदम्बकुञ्जस्य दक्षिणे कापि गोपी। सेति—या पाविका क्षुद्रवंशी मम वेणुर्यस्या विभ्रमारम्भे विलासारम्भे वादनसमये स्तम्भमालम्बते ॥ ३३ ॥

तुम्बीति। भद्रा नाम्नी वल्लकी गोपी तस्याः वल्लवी वीणा च मम धृतिं न अवति। तुम्बीत्यादीनि द्वयोर्विशेषणपदानि। तुम्बीफलस्येव स्तनौ यस्याः पक्षे वीणायाः पार्श्वद्वयी तुम्बीफलयुक्ता। प्रवालस्येव सुषमा शोभा अधरस्य

---

१. नववल्लवी वल्लकी—अ०।

मधुमङ्गलः—वअस्स, अच्चरिअं अच्चरिअं। मज्झे जमुणं का वि कच्छइ कुणकुणेदि। [वयस्याश्चर्यमाश्चर्यम्। मध्येयमुनं कापि कच्छपी क्वणति।]

([1]इति परिक्रम्य सहर्षम्)

कृष्णः—(सस्मितम्)

स्मरकेलिनाट्यनान्दी शब्दब्रह्मश्रियं मुहुर्दुहती।
वहति मुदम्मे महतीमिह महिता श्यामला महती॥ ३५॥

(इति परिक्रम्य। सहर्षम्)

कलसिञ्जितकलयारादविकलया मे प्रमोदकल्लोलम्।
पद्मा कलाविनिलया वलयाः कलयाम्बभूवुरलम्॥ ३६॥

(इति परितो दृष्टिं क्षिपन्) सखे, कथमत्र नोन्मीलति चन्द्रावली-परिमलः। तद्वामतः करालागृहोपान्तवीटिकामासादयावः। (इति परिक्रामति)

मधुमङ्गलः—(पुरोऽवलोक्य) एसा उवणंदपुत्तस्स सुहद्दस्स वहू कुंदलदिआ इदो आअच्छदि। [एषा उपनन्दपुत्रस्य सुभद्रस्य वधूः कुन्द-लतिका इत आगच्छति।]

कुन्दलता—(प्रविश्य) कण्ह, अआले पहुल्लं वंजुलं कीस ण [2]सला-हेसि? [कृष्ण, अकाले प्रफुल्लं वञ्जुलं कस्मान्न श्लाघयसि?]

कृष्णः—(दृशं क्षिपन्नात्मगतम्) नूनं चन्द्रावली चरणचातुरीचम-त्कारोऽयम्। (इति सोत्कण्ठमभिनन्द्य)

---

यस्याः। पक्षे वीणादण्डः। 'वीणादण्डः प्रवालः स्यात्'। कलया वैदग्ध्येन पक्षे कलेन मधुरध्वनिनोल्लसिता॥ ३४॥

मध्येयमुनं यमुनाया मध्ये। कच्छपी वीणा। 'वीणाभेदेऽपि कच्छपी'।

स्मरेति—महिता श्रेष्ठा श्यामला या महती वीणा मे महतीं मुदं मुहुर्दुदती सती स्मरकेलिनाट्यस्य नान्दीं शुभावहप्रथमारम्भरूपां शब्दब्रह्मश्रियं वहति॥ ३५॥

कलेति। पद्मायाः कला त्रिप्रकोष्ठ एव निलयो येषान्ते वलयाः आरात् शीघ्रं कलशिञ्जितकलया मधुरशिञ्जितस्य शब्दस्य वैदग्ध्येन मे प्रमोदकल्लोलं कलयाम्बभूवुः कुर्युः॥ ३६॥

वञ्जुलमशोकम्।

---

१. अयं अ० पु० नास्ति। २. सलासहेसि—अ०।

एतानि वञ्जुललतान्तरुदञ्चितानि,
कादम्बकूजितकदम्बविडम्बितानि ।
मन्द्राणि कर्णकुहरं मम नन्दयन्ति,
चन्द्रावलीकनकनूपुरसिञ्जितानि ॥ ३७ ॥

कुन्दलता—सुंदर, भारुंडाए गब्भघरे णिरुद्धा वि चंदाअली मए चादुरीपवंधेण कड्ढिदा । [ सुन्दर, भारुण्डया गर्भगृहे निरुद्धापि चन्द्रावली मया चातुरीप्रबन्धेन कर्षिता । ]

कृष्णः—भारुण्डया कथमकाण्डे कार्कश्यमारब्धम् ?

कुन्दलता—ण .केअलं भारुंडाए जडिलाप्पहुदीहिं पि सव्ववुड्ढिआहिं । [ न केवलं भारुण्डया जटिलाप्रभृतिभिरपि सर्ववृद्धाभिः । ]

चन्द्रावली—( प्रविश्य पद्मया सह संस्कृतेन )

रचयतु मम वृद्धा तर्जनं दुर्जनी सा,
कवलयतु कलेन्दुं कोऽपि दुर्वाद-राहुः ।
सहचरि परिहर्तुं नाक्षिभृङ्गौ क्षमेते
मधुरिपु-मुखपद्मालोकमाध्वीकलोभम् ॥ ३८ ॥

कृष्णः—( चन्द्रावलीमासाद्य । सानन्दम् )

नीतस्तन्वि मुखेन ते परिभवं भ्रूक्षेपविक्रीडया
बिभ्यद्विष्णुपदं जगाम शरणं तत्राप्यधैर्यं गतः ।
आसाद्य द्विजराजितां विजयिनस्सेवार्थमस्योज्ज्वल-
श्चन्द्रोऽयं द्विजराजतापदमगात्तेनासि चन्द्रावली ॥ ३९ ॥

---

एतानीति । चन्द्रावलीनूपुरशब्दानि अशोकवनमध्ये उद्गतानि एतानि मम कर्णकुहरं नन्दयन्ति । कीदृशानि ? कादम्बेत्यादि । कादम्बः कलहंसस्तस्य कूजितसमूहं विडम्बयितुं शीलं येषान्तानि । मन्द्राणि निविडानि ॥ ३७ ॥

रागेण भजनप्रकारमाह—रचयितु इति । सा दुर्जनी वृद्धा मम तर्जनं रचयतु । दुर्वादराहुः कुलेन्दुं कलयतु ग्रसतु । अक्षिभृङ्गौ कृष्णमुखालोकरूपमाध्वीकपाने लोभं परिहर्तुं न क्षमेते ॥ ३८ ॥

नीत इति । हे तन्वि तव मुखेन परिभवं नीतोऽयं चन्द्रः भ्रूक्षेपविक्रीडया बिभ्यद्विष्णुपदमाकाशं शरणं जगाम । तत्रापि धैर्यमप्राप्य विजयिनो जयशीलस्यास्य मुखस्य द्विजराजितां दन्तपंक्तितामासाद्य प्राप्योज्ज्वलस्सन् द्विजराजतापदमगात् । निरुक्तं नाम नाटकभूषणमिदम् । तथा च—'निरुक्तं निरवद्योक्तिर्नामन्यर्थप्रसिद्धये ।' ( ना० चं० । ) अत्र चन्द्रावली नाम निरुक्तम् ॥ ३९ ॥

कुन्दलता—मोत्तिअसरमज्झट्ठिअतरलपडिविंबदंभसंवलिदा ।
तुह हिअअं णिउणा मे जाआ चंदावली जाआ ॥ ४० ॥

[ मौक्तिकसरमध्यस्थिततरलप्रतिबिम्बदम्भसंवलिता ।
तव हृदयं निपुणा मे जाता चन्द्रावली जाया । ]

कृष्णः—( स्मितं कृत्वा ) कुन्दलतिके, कथं ते याता चन्द्रावली ?

कुन्दलतिका—गोउलजुअराअ, गोअद्धणो क्खु इमाए अलीअस्सामी अम्ह देअरोच्चेअ सच्चो । [ गोकुलयुवराज, गोवर्द्धनः खल्वस्या अलीकस्वामी मम देवर एव सत्यम् । ]

चन्द्रावली—( सभ्रूभङ्गमपवार्य ) धिट्ठे, कुंदलताच्चेअ भमराकड्ढिणी होदि । [ धृष्टे, कुन्दलतैव भ्रमराकर्षिणी भवति । ]

कुन्दलता—देअर, एसा णिउंजघरिणी कधेदि—छइल्लो ण करेदु एसो वुंदावणभमरो जं पफुल्लं पउमावलीं ण पिबेदि । [ देवर, एषा निकुञ्ज-गृहिणी कथयति—विदग्धः न करोत्वेष वृन्दावनभ्रमरो यत् प्रफुल्लां पद्मालीं न पिबति । ]

पद्मा—अलिआसंसिणि, चिट्ठ चिट्ठ । जंगलसंचारिणो भमरस्स विसाहा सहअरी च्चेअ सुलहा । ण अभिउप्पण्णा पउमाली । [ अलीकाशं-सिनि, तिष्ठ तिष्ठ । वनसञ्चारिणो भ्रमरस्य विशाखा सहचर्येव सुलभा । न खल्वमृतोत्पन्ना पद्माली । ]

कुन्दलता—चंदाअलि, विदिदाउत्तासि । कीस लज्जेसि । ता अलं-करेहि पीणुत्तुंगत्थणबंधुणा अप्पणो हारेण हरिवक्खत्थलं । [ चन्द्रावलि विदिताकूतासि कथं लज्जसे । तदलङ्कुरु पीनोत्तुङ्गस्तनबन्धुनाऽऽत्मनो हारेण हरिवक्षःस्थलम् । ]

---

मौक्तिकेति । निपुणा चन्द्रावली हारमध्यगरत्ने प्रतिबिम्बबलेन संवलिता मिलिता सती तव हृदयं प्राप्य मे याता मे भर्तुर्भ्रातृपत्नी जाता बभूव । यथा—'भार्यास्तु भ्रातृवर्गस्य यातरस्स्युः परस्पर'मित्यमरः ॥ ४० ॥

पूर्वश्लोकार्थमेव स्फुटमाह—हे गोकुलयुवराजेति । मम देवरस्त्वमेव सत्यः स्वामीति । अतः ममेयं यातेत्यर्थः । 'भ्रमरः कामुके भृङ्गे' इत्यभिधानात् त्वं कामुकस्याकर्षिणी । निकुञ्ज एवैषा गृहिणी न गृहे इति भावः । छविल्लो विदग्धः । पक्षे श्लेषेण—त्वं यत् प्रफुल्लां पद्मश्रेणीं पक्षे पद्मासखीं चन्द्रावलीं न पिबसि ।

अलीकाशंसिनि मिथ्याशंसिनि जङ्गलसञ्चारिणो निर्जनवनसञ्चारिणो भ्रमर-स्य पक्षे कामुकस्य कृष्णस्य । विशाखा सहचर्येव सुलभा न त्वमृतोत्पन्ना पद्माली

चन्द्रावली—( साभ्यसूयम् ) कुंदलदिए, [1]णिअकंठट्ठिदाए एक्का-अलिए तुमं ज्जेअ अलंकरेधि । [ कुन्दलतिके, निजकण्ठस्थितयैकावल्या त्वमेवालंकुरु । ]

कुन्दलता—चंदाअलिए, कण्णलदिअं माहवत्थवइणीं करेहि ।

चन्द्रावली—हला, पिअजणपेक्खणपज्जुसुअस्स वइंदणंदणस्स मग्गे ण क्खु पडिवंधिणी होहि । [ सखि, प्रियजनप्रेक्षणपर्युत्सुकस्य व्रजेन्द्रनन्दनस्य मार्गे न खलु प्रतिबन्धिनी भव । ]

कुन्दलता—सहि, का अण्णा तुमत्तो इमस्स पिआ ? [ सखि, काऽन्या त्वत्तोऽस्य प्रिया ? ]

पद्मा—अइ राहा । सहि विरमेहि । [ अयि राधा । सखि विरम । ]

कृष्णः—सरोजाक्षि परोक्षन्ते कदापि हृदयं मम ।
न स्पष्टुमप्यलं बाधा राधा त्वाक्रम्य गाहते ॥ ४१ ॥

( इति सशङ्कं राधाबाधयोर्विपर्यासं पठति । )

पद्मा—महापुरिसा क्खु ण जादु असच्चभासिणा होंति । [ महापुरुषाः खलु न जात्वसत्यभाषिणो भवन्ति । ]

( नेपथ्ये )

कुन्दलदे, साहु साहु । सच्चं ण जाणासि पत्थरपुजकढोरं गोअड्ढणं । [ कुन्दलते, साधु साधु । सत्यं न जानासि प्रस्तरपुञ्जकठोरं गोवर्द्धनम् । ]

कुन्दलता—हद्दी हद्दी । भारुंडा चंडी चंडिआणं कुणदि । [ हा धिक् हा धिक् । भारुण्डा चण्डी चण्डिमानं करोति । ( क्वणति ) ]

---

विशाखारहिता सहचरी झिण्टी पक्षे विशाखायाः सखी राधा । झिण्टीव राधा नीरसेति ध्वनिः । अमृतं जलं तदुत्पन्ना पद्मश्रेणी पक्षे चन्द्रावली । विदिता-कूतासि-विदितमाकूतमभिप्रायं यस्यास्तथाभूतासि । कस्माल्लज्जसे । माधव-स्तवकिनीं पुष्पगुच्छयुक्तां कुरु चन्द्रावल्याः कर्णलतिकाम् ।

सरोजेति । हे सरोजाक्षि मे हृदयं बाधां स्पष्टुमपि नालं न समर्थः । राधैवाक्रम्य गाहतेऽवगाहते । राधा मम हृदयं स्पष्टुं नालं न समर्था । बाधा प्रतिबन्धिका भवतीति वक्तव्ये राधा मे हृदयं स्पष्टुमपि नालमिति विपर्यासं जातम् । भ्रंशं नाम नाटकभूषणमिदम् । तच्च द्विप्रकारम् । तत्रोत्तरप्रकारमिदम् । यथा कश्चित्तु—'कथयन्ति बुधाः भ्रंशं वाच्यादन्यतरद्वचः' इति ( ना० चं०का० १७५ ) । अत्र वाच्याद् राधाशब्दात् राधास्पर्शात् अन्यत्राधाक्रमणं भ्रंशः ॥४१॥

जातु कदाचिदपि । गोवर्द्धनं चन्द्रावल्याः स्वामिनम् ।

---

1. णिअकंठट्ठिदआ—अ० ।

चन्द्रावली—( सत्रासम् ) सहि [1]पउमे, सद्दुली व्व गज्जेदि बुड्ढिआ ता अपसप्पह्म । [ सखि पद्मे, शार्दूलीव गर्जति वृद्धा । तदपसर्पावः । ]

( इति पद्मया सह निष्क्रान्ता )

कुन्दलता—अहं वि गोउलेसरिं अणुसरिस्सं । [ अहमपि गोकुलेश्वरीमनुसरिष्यामि । ]

( [2]इति निष्क्रान्ता )

कृष्णः—( पुरो गत्वा । सौत्सुक्यम् )

मनस्ययं सौमनसस्य धन्वन-
स्तनोति टङ्कारकदम्बसम्भ्रमम् ।
अनङ्गखेलाखुरलीविशृङ्खल-
स्खलद्विशाखाकलमेखलारवः ॥ ४२ ॥

( सव्यतो निभाल्य ) सखे, सत्यमाह कुन्दलता यदद्य राधामाधुर्यमपि नानुभूयते । तदहमिमामेव [3]सम्भावयामि । ( इति निष्क्रान्तः )

( ततः प्रविशति पौर्णमासीगार्गीरोहिण्यादिभिरावृता यशोदा )

यशोदा—हंत सहि रोहिणी, ण जाणे कीस विलंबइ वच्छो । [ हन्त ! सखि रोहिणि, न जाने कस्माद्विलम्बते वत्सः । ]

कुन्दलता—( प्रविश्य । सस्मितम् ) अम्म, मा विसीद । सो क्खु सुविमाणाहिं अंबरालंबिणीहिं विंदारअरमणीहिं हसिदपुप्फवरिसेण उवासिज्जंतो विलंबदि । [ अम्ब, मा विषीद । स खलु सुविमानाभिरम्बरालम्बिनीभिः वृन्दारकरमणीभिः हसितपुष्पवृष्ट्या उपास्यमानो विलम्बते । )

---

मनस्येति । स्खलद् विशाखायाः कलः मेखलारवः मे मनसि सौमनसस्य धन्वनः पुष्पधनुषः [4]टङ्कारः कदम्बस्य सम्भ्रमं तनोति । कीदृशः ? अनङ्गखेलाखुरलीविशृङ्खलः कन्दर्पलीलाभ्यासोद्दामः ॥ ४२ ॥

सत्यमाह कुन्दलता । किमाह—न केवलं भारुण्डया जटिलाप्रभृतिभिः सर्ववृद्धाभिरिति निरोधेनैव 'अद्य राधामाधुर्य'मित्यादि ।

सुविमानाभिः शोभना विमाना रथा यासां ताभिः पक्षे सुष्ठु विगतमानाभिः । अम्बरालम्बिनीभिः अम्बरः आकाशः पक्षे वस्त्रम् । वृन्दारकरमणीभिः देवरमणीभिः पक्षे मनोज्ञरमणीभिः । 'वृन्दारकः सुरश्रेष्ठे मनोज्ञेऽपि च वाच्यवत्' इति । हसितपुष्पवर्षेण विकसितपुष्पवर्षेण पक्षे हास्यपुष्पवर्षेणोपास्यमानो विलम्बते ।

---

१. पद्दे—अ० । २. अयं व० पु० नास्ति । ३. सम्भावये—अ० । ४. टङ्कारवः कादम्बस्य—अ० ।

रोहिणी—दिट्ठं मए तहिं दिण्णअहे दोणं कुमारीणं सोन्देरं पेक्खिअओ विंदारअसुंदरीओ अच्छराओ विमच्छराओ होंति। [ दृष्टं मया तस्मिन् दिवसे द्वयोः कुमार्योस्सौन्दर्यं प्रेक्ष्य वृन्दारकसुन्दर्यः अप्सराः विमत्सराः भवन्ति । ]

यशोदा—भअवदि, चंदाअलीणोमालिआ राहा माहवी अ सव्वाओ मह आसाओ गुणसोरहपूरेण पूरेदि तत्थवि वच्छो विअ वच्छा लहुइ नेत्तभिंगं सोन्देरमरंदेण[1] आणंदेइ। [ भगवति, चन्द्रावली नवमालिका राधा माधवी च सर्वा मम आशा गुणसौरभपूरेण पूरयति तत्रापि वत्स इव वत्सा लघ्वी नेत्रभृङ्गं सौन्दर्यमरन्देनानन्दयति । ]

पौर्णमासी—गोकुलेश्वरि, सर्वेषां गोकुलवासिनामीदृगेव समुदाचारः ।

गार्गी—कुंदलदे, कीस तुम्हेहिं गोउलेसरीघरे राही [2]णिज्जइ ?

[ कुन्दलते, कस्मात् त्वया गोकुलेश्वरीगृहे राधिका नीयते ? ]

यशोदा—ताए सक्किआइं वत्थुइं उवजुंजाणो जणो दीहाउओ होउ त्ति [3]दुव्वासेण दिण्णवरं राहिअं सुणिअ आ आरेमि ।

[ तया संस्कृतानि वस्तून्युपभुञ्जानो जनो दीर्घायुर्भवत्विति दुर्वाससो दत्तवरां राधिकां श्रुत्वाकारयामि । ]

पौर्णमासी—गोकुलेश्वरि, कृष्णमाशङ्क्य जटिला खिद्यते ।

यशोदा—( विहस्य ) थणंधअम्मि वच्छे को क्खु ताए संकाए ओसरो। [ स्तनन्धये वत्से कः खलु तस्या शङ्काया अवसरः । ]

कुन्दलता—( नीचैः ) सच्चं च्चेअ थणंधओ राउलाणीए पुत्तओ, जं गिरिंदं कंदुएदि ! [ सत्यमेव स्तनन्धयो राज्ञ्याः पुत्रः यद्गिरीन्द्रं कन्दुकयति । ]

पौर्णमासी—( दृष्ट्वा । सहर्षम् )

प्रथयन् जगदण्डमण्डलीमुकुटारोहणयोग्यतामसौ ।
स्फुरति व्रजराजगेहिनीखनिजन्मा पुरतो हरिन्मणिः ॥ ४३ ॥

---

मम आशाः दिशः ( च )। तत्रापि तयोर्मध्ये । वत्स इव कृष्ण इव वत्सा वात्सल्यपात्री लघ्वी कनिष्ठा सौन्दर्यमरन्देन पुष्परसेनानन्दयति । सा न केवलं तवैवानन्ददायिनी अपि तु सर्वेषामिति । आकारयामि आह्वयामि । पुत्रः यत् यस्माद् गिरीन्द्रं कन्दुकयति कन्दुकमिव करोति ।

प्रथयन्निति । ब्रह्माण्डमण्डलीमुकुटारोहणे योग्यतां प्रथयन् । हरिन्मणिः श्रीकृष्णः ॥ ४३ ॥

१. मरंदण—अ० । २. णीजइ—अ० । ३. दुवासएण—ब० ।

( प्रविश्य कृष्णः )

कृष्णः—मातरुन्मार्जय साश्रुणी लोचने, पुरस्तादेषोऽस्मि ।

रोहिणी—( दीपावल्या नीराज्य । संस्कृतेन )

विन्यस्य वर्त्मनि गवां नयने कथञ्चि-
न्नीतातिदीर्घदिवसोत्तरयामयुग्मम् ।
हा ! वत्स वत्सलतरां भवदेकबन्धुं
सन्धुक्षय स्वजननीमुपगूहनेन ॥ ४४ ॥

कृष्णः—(मातुरुत्सङ्गे स्वोत्तमाङ्गमाधाय) अंब, देहि मे मणिमण्डनम् ।

( इति वात्सल्यविलासं प्रपञ्चयति )

पौर्णमासी—

निचुलितगिरिधातुस्फीतपत्रावलीका-
नखिलसुरभिरेणून् क्षालयद्भिर्यशोदा ।
कुचकलसवियुक्तैस्स्नेहमाध्वीकमेध्यै-
स्तव नवमभिषेकं दुग्धपूरैः करोति ॥ ४५ ॥

कुन्दलता—कण्ह, पिएहि [1]राउणालीए त्थणामिअं जं कुडंग-वहूणां केलीणं प्पसंगेण किलंतोसि। [ कृष्ण, पिब राज्ञ्यास्स्तनामृतं यतः कुञ्ज-वधूनां केलीनां प्रसङ्गेन क्लान्तोऽसि । ]

यशोदा—वच्छे, कीस हससि ! पेक्ख अज्जवि कोमारं ण अदिक्कन्तं। ता को क्खु दोसो त्थणपाणे । [ वत्से, कस्माद्धससि ? पश्याद्यापि कौमारं नातिक्रान्तं ततः को दोषः स्तनपाने । ]

कुन्दलता—भअवदि, सच्चं कधेदि राउलानी जं अज्ज एसो वालाणं मंडलेण महारासे कीलेदि । [ भगवति, सत्यं कथयति राज्ञी यद-द्यैष बालानां मण्डलेन महारासे क्रीडति । ]

---

लोचने उन्मार्ज्य मां पश्येति भावः ।

विन्यस्येति । हे वत्स गवां वर्त्मनि नयने विन्यस्य नीतमतिदीर्घदिव-सस्योत्तरप्रहरद्वयं यया तां स्वजननीमालिङ्गनेन सन्धुक्षय सुखय ॥ ४४ ॥

निचुलितेति । यशोदावात्सल्यभरेण स्तनकलसाद्विमुक्तैः स्नेहरूपमधुना मेध्यैः पवित्रैरखिलसुरभिरेणून् क्षालयद्भिर्दुग्धपूरैस्तवाभिषेकं करोति । कीदृशान् रेणून् ? निचुलितः आच्छादितः गिरिधातूनां स्फीतपत्रावली यैस्तान् ॥ ४५ ॥

राज्ञ्याः स्तनामृतमिति । यत् कुञ्जवधूनां केलीनां पक्षे वधूनां सम्बन्धे

---

१. पिवेहि राओणालीए—अ०, पिएहि रओलवीए—व० ।

यशोदा—भअवदि, को क्खु महारासो णाम ? [ भगवति, कः खलु महारासो नाम ? ]

( कृष्णः सत्रपं भ्रूभङ्गेण कुन्दलतामवलोकते । )

पौर्णमासी—( स्मितं कृत्वा ) गोपेश्वरि, लास्य_लीलाविशेषः ।

कुन्दलता—( अपवार्य )

तिण्णाउला चओरी पंजरिआसंगदा चिरं जलइ ।
पाअं वंजुलकुंजे ताराहीस प्पधारेहि ॥ ४६ ॥
[ तृष्णाकुला चकोरी पञ्जरिकासङ्गता चिरं ज्वलति ।
पादं वञ्जुलकुञ्जे ताराधीश प्रसारय । ]

( कृष्णः भ्रूसंज्ञया स्वीकारं नाटयति )

( नेपथ्ये )

त्वन्मुखेन्दुलवलोकनोद्गतस्फारतापभरधूपितात्मनः ।
एहि वत्स मम देहि शीतलं क्षिप्रमस्य परिरम्भचन्दनम् ॥ १७ ॥

कृष्णः—पुरस्तादेष मद्भावुकमाशंसन्नावुकस्तिष्ठति । तदेनमानन्दयामि । ( इति यशोदादिभिरावृतो निष्क्रान्तः )

कुन्दलता—( परिक्रम्य ) दिट्ठिआ वाणीरवणे ललिदाए राही आणीअदि । [ दिष्ट्या वानीरवने ललितया राधिकाऽऽनीयते । ]

( ततः प्रविशति तथाविधा राधा )

राधा—हला ललिदे, पसंसीअदु एसा उवत्थिदा खखणदा जाए तुम्हाणं का वि सुहासा अंकुरीअदि । [ सखि ललिते, प्रशंस्यतामेषोपस्थिता क्षणदा यया युष्माकं कापि शुभाशाऽङ्कुरीयते । ]

ललिता—रंजेदित्ति रअणी भणीअदि । [ रञ्जयतीति रजनी भण्यते । ]

---

याः केलयस्तासां प्रसङ्गेन क्लान्तोऽसि । कौमारं नातिक्रान्तं तस्माद् कः खलु दोषः स्तनपाने । यद्य एष बालानां बालकानां रहस्यपक्षे स्त्रीणां मण्डलेन क्रीडति ।

तृष्णेति । तृष्णाकुलाचकोरी श्रीराधा पञ्जरिकासङ्गता पञ्जरस्थिता चिरं ज्वलति । अशोककुञ्जे हे ताराधीश कृष्ण पादं चरणं प्रसारय । पक्षे पादं किरणं ताराधीशश्चन्द्रः । दूत्यं नाम सन्ध्यन्तरमिदम् । तथा च 'दूत्यन्तु सहकारित्वं दुर्घटे कार्यवस्तुनि ।' ( ना० चं० का० । १४३ ) अत्र जटिलाप्रातिकूल्येन दुर्घटे राधासङ्गमकार्ये कुन्दलतायाः सहकारित्वं दूत्यम् ॥ ४६ ॥

त्वन्मुखेन्द्वित्यादि श्रीनन्दवाक्यम् । हे वत्स तव मुखावलोकनं विनातितापितशरीरस्यास्य मम सम्बन्धे शीतलं परिरम्भचन्दनं देहि ॥ ४७ ॥

मद्भावुकं मम कुशलमाशंसन्निच्छन् । आवुको जनकः । वानीरं पाणिसिटकीति गौडदेशे प्रसिद्धम् । क्षणदा रजनी ।

कुन्दलता—( उपसृत्य ) ललिदे, अज्ज रअणीमुहे इसिहसिदेण कडक्खकुअलएण फुडं तुम्हेहिं ण अच्चिदो कण्णो । [ ललितेऽद्य रजनीमुखे ईषद्विकसितेन कटाक्षकुवलयेन स्फुटं युष्माभिर्नार्चितः कृष्णः । ]

राधिका—( सरोमाञ्चम् ) ललिदे, को क्खु कण्होत्ति सुणीअदि । जेण केअलं कण्णस्स च्चेअ अदिधीहोंतेण उम्मत्ती किज्जदि । [ ललिते, कः खलु कृष्ण इति श्रूयते । येन केवलं कर्णस्यैवातिथिभूयमानेन उन्मत्तीक्रियते । ]

कुन्दलता—सहि, एसो लोउत्तरस्स वत्थुणो णिसग्गो जं क्खु सव्वदा उवभुंजिअंतं वि अभुत्तपुव्वं अ होदि ।

[ सखि, लोकोत्तरस्य वस्तुनो निसर्गः यत् खलु सर्वदोपभुज्यमानमप्यभुक्तपूर्वमेव भवति । ]

ललिता—कुंदलदे, ण केअलं लोउत्तरस्स वत्थुणो किंतु गाढाणुराअस्स वि । जेण णिअगोअरो जणो खणे खणे अणुरुवो करीअदि । [ कुन्दलते, न केवलं लोकोत्तरस्य वस्तुनः किन्तु गाढानुरागस्यापि । येन निजगोचरो जनो क्षणे क्षणेऽनुरूपः[1] क्रियते । ]

राधिका—ललिदे, अदिण्णुत्तरा कीस अण्णं भणसि ? [ ललिते, अदत्तोत्तरा कस्मादन्यद् भणसि ? ]

ललिता—( संस्कृतेन )

नवाम्बुधरमण्डलीमदविडम्बिदेहद्युति-
र्व्रजेन्द्रकुलनन्दनः स्फुरति कोऽपि नव्यो युवा ।
सखि स्थिरपतिव्रतानिकरनीविबन्धार्गल-
च्छिदाकरणकौतुकी जयति यस्य वंशीध्वनिः ॥ ४८ ॥

राधिका—( सास्रम् ) कुंदलदे, अवि णाम इमस्स एक्कस्स विहदणे-

---

कः खलु कृष्ण इति । परिन्यासो नाम मुखसन्ध्यङ्गोऽयम् । तथा च 'बीजनिष्पत्तिकथनं परिन्यास इतीर्यते ।' ( ना० चं० का० । ५२ ) अत्रोन्मत्तीकरणेन बीजनिष्पत्तिकथनात् परिन्यासः ।

नवेति । कोऽपि नव्यो युवा कृष्णोऽत्र स्फुरति यस्य वंशीध्वनिः जयति । कीदृशो ध्वनिः—स्थिरस्याच्छेद्यस्य पतिव्रतासमूहनीविबन्धार्गलस्य छेदने कौतुकी ॥ ४८ ॥

कुन्दलते इत्यादि । अत्र समाधानं नाम मुखसन्ध्यङ्गमिदम् । तथा च—

---

१. अपूर्वः—च. ।

त्तस्स मग्गं खणं पि आरोहिस्सदि सो मे धण्णस्स कण्णस्स अदिधी ! [ कुन्दलते, अपि नामास्यैकस्यापि हतनेत्रस्य मार्गं क्षणमप्यारोहिष्यति स मे धन्यस्य कर्णस्यातिथिः । ]

कुन्दलता—अइ तिण्णाकुले, कल्लिपओसारंहे विसाहाए तुमं तिणा संगमिदा आसी । [ अयि तृष्णाकुले, कल्यप्रदोषारम्भे विशाखया त्वं तेन सङ्गमिता आसीः । ]

राधिका—साहु सुमारिदं प्पिअसहीए । जं एक्ककवारं च्चेअ विज्जुलिआ विलासो व्विअ सो तुम्हाणं गोउलजुअराओ णेत्तचमक्कारकारी संवुत्तो इमस्स मंदभाइणो जणस्स । [ साधु स्मारितं प्रियसख्या । यदेकवारमेव विद्युद् विलास इव स युष्माकं गोकुलयुवराजः नेत्रचमत्कारकारी संवृत्तः अस्य मन्दभागिनो जनस्य । ]

( ततः प्रविशति कृष्णः । )

कृष्णः—

कलविङ्ककलं कलङ्कयन्ती ललिताकङ्कणझंकृतिर्वरेयम् ।
मम चेतसि वेतसीनिकुञ्जं समया सङ्गमयाञ्चकार रङ्गम् ।। ४९ ।।

( पुनरुत्कर्णो भवन् । सपुलकम् । )

मधुरिमलहरीभिः स्तम्भयत्यम्बरे या
स्मरमदसरसानां सारसानां रुतानि ।
इदमुदयति राधाकिङ्किणीझंकृतिर्मे
हृदि परिणमयन्ती विक्रियाडम्बराणि ।। ५० ।।

---

'बीजस्य पुनरादानं समाधानमिहोच्यते ।' ( ना० चं० का० ५६ ) अत्र स्वयं राधया पुनरनुरागबीजस्याधानात् समाधानम् । कल्यप्रदोपारम्भे गतदिवसस्य सन्ध्यासमये ।

कलविङ्केति । कलविङ्कस्य चटकस्य कलं कलङ्कयन्ती वरा श्रेष्ठेयं ललिताकङ्कणझङ्कृतिः वेतसीनिकुञ्जं समया कुञ्जस्य समीपे । अव्ययीभावे क्लीबत्वम् । मम चेतसि रङ्गं सङ्गमयाञ्चकार प्रापितवती ।। ४९ ।।

मधुरिमेति । मे हृदि विक्रियाडम्बराणि परिणमयन्ती सती राधाकिङ्किणीझङ्कृतिरुदयतीति । प्राप्तिः नाम मुखसन्ध्यङ्गमिदम् । तथा च—'प्राज्ञैः सुखस्य सम्प्राप्तिः प्राप्तिरित्यभिधीयते ।' ( ना० चं० का० ५५ )। अत्र राधाकिङ्किणीझङ्कृतिश्रवणात् कृष्णस्य सुखसम्प्राप्तिः प्राप्तिः ।। ५० ।।

राधिका—( सचमत्कारं संस्कृतेन )

कुलवरतनुधर्मग्रावबृन्दानि भिन्दन्
सुमुखि निशितदीर्घापाङ्गटङ्कच्छटाभिः ।
युगपदयमपूर्वः कः पुरो विश्वकर्मा
मरकतमणिलक्षैर्गोष्ठकक्षां चिनोति ॥ ५१ ॥

ललिता—हला, सो एसो दे पराणनाधो। [ सखि, स एष ते प्राणनाथः । ]

राधिका—( सोन्मादं पुनः संस्कृतेन )

स एष किमु गोपिका कुमुदिनीसुधादीधितिः
स एष किमु गोकुलस्फुरितयौवराज्योत्सवः ।
स एष किमु मन्मनःपिकविनोदपुष्पाकरः
कृशोदरि दृशोर्द्वयीममृतवीचिभिः सिञ्चति ॥ ५२ ॥

कृष्णः—( साश्चर्यम् )

असकृदसकृदेषा का चमत्कारविद्या
मम [1]रसलहरीभिस्तर्षमन्तस्तनोति ।

---

कुलवरेति । पुरोऽग्रे पूर्वोद्भूतः कोऽनिर्वचनीयो विश्वकर्मा निशितस्तीक्ष्णो दीर्घापाङ्ग एव टङ्कः । 'टङ्क पाषाणदारणः' इत्यमरः । तस्य कान्तिभिः कुलवरतनूनां कुलसुन्दरीणां धर्मः पातिव्रत्यं स एव ग्रावबृन्दं क्षुद्रशिलाबृन्दं तानि भिन्दन् । युगपदेकदैव मरकतमणिलक्षैर्मरकतमणीनां लक्षसंख्यैर्गोष्ठकक्षां चिनोति गोष्ठस्य मार्गं ग्रथति । प्रसिद्धः विश्वकर्मा यं पाषाणं भिनत्ति तेनैव पाषाणेन चिनोति । अयं तु धर्मपाषाणं भित्त्वा मरकतेन चिनोतीति अपूर्वलक्षणम् । प्रकृतार्थस्तु कटाक्षेण स्त्रीधर्मं नाशयति, अङ्गकान्त्या गोष्ठकक्षामावृणोति ॥५१॥

स एष इति । यः मम मनः एव पिकस्तस्य विनोदे पुष्पाकरो वसन्तः स एव दृशोर्द्वयीममृततरङ्गैः सिञ्चतीति । स एष इति वारत्रयं सचमत्कारातिशयविस्मयबोधकम् । परिभावना नाम मुखसन्ध्यङ्गमिदम् । तथा च 'श्लाघ्यैश्चित्तचमत्कारो गुणौघैः परिभावना ।' ( ना० चं० का०।५८ ) यथा कुलवरतनुधर्मादि स एष किमु गोपिकादिश्लोकाभ्यां कृष्णस्य वैदग्ध्यसौन्दर्यादिगुणदर्शनेन राधायाश्चमत्कारः ॥ ५२ ॥

असकृदिति । एषा का चमत्कारविद्या रसतरङ्गैर्ममान्तस्तर्षं मम मनसि तृष्णां तनोति । विदितम् । विद्या न किन्तु कापि कल्याणवापी कीदृशी—व्याय-

---

१. तर्षमं नस्तनोति—अ० ।

विदितमहह सेयं व्यायतापाङ्गलीला
मधुरिमपरिवाहा कापि कल्याणवापी ॥ ५३ ॥

( पुनर्निरूप्य ) कथं सत्यमेव । तथाहि—

यस्याः शैवलमञ्जरीविरचितासङ्गं रथाङ्गद्वयं
फुल्लं पङ्कजपञ्चकञ्च बिसयोर्युग्मञ्च मूले नतम् ।
उन्मीलत्यतिचञ्चलं सशफरीद्वन्द्वं व्रजे भ्राजते
सेयं शुद्धतरानुरागपयसा पूर्णा पुरो दीर्घिका ॥ ५४ ॥

राधिका—हला, ण जाणे कोस घुंमिदह्मि । ता देहि मे हत्थावलंबं । [ सखि, न जाने कस्माद् घूर्णितास्मि । तद्देहि मे हस्तावलम्बम् । ]

ललिता—सहि, वीसद्धा होहि । [ सखि, विश्रब्धा भव । ] ( इति राधाभुजं स्कन्धे निदधाति )

कृष्णः—( सन्निधाय )

समीक्ष्य तव राधिके वदनबिम्बमुद्भासुरं
त्रपाभरपरीतधीः श्रयितुमस्य तुल्यश्रियम् ।
शशी किल कृशीभवन्सुरधुनीतरङ्गोक्षितां
तपस्यति कपर्दिनः स्फुटजटाटवीमाश्रितः ॥ ५५ ॥

( इत्युत्सर्पति )

राधिका—( दृगन्तेनाभिसूच्य ) ललिदे, रक्खेहि मं । [ ललिते, रक्ष माम् । ]

---

ताया: विस्तृतायाः अपाङ्गलीलायाः मधुरिमैव परीवाहो यस्याः सा । जलोच्छ्वासः परीवाहः ॥ ५३ ॥

यस्या इति । सा प्रसिद्धेयमनुरागजलपूर्णा दीर्घिका व्रजे भ्राजते । यस्यां रथाङ्गद्वयं चक्रवाकद्वयं पक्षे कुचद्वयमुन्मीलति । कीदृशम्-शैवालमञ्जरीभिर्विरचिता आसक्तिर्यत्र तद्रोमावली शैवलमञ्जरीत्वे निरूप्यते तत्र कृतासक्तिम् । फुल्लं पङ्कजपञ्चकं मुखं पादद्वयं करद्वयञ्च । विसयोर्मृणालयोः युग्मं हस्तद्वयम् । कीदृशम्—मूले नतं शफरीद्वन्द्वं नेत्रद्वन्द्वञ्च ॥ ५४ ॥

विस्रब्धः प्रणयः सख्यमिति यावत् । नात्र साध्वसं कुर्वित्यर्थः ।

समीक्ष्येति । हे राधिके तव वदनबिम्बं समीक्ष्य त्रपाभरपरीतधीः शशी अस्य तव वदनस्य तुल्यश्रियं श्रयितुं कपर्दिनो महादेवस्य स्फुटजटाटवीमाश्रितः सन् तपस्यति । विलोभनं नाम मुखसन्ध्यङ्गमिदम् । तथा च 'नायिकादिगुणानां यद्वर्णनं तद्विलोभनम्' । ( ना० चं० का० ५३ ) अत्र राधासौन्दर्यगुणवर्णनाद्विलोभनम् ॥ ५५ ॥

कृष्णः—

मीलनं मीलितेनायं विन्दन् फुल्लेन फुल्लताम् ।
अपाङ्गेनातिकृष्णेन कृष्णस्तव वशीकृतः ॥ ५६ ॥

राधिका—( सगद्गदम् ) कुंदलदे, णिवारीअदु एसो सुंदेरुत्तंसो जं गुरुपराहीणह्मि मंदभाइणी । [ कुन्दलते, निवार्यतामेष सुन्दरोत्तंसः यद्‌गुरुपराधीनास्मि मन्दभागिनी । ]

( प्रविश्य जटिला )

जटिला—अरे महामोहना, धम्ममग्गादो पाडिदं तुए सव्वं च्चेअ गोउलबालाकुलं । केअलं मह पुत्तपुण्णेण बहुडिआ उव्वरिदत्थि । ता णामग्गहणस्स वि एक्कं रक्खेहि ।

[ रे महामोहना, धर्ममार्गात् पातितं त्वया सर्वमेव गोकुलबालाकुलम् । केवलं मम पुत्रपुण्येन वधूटिकोर्वरितास्ति । तस्मान्नामग्रहणस्याप्येकां रक्ष । ]

( इति राधामादाय द्वाभ्यां सह निष्क्रान्ता । )

कृष्णः—प्रस्थिता प्रिया । तदहं गवां सम्भालनाय प्रयामीति ।

( इति निष्क्रान्तः )

( इति निष्क्रान्ताः सर्वे )

इति सायमुत्सवो नाम प्रथमोऽङ्कः ।

---

मीलनमिति । अयमहं कृष्णस्तवातिकृष्णेनापाङ्गेन वशीकृतः । किं कुर्वन्—मीलितेन मुद्रापाङ्गेन मीलनं म्लानत्वं विन्दन् प्राप्नुवन् फुल्लेन फुल्लतां प्रफुल्लताञ्च ॥ ५६ ॥

रे महामोहन इति वक्तव्ये मोहनेति क्रोधवशादवज्ञावचनमिदम् ।

इति प्रथमाङ्क-व्याख्या ।



# द्वितीयोऽङ्कः

( ततः प्रविशति वृन्दा )

वृन्दा—( नभोमण्डलमालोक्य )

न्यञ्चत्कुञ्चितकान्तिरिच्छति शशी यस्याः पतिर्वारुणीं
प्राप्य स्वैरमगौरवं गुरुरपि ग्लानिं परामञ्चति ।
सर्वोऽप्येष कृशीभवन्नुडुपरीवारस्तिरोधित्सते
यामिन्याः क्षयलक्षणं विधिवशादस्याः स्फुटं लक्ष्यते ॥ १ ॥

( परिक्रम्य )

रजनिविपरिणामे गर्गरीणां गरीयान्
दधिमथनविनोदादुद्भवन्नेष नादः ।
अमरनगरकक्षाचक्रमाक्रम्य सद्यः
स्मरयति सुरवृन्दान्यब्धिमन्थोत्सवस्य ॥ २ ॥

( पुरो दृष्टिं क्षिपन्ती )

करोति दधिमन्थनं स्फुटविसर्पिफेनच्छटा-
विचित्रितगृहाङ्गणं गहनगर्गरीगर्जितम् ।

---

सायाह्ने वनगोष्ठागमनसमये श्रीकृष्णस्यातिमधुरां लीलां प्रथमाङ्के प्रकाश्य रात्रिशेषादिष्वपि तादृशीं लीलां वर्णयन् द्वितीयाङ्कमारभते—ततः प्रविशति वृन्देति ।

न्यञ्चदिति । अस्या यामिन्याः क्षयस्य लक्षणं लक्ष्यते । अस्या यामिन्याः पतिः शशी वारुणीं वरुणस्येयं पश्चिमां दिशमिच्छति । श्लेषेण वारुणीं मदिराम् । अतो हेतोः गुरुरपि गौरवयुक्तोऽपि अगौरवं प्राप्य परां ग्लानिमञ्चति प्राप्नोति । [1]उडुपरीवारः तारागणः कृशीभवन् तिरोधित्सतेऽदृश्यो भवति पक्षे गुरुर्नक्षत्ररूपो बृहस्पतिः ॥ १ ॥

रजनीति । रजनिशेषे गर्गरीणां दधिमथनपात्राणां नादः अमरनगरस्य कक्षा-चक्रं वर्त्म समूहमाक्रम्याब्धिमन्थोत्सवस्याब्धिमन्थोत्सवं सुरवृन्दानि स्मरयति उत्कण्ठयति । स्मृ आध्याने । आध्यानमुत्कण्ठा तत्र सानुबद्धत्वं तेन ह्रस्वत्वञ्च॥२॥

करोतीति । मालती दधिमन्थनं करोति । स्फुटमित्यादि क्रियाविशेषणं मन्थनमित्यस्य विशेषणं वा । दधिमन्थनं दण्डाऽऽघातेन दध्नः स्फोटनं स्फुटस्तेन

---

१. सर्वोडुपरि—ब. ।

मुहुर्गुणविकर्षणप्रवणताक्रमाकुञ्चित-
प्रसारितकरद्वयी क्वणितकङ्कणं मालती ॥ ३ ॥

( पार्श्वतो विलोक्य । सस्मितम् )

उत्ताम्यन्ती विरमति तमस्तोमसम्पत्प्रपञ्चे
न्यञ्चन्मूर्द्धा सरभसमसौ स्रस्तवेणीवृतांसा ।
मन्दस्पन्दं दिशि दिशि दृशोर्द्वन्द्वमल्पं क्षिपन्ती
कुञ्जाद्गोष्ठं विशति चकिता वक्त्रमावृत्य पाली ॥ ४ ॥

( पुनरन्यतो विलोक्य । साश्चर्यम् । )

श्रोण्यां नाभीसरोजप्रवरसहचरं बिभ्रतीयं दुकूलं
श्रीवत्सोत्सङ्गसङ्गप्रणयिनमुरसि स्फारमासज्य हारम् ।
उत्तंसं न्यस्य कर्णे मकरपरिचितं पत्रभङ्गं वहन्ती
गण्डे चक्राङ्कपाणिप्रणिहितमयते श्यामला गोकुलाय ॥ ५ ॥

( पुनरन्यतः समीक्ष्य । सखेदम् )

अशिथिलकबरीका रागिबिम्बाधरश्री-
रपरिलुलितलीलापत्रवल्लीविलासा ।

---

विसर्पिणीभिर्गमनशीलाभिः फेनच्छटाभिर्विचित्रितं गृहाङ्गणं यस्मात्तद्गहनं गर्गरीणां गर्जनं यस्मात् । रज्जुविकर्षणे प्रवणता निपुणता तया क्रमेण कुञ्चितं प्रसारितञ्च यत् करद्वयं तत्र क्वणितकङ्कणं यस्मात् तत् । दृष्टं नाम नाटकभूषणमिदम् । 'जात्यादिवर्णनं धीरैर्दृष्टमित्यभिधीयते ।' ( ना० चं० का०।१८३ ) अत्र दधि-मथनक्रियास्वभाववर्णनं दृष्टम् ॥ ३ ॥

श्रीमद्भागवतादौ बाहुल्येनोक्तां रासलीलां पूर्वाङ्के यशोदाकुन्दलतासंवादेन सङ्क्षेपत उक्त्वा रात्रिशेषे स्वस्वगृहागमनप्रकारशोभां बाहुल्येनात्र वर्णनं कवि-निर्मितम् । उत्ताम्यन्तीति । तमस्समूह एव संपत्तस्याः प्रपञ्चे विरमति सति पाली नामा गोपी उत्ताम्यन्ती सती दिशि दिशि दृशोर्द्वन्द्वं क्षिपती सती गोष्ठाद् कुञ्जं विशति ॥ ४ ॥

श्रोण्यामिति । नाभीसरोजप्रवरस्यार्थात् कृष्णनाभिपद्मश्रेष्ठस्य सहचरं दुकूलं पीताम्बरमियं श्यामला बिभ्रती सती गोकुलाय गोकुलमयति गच्छति । हारमुरस्यासज्य दत्त्वा । कीदृशम्—श्रीवत्सस्योत्सङ्गे क्रोडे यस्सङ्गस्तत्र प्रणयिनं श्रीकृष्णवक्षःस्थमित्यर्थः । मकरपरिचितमुत्तंसं मकरकुण्डलम् । चक्राङ्कः श्रीकृष्णः तस्य पाणिनिर्मितं पत्रभङ्गं गण्डे वहन्ती ॥ ५ ॥

कृष्णसङ्गस्याभावादशिथिलेत्यादि । अशिथिलकबरीकादि सती पद्मा सद्म गृहं

अमुदितमुखकान्तिः सद्मपद्मा प्रपेदे
स्फुटमियमलसाङ्गी विप्रलब्धा बभूव ॥ ६ ॥

( नेपथ्ये )

फुल्लत्याराान्नवविचकिले केलिकुञ्जेऽद्य फुल्ला
शेफालीनां स्खलति कुसुमे हन्त चस्खाल बाला ।
मीलत्युच्चैः कुवलयवने मीलिताक्षी किलासीद्
वाच्यं किं वा परमुपहसीर्मा प्रणामच्छलेन ॥ ७ ॥

वृन्दा—नूनमसौ पद्मनाभे पद्मासुहृदामुपालम्भः ।

( नेपथ्ये )

अहमुल्मुकपुञ्जधर्मिणा हृदि चिन्तानिचयेन चर्चिता ।
भुवि हन्त निविश्य जाग्रती [1]कथमप्यक्षपयं क्षपामिमाम् ॥ ८ ॥

वृन्दा—कथमियं भगवती पौर्णमासी पुरस्तादभिवर्तते ।

( प्रविश्य पौर्णमासी )

पौर्णमासी—( अहमुल्मुकेत्यादि पठित्वा ) कथमग्रतोऽसौ वनदेवी । तदेनामासादयामि ।

वृन्दा—( प्रणम्य ) भगवति, किमिदानीं तव चिन्तानिदानम् ?

---

यतः प्रपेदेऽतः विप्रलब्धा बभूव । अपरिलुलितोऽक्षुण्णः लीलापत्रावलीनां विलासो यत्र ॥ ६ ॥

फुल्लत्याराादिति । सन्ध्यायां नवविचकिले नवमल्लिकायां फुल्लति सति बाला फुल्ला बभूव । अर्द्धरात्रे शेफालीनां कुसुमे स्खलति सति च बाला चस्खाल स्खलितवती । प्रातः कुवलयवने मीलति सति बाला मीलितासीत् । अतः प्रणामच्छलेन मा उपहसीः उपहासं मा कुरु । क्रोधो नाम सन्ध्यन्तरमिदम् । तथा च—'क्रोधस्तु मनसो दीप्तिरपराधादिदर्शनात् ।' ( ना० चं० का०।१३८ ) अत्र पद्मासखीनां हरये रोषः ॥ ७ ॥

एतदेव वृन्दाह—नूनमिति । पद्मनाभे कृष्णे । शङ्खचूडवधं शास्त्रप्रसिद्धं तदेवात्र मधुराद्भुतभयानकवीरवात्सल्यादिरसपोषणादिपूर्वककथनमत्र कविनिर्मितं यावदङ्कसमाप्तिः ।

अहमिति । चिन्तानिचयेन । कीदृशेन—उल्मुकपुञ्जधर्मिणा ज्वलितकाष्ठसमूहतुल्येन चर्चिता युक्ताहं भुवि उपविश्य क्षपां रात्रिमक्षपयम् ॥ ८ ॥

---

१. कथमक्षपयं—अ० ।

पौर्णमासी—वत्से, सन्दिष्टास्मि नगरान्मन्त्रिचक्रचूडामणिना तेनोद्धवेन। यथा—स किल भोजकुलकालिमा दुष्टभूपतिररिष्टकेशिनावाहूय सादरमादिदेश। हन्त! सखायौ कुमारीहारिका पूतना नन्दगोकुले केनापि दिव्यबालेन मर्दितेति सर्वतः किंवदन्ती। तेन कुमारस्य परमात्यन्तिकीनां ममापदां निदानस्य सम्पदां किल कुमारिकायाश्च तत्रावस्थितिरिति तर्कयामि। तच्च गोकुलं सम्प्रति वाटं वृन्दावनमवगाढमित्यतो भवद्भ्यां यत्नेन तत्त्वमवधारणीयमिति।

वृन्दा—ततस्ततः।

पौर्णमासी—ततश्च राधामाधवयोरद्भुतानुभावमनुभूय लब्धसम्भावनेन केशिना निवेदितयाथार्थ्यः पार्थिवो [1]राधानुरोधेन गोकुलमवरोद्धुं स्वयमुद्यतोऽभूत्।

वृन्दा—( सत्रासम् ) ततस्ततः।

पौर्णमासी—ततश्चारिष्टेनानुसृत्य राधायाः पाणिबन्धप्रवादे निवेदिते सोऽयमधुना शिथिलीकृतातङ्कः शङ्खचूडाख्यमात्मनः सुहृत्तमं दुष्टयक्षं कुमारीमाहर्तुं नियुक्तवान्।

वृन्दा—स्थाने खल्वियं तव चिन्ता। तथ्यमेषा दुष्टेनाक्रान्ता त्रिलोकीमेव सन्तापयेत्। यतः—

> विद्योतन्ते गुणपरिमलैर्या समस्तोपविष्टा-
> स्ताः कस्यार्तिं दधति न खलस्पर्शदग्धाः कुमार्यः।

---

नगरान्मथुरापुरात्। भोजकुलकालिमा कंसः। हे सखायौ अरिष्टकेशिनौ। किंवदन्ती जनश्रुतिः। आत्यन्तिकीनामापदां निदानस्यादिकारणस्य कुमारस्य तथा ममात्यन्तिकीनां सम्पदां निदानायाः कुमारिकायाश्च तत्र नन्दगोकुलेऽवस्थितिरित्यहं तर्कयामि। तच्च गोकुलं कर्तृ [2]महावनात् वृन्दावनमवगाढं प्रविष्टं भवद्भ्यामरिष्टकेशिभ्यां तत्त्वमवधारणीयम्। लब्धसम्भावनेन लब्धप्रतीतिना केशिना निवेदितयाथार्थ्यः राधामाधवयोर्यथाद्भुतानुभावः[3] दृष्टस्तथैव कथितः। पार्थिवः कंसः।

राधायाः पाणिबन्धः पाणिग्रहणं तस्य प्रवादेऽरिष्टेन निवेदिते सति शिथिलीकृता तयोः कुमारकुमार्योः वृन्दावनावस्थाने[4] वा शङ्का येन सः। स्थाने युक्तम्। एषा राधा। दुष्टेन शङ्खचूडेन।

विद्योतन्ते इति। याः कुमार्यः गुणपरिमलैः समस्तोपरिष्टाद् विद्योतन्ते

---

१. राधानुरोधि गोकुल—अ०। २. महावनं वृन्दावन—अ०।
३. नुभावं दृष्टं तथैव—व०। ४. वृन्दावनावस्थिता वाऽऽशङ्का—अ०।

भूयो भूयः स्वयमनुपमां क्लान्तिमासादयन्ती-
मन्दाक्रान्ता भवति जगतः क्लेशदात्री हि चिन्ता ॥ ९ ॥

( प्रविश्य सम्भ्रान्ता कुन्दलता )

कुन्दलता—भअवदि, अच्चरिअं। [ भगवत्याश्चर्यम् ]

पौर्णमासी—किं तदाश्चर्यम् ?

कुन्दलता—दिट्ठो मए गोअट्ठणमल्लस्स मंदिरपेरंते उज्झोलंदो[1] किअणमाली। [ दृष्टो मया गोवर्द्धनमल्लस्य मन्दिरपर्यन्ते उद्योतमानः किरणमाली। ]

वृन्दा—( सानन्दम् ) भगवति, मा कुरु चिन्ताम्। यदेष राधायाश्चिरमाराधनेन मित्रस्य वृषभानोः सौहृदेन चानुरञ्जितो भानुरेनां रक्षितुमासेदिवान्।

पौर्णमासी—नायं भानुः किन्तु स एव कंसस्य पक्षीयो यक्षो भविष्यति।

कुन्दलता—इक्खणविक्खोणहेहिं [2]मउहपुंजेहिं दुल्लक्खणो एसो जक्खोत्ति ण संभावीअदि। [ ईक्षणविक्षोभणैः मयूखपुञ्जैर्दुर्लक्ष्य एष यक्ष इति न सम्भाव्यते। ]

पौर्णमासी—सांक्रामिकमिदं मयूखचक्रन्नतु नैसर्गिकम्।

कुन्दलता—कुदो तं सक्कंतं ? [ कुतस्तत् संक्रान्तम् ? ]

पौर्णमासी—चूडामणितः।

वृन्दा—कुतस्तन्महारत्नमवाप्तम् ?

---

ताः खलु स्पर्शदग्धाः सत्यः कस्यार्तिं न दधति। मन्दाक्रान्ता चित्रानक्षत्रं स्वयं क्लेशमासादयन्ती जगतः क्लेशदात्री भवति। मन्दः शनिः मन्दाक्रान्ता छन्दश्च। दार्ष्टान्तपक्षे मन्दः कंसः चित्रा राधा। हेत्ववधारणं नाम सन्ध्यन्तरमिदम्। तथा हि 'निश्चयो हेतुनार्थस्य मतं हेत्ववधारणम्'। ( ना० चं० का०। १४४ ) अत्र चित्रादर्शनोपबृंहितेन सर्वगणोत्तमस्त्रीदुःखरूपेण हेतुना सर्वजनदुःखस्य निश्चयाद्धेत्ववधारणम् ॥ ९ ॥

मन्दिरपर्यन्ते मन्दिरसीमायाम्। किरणमाली भानुः। एनां राधाम्। ईक्षणविक्षोभणैर्मयूखपुञ्जैः किरणसमूहैः। साङ्क्रामिकं संसर्गजातम्। तदाधारप्राणधारकम् अधरस्य धारणकर्तुः प्राणधारकम्। अमुना शङ्खचूडेनापनीतम् अपहृतम्। चण्डरश्मेः सूर्यस्य वासरे। अस्याः राधायाः। अघभेदी श्रीकृष्णः।

---

१. उज्जोलंदो—अ०। २. अयं ब–पु. नास्ति।

पौर्णमासी—कुबेरस्य कोशमण्डलरक्षिणामध्यक्षेणामुना तदाधार-प्राणधारकमपनीतम् ।

वृन्दा—आर्ये, चण्डरश्मेरद्य वासरे तस्य मण्डपमवश्यं गमिष्यति राधिका । ततस्त्वया निषिध्यताम् ।

कुन्दलता—वुंदे सा मंदिरादो चिरं तत्थ चलिदत्थि । [ वृन्दे सा मन्दिरतश्चिरं तत्र चलितास्ति । ]

पौर्णमासी—कुन्दलते, ततस्त्वया तूर्णमुपायेनास्याः सन्निधौ निधीयतामघभेदो । वयमपि सङ्कर्षणं सन्निकर्षयितुं प्रयामः ।

( इति वृन्दया सह निष्क्रान्ता । )

विष्कम्भकः ।

कुन्दलता—( परिक्रम्य ) जडिला-ललिदा-विसाहाहिं वेट्टिज्जंती एसा आअच्छदि राही । [ जटिलाललिताविशाखाभिवेष्ट्यमाना एषाऽऽगच्छति राधिका । ]

( ततः प्रविशति यथानिर्दिष्टा राधा )

राधा—( स्वगतम् ) हिअअ मा उत्तम्म । एत्थ दुग्घडं दे पिअप्पेक्खणम् । [ हृदय मोत्ताम्य । अत्र दुर्घटन्ते प्रियप्रेक्षणम् । ]

कुन्दलता—राहि, मंगलेन संगवे च्चेअ संगदासि । [ राधिके मङ्गलेन सङ्गवे एव सङ्गतासि । ]

जटिला—( सरोषम् ) चवले, राहित्ति मा फुडं भणाहि । सुणिअ कण्हो आअमिस्सदि । [ चपले, राधिकेति मा स्फुटं भण । श्रुत्वा कृष्ण आगमिष्यति । ]

ललिता—( सस्मितम् ) साहु भणादि अज्जा । [ साधु भणत्यार्या ]

जटिला—ललिदे, सूरमंडवं लेविदुं अग्गदो जामि । [ ललिते, सूर्यमण्डलं लेप्तुमग्रतो यामि ] ( इति परिक्रामति )

राधा—कुंदलदे, अवि णाम जाणासि सो अम्हादिसीणां दुल्लहदंसणो तुम्ह देअरो कहिं णिवसेदि कहिं वा कीलदी त्ति ? [ कुन्दलते, अपि नाम

विष्कम्भक इति । 'विष्कम्भको भवेद्भावी भूतवस्त्वंशसूचकः ।' ( ना० चं० का० । १९५ ) इति ।

मा उत्तम्य उत्कण्ठया मा खिन्ना भव । प्रातरनन्तरं षड्घटिकाः सङ्गवः । श्रीराधाकृष्णयोः काप्यदृष्टाश्रुतानुरागस्य परां काष्ठां प्रकटयन् भक्तानां हर्षादिजनितानन्दविशेषदानार्थमाह—कुन्दलतेत्यादिना । अमृतसागरे निमग्नानां तृष्णाजन्यबाधाया ज्ञापकोऽयं व्याहारो भाषणम् ।

जानासि सः अस्मादृशीनां दुर्लभदर्शनस्तव देवरः कुत्र निवसति कुत्र वा क्रीडतीति ? ]

कुन्दलता—अइ लोलुहे, [1]रत्तिं-दिणं ज्जेव्व तिणा समं रमसि। तहवि एव्वं उक्कंठेसि। [ अयि लोलुपे, रात्रिन्दिवमेवं तेन समं रमयसि। तथाप्येवमुत्कण्ठसे। ]

राधा—हला, अलं इमिणा उवहासेण। धण्णाओ क्खु तुम्हें जाहिं अणिआरिदं अच्छीपुडाइ भरि [2]अ उण एसो अच्चरिओ अमिअपूरो पीअदि। अकिदपुण्णलेसाणं उण अम्हाणं सुणिदुं वि सुदुल्लहो एसा। [ सखि, अलमनेनोपहासेन। धन्या खलु यूयं याभिरनिवारितमक्षिपुटानि भृत्वा पुनः एष आश्चर्योऽमृतपूरः पीयते। अकृतपुण्यलेशानां पुनरस्माकं श्रोतुमपि दुर्लभ एषः। ]

कुन्दलता—राहे, एसो ज्जेव्व अमिअसाअरे णिमग्गाणं तिण्णाबाहावाहारो। [ राधिके, एषं एवामृतसागरे निमग्नानां तृष्णाबाधाव्याहारः। ]

राधा—अइ परदुक्खाणहिण्णे, एक्कं सच्चं भणाहि। अवि णाम सो क्खु धण्णो मुहुत्तो घडिस्सदि। जहिं सिविणे वि तस्स क्खणदंसणलाहसंहावणा मे सुलहा हविस्सदि। अहवा किं दुल्लहे अत्थे लालसाए। [ अयि परदुःखानभिज्ञे, एकं सत्यं भण। अपि नाम स खलु धन्यो मुहूर्त्तो घटिष्यति यत्र स्वप्नेऽपि तस्य क्षणदर्शनलाभसम्भावना मे सुलभा भविष्यति। अथवा किं दुर्लभेऽर्थे लालसया। ]

कुन्दलदे, प्पसीद प्पसीद। अणुकंपेहि अणुकंपेहि। अज्ज सा क्खु सामला कौमुदी जेण पीदा तं ज्जेव्व पुण्णवंतं अप्पणो वामलोअणंचलं एत्थ खिण्णे मंदभाइणि जणे क्खणं अप्पेहि। [ कुन्दलते, प्रसीद प्रसीद। अनुकम्पयानुकम्पय। अद्य सा खलु श्यामला कौमुदी येन पीता तमेव पुण्यवन्तमात्मनो वामलोचनाञ्चलमत्र खिन्ने मन्दभागिनि जने क्षणमर्पय। ]

कुन्दलता—( सासूयमिवालोक्य ) अलं परपुरिसे गिंजंतीहिं तुम्हेहिं सह वाआए वि संमीसणेण। [ अलं परपुरुषे गृध्नन्तीभिर्युष्माभिः सह वाचापि सम्मिश्रणेन ] ( इति धावन्ती जटिलामुपेत्य ) अज्जे, कधं पठमं बह्मणं ण मग्गेसि जो क्खु सूरं पूआपइस्सदि [ आर्ये, कथं प्रथमं ब्राह्मणं न मृगयसे यः खलु सूर्यं पूजापयिष्यति। ]

---

गृधु अभिकाङ्क्षायाम् धातुः। अत्र धीर्नाम सन्ध्यन्तरमिदम्। तथा च 'इष्टार्थसिद्धिपर्यन्ता चिन्ता धीरिति कथ्यते।' ( ना० चं० का०। १३७ ) अस्य

---

१. रत्तिं दिणं—अ०। २. भरिअ उ न रसो—अ०।

जटिला—वच्छे, सच्चं कहेहि। ता प्पसीद। आणेहि एक्कं विअक्खणं बह्मणं। [ वत्से, सत्यं कथयसि। तत् प्रसीद। आनय एकं विचक्षणं ब्राह्मणम्। ]

कुन्दलता—जधा भणादि अज्जा। [ यथा भणत्यार्या ] ( इति निष्क्रान्ता )

ललिता—हला राहि, पेक्ख। लेविदं अज्जाए मंडवं। ता वंदेहि भअवंतं सूरं। [ सखि राधिके, पश्य। लेपितमार्यया मण्डपम्। तद्वन्दस्व भगवन्तं सूर्यम्। ]

राधिका—( सूर्यं प्रणम्य ) देअ, देक्खावेहि अहिट्ठं। [ देव, दर्शयाभीष्टम् ]

( ततः प्रविशति मधुमङ्गलकुन्दलताभ्यामनुगम्यमानो विप्रवेषः कृष्णः )

कृष्णः—( पुरो राधां पश्यन्नपवार्य )

विहारसुरदीघिका मम मनःकरीन्द्रस्य या
विलोचनचकोरयोः शरदमन्दचन्द्रप्रभा।
उरोऽम्बरतटस्य चाभरणचारु तारावली
मयोन्नतमनोरथैरियमलम्भि सा राधिका॥ १०॥

राधा—( दूरतः कृष्णमीपदालोक्य। जनान्तिकं संस्कृतेन )

सहचरि निरातङ्कः कोऽयं युवा मुदिरद्युति-
र्व्रजभुवि कुतः प्राप्तो माद्यन्मतङ्गजविभ्रमः।

---

'राधिका—कुन्दलदे प्पसीद इत्यारभ्य—जटिला—आणेहि एक्कं विअक्खणं बह्मणं' एतत्पर्यन्तं वाक्यार्थमुदाहरणम्। अत्र राधिकाया उत्कण्ठातिशयदर्शनाजटिलासमक्षमेव विप्रवेशेन कृष्णप्रवेशचिन्तनं कुन्दलतायाः धीः।

विहारेति। उन्नतमनोरथैः सा राधिका अलम्भि। कीदृशी—मम मनोरूपहस्तिनः विहारार्थं सुरदीर्घिका गङ्गा। नेत्रचकोरयोः शरदमन्दचन्द्रस्य कान्तिरूपा। उरःस्थलरूपस्याकाशतटस्याभरणरूपा मनोहरताराश्रेणी हाररूपा। अम्बरमाकाशम्। गुणकीर्तनं नाम नाटकभूषणमिदम्। तथाहि—

लोके गुणातिरिक्तानां बहूनां यत्र नामभिः।
एकः संशब्द्यते तत्तु विज्ञेयं गुणकीर्तनम्॥ (ना० चं० का० १७३)
अत्र सुरदीर्घिकादिशब्दैः राधासंशब्दनं गुणकीर्तनम्॥ १०॥

सहचरीति। मम चेतःकोशाद् धृतिधनं कटाक्षचौरैः यः विलुण्ठयति। कोऽयं युवा प्राप्तः। अत्र विधानं नाम मुखसन्ध्यङ्गम्। तथा च—'सुखदुःखकरं यत्तु तद्विधानं बुधा विदुः।' ( ना० चं० का० ५७ )। अत्र राधायाः कृष्णबुद्ध्या

अहह चटुलैरुत्सर्पद्भिर्दृगञ्चलतस्करै-
मम धृतिधनं चेतःकोशाद्विलुण्ठयतीह यः ॥ ११ ॥

( पुनरवेक्ष्य ) हद्धी हद्धी प्पमादो प्पमादो। ललिदे, पेक्ख पेक्ख। एदं बह्मआरिणं दठ्ठूण विक्खुविदं मे हदहिअं; ता इमस्स महापावस्स अग्गिप्पवेसो ज्जेअ पराअचित्तं। [ हा धिक् हा धिक् प्रमादः प्रमादः। ललिते, पश्य पश्य। एतं ब्रह्मचारिणं दृष्ट्वा विक्षुभितं मे हतहृदयम्; तदेतस्य महापापस्याग्निप्रवेश एव प्रायश्चित्तम् ]

ललिता—हला, सच्चं कुधेसि। ता णूणं सबह्मत्तणं भामेदि। [सखि, सत्यं कथयसि। तन्नूनं सब्रह्मत्वं भ्रामयति। ]

राधा—( पुनर्निभाल्य। संस्कृतेन )

सहचरि हरिरेष ब्रह्मवेषं प्रपन्नः
किमयमितरथा मे विद्रवत्यन्तरात्मा!
शशधरमणिवेदी स्वेदधारां प्रसूते
न किल कुमुदबन्धोः कौमुदीमन्तरेण ॥ १२ ॥

विशाखा—हला, महुरं मंतेसि। माहवोच्चेअ एसो। [ सखि, मधुरं मन्त्रयसि। माधव एव एषः। ]

कुन्दलता—अज्जे जडिले, एदं सत्थाहिण्णं पेक्ख बह्मणयुग्गं। [ आर्ये जटिले, इदं शास्त्राभिज्ञं प्रेक्षस्व ब्राह्मणयुगलम्। ]

मधुमङ्गलः—जडिले, सूरपूआवणे विअढ्ढम्हि। ता उवणेहि पढ़मं खंडलड्डुआइं। [ जटिले, सूर्यपूजापने विदग्धोऽस्मि। तदुपनय प्रथमं खण्डलड्डुकानि। ]

जटिला—अले चंचलबह्मणा, तुमं कण्हस्स सहअरोसि ता इदो अवेहि। [ अरे चञ्चलब्राह्मण, त्वं कृष्णस्य सहचरोऽसि। तदितोऽपेहि ] एसोच्चेअ सोम्मसामलाइदी वडुओ पूआवइस्सदि बहुअं। [ एष एव सौम्यश्यामलाकृतिर्वटुः पूजापयिष्यति वधूम्। ]

कृष्णः—हन्त जरदाभीरि, तस्य राजपुरे श्रूयमाणस्य दुर्लीलस्य

---

विप्रबुद्धया च सुखदुःखकथनाद् विधानम् 'सहचरि हरिरेष ब्रह्मवेषम्' इत्यादि राधावाक्यसमाप्तिपर्यन्तम् ॥ ११ ॥

सहेति। ब्रह्मणः वेषं प्राप्तोऽयं हरिरेव। अन्यथा मेऽन्तरात्मा किं विद्रवति। कुमुदबन्धोर्ज्योत्स्नां विना चन्द्रकान्तमणिवेदी स्वेदधारां न प्रसूते ॥ १२ ॥

राजपुरे मथुरायां श्रुतस्य तस्यायं सखा। तदस्य निष्कासनमयुक्तं न।

गोपराजसूनोरेव किं बटुकोऽयं सखा । तदयुक्तं नास्य निष्कासनम् ।

जटिला—अज्ज, सिग्घं अग्घावेहि मिहिरं । [ आर्य, शीघ्रमर्घ्यापय मिहिरम् । ]

कृष्णः—( राधामपाङ्गेनालिङ्गय ) कल्याणि, किं नामासि ?

जटिला—( कृष्णस्य कर्णे ) एव्वं एदं । [ एवमिदम् । ]

कृष्णः—( साद्भुतमिव ) हन्त ! सैव खल्वियं पुण्यवती । तर्हि विश्रुतमस्याः पातिव्रत्यम् ।

जटिला—एक्काए मह बहुडिआए ज्जेव रक्खिदा गोउलस्स कित्ती [ एकया मम वधूट्या एव रक्षिता गोकुलस्य कीर्तिः ]

कृष्णः—पतिव्रते, ताम्रकुण्डीं गृहाण । मन्त्रमुदाहरामि । ( राधिका सोत्कम्पं तथा करोति )

> निभृतमरतिपुञ्जभाजि राधे
> त्वदधरवर्द्धितचापले चलाक्षि ।
> चटुलय कुटिलां दृगन्तलक्ष्मीं
> मयि कृपणे क्षणमों नमः सवित्रे ॥ १३ ॥

जटिला—कुंदलदे, अस्सुदपुव्वा एसा केरिसी रिचा वडुएण पढ़िज्जइ [ कुन्दलते, अश्रुतपूर्वैषा कीदृशी ऋक् बटुकेन पठ्यते ? ]

मधुमङ्गलः—( साट्टहासम् ) बुड्ढिए, आहीरीमुद्धिआ तुमं रीरीगीदं च्चेअ जाणासि । अह्म वेअस्स तुमं कासि ? ता सुणाहि—कोसुमेसवीए साहाए तइअवग्गस्स ललनासुहअरी रिचा एसा । [ वृद्धे, आभीरीमुग्धा त्वं री री गीतमेव जानासि । अस्मद्वेदस्य त्वं क्वासि ? तत् शृणु—कौसुमेषव्याः शाखायास्तृतीयवर्गस्य ललनासुखकरी ऋचा एषा ] ( सर्वाः स्मितं कुर्वन्ति )

जटिला—( सलज्जम् ) भोदु सुठ्ठु पुआवेहि । पुत्तओ से गोकोडिस्सरो होदु । [ भवतु सुष्ठु पूजापय । पुत्रो मे गोकोटीश्वरो भवतु । ]

---

अपि तु युक्तमेव । मिहिरं सूर्यम् । वधूट्या अल्पवयाः वधूर्वधूटी तया ।

निभृतमिति । निभृतं निगूढं यथा स्यात् तथा त्वदधरवर्द्धितचापले । अरतिः क्लेशस्तस्य समूहभाजि कृपणे मयि दृगन्तलक्ष्मीं क्षणं चटुलय ॥ १३ ॥

कुसुमेषुः कन्दर्पस्तत्सम्बन्धिशाखायाः धर्मार्थकाममोक्षेषु तृतीयवर्गः कामस्तस्य । प्रत्युत्पन्नमतिर्नाम सन्ध्यन्तरमिदम् । तथा च—

'तात्कालिकी तु प्रतिभा प्रत्युत्पन्नमतिर्मता' । ( ना० चं० का० १३३ ) अत्र मधुमङ्गलस्य प्रतिभा ।

कृष्णः—

अर्चितार्चाऽधुना धन्ये त्वमर्घं कुरु भावतः ।
अम्बरोद्भासिने गाढमुदा राजीवबान्धवे ॥ १४ ॥

( राधिका सम्भ्रमं नाटयति )

कुन्दलता—( संस्कृतेन ) सम्प्रति कन्याराशेरुपभोगं कुर्वते पुरस्थाय मित्राय चित्रमर्घं कुरु सुस्मितं पुण्डरीकेन । (राधिका दृगन्तेन हरिं पश्यति)

कृष्णः—

सवितुः समाप्तिमाप्तः पूजाविधिरेष सुष्ठु कल्याणि ।
इष्टं [1]नन्दय देवं सरागसुमनोवराञ्जलिना ॥ १५ ॥

( राधिका बन्धूककुसुमाञ्जलिं क्षिपति )

मधुमङ्गलः—जडिले, मिट्ठं पक्कण्णं दक्खिणा दिज्जउ । अह्म अच्छिद्दं वावहरेह्म । [ जटिले, मिष्टं पक्वान्नं दक्षिणा दीयताम् । वयमच्छिद्रं व्याहरामः । ]

कृष्णः—रे पात्रेसम्मित वाचाटवटो तिष्ठ । गोकुलवासिनां मैत्रीलाभ एव मे दक्षिणा ।

जटिला—( सहर्षम् ) हे बटुराअ, मह घरं समागच्छत्थ । इट्ठभोअणं भुंजविअ मणिमुद्दिआ मए दादव्वा । [ भो बटुराज, मम गृहं समागच्छ । इष्टभोजनं भोजयित्वा मणिमुद्रिका मया दातव्या । ]

मधुमङ्गलः—( सहर्षम् ) अज्जे, सुदक्खरा होहि । जइ इट्ठभोअणं

---

अर्चितेति । हे धन्ये त्वमर्चिता अर्चा सूर्यप्रतिमा यया अम्बरमाकाशं तत्र दीप्यते तस्मै सूर्याय । पक्षे—अम्बरं पीतवस्त्रं तेनोद्भासिने मह्यमधुना भावतः गाढमुदातिहर्षेण राजीवबान्धवे सूर्यायार्घ्यं कुरु । पक्षे उदारा त्वं गाढं यथा स्यात्तथा जीवबन्धवे मह्यम् ॥ १४ ॥

मित्राय सूर्याय । सुस्मितेति विकसितश्वेतपद्मेन । पक्षे—कन्याराशेः कन्यासमूहस्योपभोगं कुर्वते मित्राय कृष्णाय । सुस्मितेति । सुस्मित एव पुण्डरीकस्तेन । हासस्य शुक्लत्वात् ।

सवितुरिति । देवं सूर्यं पक्षे मां सुरङ्गपुष्पवराञ्जलिना । पक्षे रागेण सह वर्तमानस्य शोभनमनसो वराञ्जलिना ॥ १५ ॥

पात्रेसम्मित इति । हे भोजनमात्रपर । 'स पात्रेसम्मितोऽन्यत्र भोजनान्मिलितो न यः' इति ।

---

१. तं दय—अ० ।

बह्मणाणं दादुकामासि। [ आर्ये, सुतवस्करा भव। यदिष्टभोजनं ब्राह्मणेभ्यो दातुकामासि। ]

कृष्णः—वृद्धे, भोजयामुं बटुकम्। अहन्तु पौर्णमासीमासाद्य गुरोर्गर्गस्य सन्दिष्टमावेदयिष्यामि।

कुन्दलता—कीदिसं तं? [ कीदृशं तम्? ]

कृष्णः—मातः पूर्णिमे, या भवत्याः प्रेमपात्रं वृषभानुपुत्री तस्याः संशयोऽद्य महानिति कल्पतरुमूले सा रक्षोघ्नमन्त्रेणाभिमन्त्र्यतामिति।

कुन्दलता—( सव्यथमिवापवार्य ) अज्जे, दिट्ठिआ दिट्ठिगोअरो एसो कप्परुक्खो। ता तुमं गदुअ भअवदीं एत्थ पत्थावेहि वडुं वि भुंजावेहि। अम्हे णं गग्गसिख्खं ख्खणं रक्खेह्म। [ आर्ये, दिष्ट्या दृष्टिगोचर एष कल्पवृक्षः। तत् त्वं गत्वा भगवतीमत्र प्रस्थापय बटुमपि भोजय। वयमेनं गर्गशिष्यं क्षणं रक्षामः। ]

( जटिला वटुना सह निष्क्रान्ता )

कुन्दलता—( सस्मितम् ) राहि, देहि पारितोसिअं। जं सुदुल्लहं दे अब्भत्थिदं मए णिव्वाहिदं। [ राधिके, देहि मे पारितोषिकम्। यत् सुदुर्लभं तेऽभ्यर्थितं मया निर्वाहितम्। ]

राधा—( वक्रमवेक्ष्य ) कुन्दलदिए, किं मे अब्भत्थिदं? [ कुन्दलतिके, किं मेऽभ्यर्थितम्? ]

कुन्दलता—अइ, कीस भुअं भंगुरेसि। जं सूराराहणं भणामि। [ अयि, कस्माद् भ्रुवं भंगुरयसि। यत् सूर्याराधनं भणामि। ]

कृष्णः—कुन्दलते, दापय दक्षिणां, साङ्गोऽस्तु पद्मिनीदयितयागः।

कुन्दलता—राहि, कम्माहिण्णा आचारिओ तुए दक्खिणाए अणुरंजीअदु। [ राधिके, कर्माभिज्ञ आचार्यस्त्वया दक्षिणयाऽनुरज्यताम्। ]

---

सप्तपुत्रप्रसूः सुतवस्करा। तं सन्देशम्। अयि कस्मादित्यादि। तत्र—

एवमङ्गैरुपाङ्गैश्च सुश्लिष्टं रूपकश्रियः।
शरीरं वस्त्वलङ्कुर्यात् षट्त्रिंशद्भूषणैः स्फुटम्॥ ( ना० चं० का०। १४९ )

तन्मध्ये उदाहरणं नाम नाटकभूषणमिदम्। तथा च—

'वाक्यं यद्गूढतुल्यार्थं तदुदाहरणं मतम्।' ( ना० चं० का०। १५८ ) अत्र कुन्दलताभणितस्य साभिप्रायगूढार्थतयोदाहरणत्वम्। पद्मिनी कमलिनी तस्या दयितस्य सूर्यस्य। पक्षे पद्मिनी सुन्दरी तस्या दयितस्य कृष्णस्य यागः साङ्गोऽस्तु। कर्माभिज्ञः आचार्यः। पक्षे रतिकर्माभिज्ञः।

विसाखा—( स्मित्वा ) कुंदलदे, दक्खिणादाणाहिण्णाए तुए च्चेअ दिज्जउ दक्खिणा जाए विचित्तिउण अप्पणो देअरो पुरोहिदो आहरिदो। [ कुन्दलते, दक्षिणादानाभिज्ञया त्वयैव दीयतां दक्षिणा यया विचिन्त्यात्मनो देवरः पुरोहितः आहृतः । ]

ललिता—विसाहे, णूणं एसो आकालिदो पूआविदाए[1] कुन्दलदाए दिण्णाहिट्ठदक्खिणो आचारिओ । [ विशाखे, नूनमेष आकारितः पूजाविदया कुन्दलतया दत्ताभीष्टदक्षिण आचार्यः । ]

कृष्णः—ललिते, पूज्येयं प्रजावती तदस्यां नाचार्यकमाचर्यते[2] ।

राधिका—हला ललिदे, साहु पूअणं णिव्वाहिदं तुम्हेहिं ता अज्ज वि किं पडिक्खीअदि ? [ सखि ललिते, साधु पूजनं निर्वाहितं युष्माभिस्तदद्यापि किं प्रतीक्ष्यते ? ]

कृष्णः—

स्मररोधनानुबन्धी क्रमविस्तारितकलाविलासभरः ।
क्षणदापतिरिव दृष्टेः क्षणदायी राधिकासङ्गः ॥ १६ ॥

( नेपथ्ये )

दुर्लभः पुण्डरीकाक्ष वृत्तस्ते विप्रकर्षतः ।

कृष्णः—( सव्यथमुच्चैः ) भोः कोऽयं दुर्लभः ?

( पुनर्नेपथ्ये )

यत्नादन्विष्यमाणोऽपि बल्लवैः पशुमण्डलः ॥ १७ ॥

---

प्रजावती भ्रातृजाया । आचार्यकमिति भावे कन् । आचार्यत्वमिति यावत् । किं प्रतीक्ष्यते अर्थात् सर्वं सम्पादितमिति भावः ।

स्मरेति । क्षणदापतिश्चन्द्रः स इव दृष्टेः क्षणदायी उत्सवदायी राधिकासङ्गः । स्मरेति उभयपक्षे तुल्यम् । स्मरस्यानुबोधने उद्दीपने । अनुबन्धोऽनुष्ठानं विद्यते यस्य सः । क्रमेण विस्तारितः कलाया विलासातिशयो येन । चन्द्रपक्षे कलाः प्रसिद्धाः । सङ्गपक्षे कामकलाः ॥ १६ ॥

दुर्लभेति । हे पुण्डरीकाक्ष ते विप्रकर्षतः वियोगतः दुर्लभो वृत्तः । तथाहि 'अर्थस्य तु प्रधानस्य भाव्यवस्थस्य सूचकम् । यदागन्तुकभावेन पताकास्थानकं हि तत् ॥' ( ना० चं० का०।१८६ )। तत्तु द्विप्रकारं तुल्यसंविधानं तुल्यविशेषणञ्च । पूर्वं त्रिधा—अर्थसम्पत्तिरूपं श्लिष्टं श्लिष्टोत्तरञ्च । तत्र श्लिष्टमिदम् । तथा च—'वचः सातिशयश्लिष्टं काव्यबन्धरसाश्रयम् । पताकास्थानकमिदं द्वितीयं परिकीर्तितम् ॥' ( ना० चं० का० १९० ) इति ।

अत्र भविष्यतो राधासङ्गमदुर्लभत्वस्य सूचनादिदं श्लिष्टं नाम द्वितीयं पताकास्थानकम् ॥ १७ ॥

---

१. पूअवेदाअए—ब० । २. माचार्यते—ब० ।

कृष्णः—ललिते, पशूनां क य कल्पितनिजाकल्पो यावदहमुपसीदेयं तावत्तत्र रत्नसिंहासने प्रियां प्रापयेति । ( इति निष्क्रान्तः )

ललिता—हला, पुरदो पाअं धारेहि । [ सखि, पुरतो पादं धारय ]

राधिका—ललिदे, प्पसीद प्पसीद । सुठ्ठु संआउलह्मि । [ ललिते, प्रसीद प्रसीद । सुष्ठु शङ्काकुलास्मि । ]

( इति संस्कृतेन )

गतप्रायं सायं चरितपरिशङ्की गुरुजनः
परीवादस्तुङ्गो जगति सरलाहं कुलवती ।
वयस्यस्ते लोलः सकलपशुपालीसुहृदसौ
तदा नम्रं याचे सखि रहसि सञ्चारय न माम् ॥ १८ ॥

कुन्दलता—राहे, जाणे अक्खलिदं तुम्ह सदीव्वदं ता अलं सअं विक्खाविदेण । [ राधे, जानेऽस्खलितं तव सतीव्रतं तदलं स्वयं विख्यापितेन । ]

विशाखा—( सप्रणयाभ्यसूयम् ) कुंदलदे, का क्खु अवरा तुमं विअ वंशीए तिसंज्झं आअड्ढीअदि । [ कुन्दलते, का खल्वपरा त्वमिव वंश्या त्रिसन्ध्यमाकृष्यते । ]

कुन्दलता—( सनर्मस्मितं संस्कृतेन )

ददामि सदयं सदा विशदबुद्धिराशीश्शतं
भवादृशि पतिव्रताव्रतमखण्डितं तिष्ठतु ।
श्रुते निखिलमाधुरीपरिणतेऽपि वेणुध्वनौ
मनः सखि मनागपि त्यजति वो न धैर्यं यथा ॥ १९ ॥

( इति सर्वाः कल्पद्रुममनुसरन्ति )

---

कल्पितनिजाकल्पः पुनरपि जटिलादीनां प्रतारणार्थं कल्पितब्राह्मणवेशोऽहम् । रत्नसिंहेति । रक्षोघ्नमन्त्रेणाभिषेकमिषेण कल्पवृक्षमूलं प्रापयेति ।

ददामीति । विशदबुद्धिरहमाशीःशतं ददामि । भवादृशि पतिव्रताया व्रतं तिष्ठतु । वो युष्माकं मनः वेणुध्वनौ श्रुतेऽपि मनागपि धैर्यं यथा न त्यजति । अत्र भेदो नाम मुखसन्ध्यङ्गम् । तथा च—'बीजस्योत्तेजनं भेदो यद्वा सङ्घातभेदनम् ।' ( ना० चं० का० ६० ) ।

अत्र कुन्दलतया राधादिप्रेम्ण उत्तेजनात् भेदनाच्चात्मनस्ताभ्यो भेदः ॥ १९ ॥

कृष्णः—( प्रविश्य )

साचिलोचनतरङ्गितभङ्गी वागुरामिह वितत्य मृगाक्षी ।
राधिकेयमधिकस्मररङ्गं द्रागबन्ध मम चित्तकुरङ्गम् ॥ २० ॥

राधिका—( अपवार्य ) कुंदलदिए, पेक्ख सोहग्गं गुंजाअलीए । [ कुन्दलतिके, पश्य सौभाग्यं गुञ्जावल्याः ] ( इति संस्कृतेन )

कठोराङ्गी कामं जगति विदिता नीरसतया
निगूढान्तश्छिद्रा त्वमतिमलिना चासि वदने ।
तथाप्युच्चैर्गुञ्जावलि विहरसे वक्षसि हरेः
जनानां दोषं वा न हि कमनुरागः स्थगयति ॥ २१ ॥

कुन्दलता—(नीचैः) राहे, तुह कठोरत्थणमणिविणिद्धुदाए कुदो एत्थ थोरिअं वराईए ? [ राधे, तव कठोरस्तनमणिविनिर्धूतायाः कुतोऽत्र स्थैर्यं वराक्याः ! ]

( नेपथ्ये )

दनुजदमनवक्षःपुष्करे चारुतारा
जयति जगदपूर्वा कापि राधाभिधाना ।
यदियमपहरन्ती तत्र नक्षत्रमाला-
मपि तिरयति धाम्ना सद्गुणौ पुष्पवन्तौ ॥ २२ ॥

---

साचीति । राधिका साचिना वक्रलोचनेन तरङ्गिता या भङ्गी सैव वागुरा मृगबन्धिनी तां वितत्य अधिकः कन्दर्परङ्गो यत्र तथाभूतं यथा स्यात्तथा मे चित्तरूपं कुरङ्गं मृगं बबन्ध ॥ २० ॥

कठोरेति । जनानामनुरागः कं दोषं न स्थगयति । अपि तु सर्वमेव । तदेवाह—हे गुञ्जावलि त्वां कठोराङ्गत्वादिदोषयुक्तापि यद् हरेर्वक्षसि विहरसे । आदौ कठिनाङ्गी तत्रापि रसरहिता गुप्तच्छिद्रा वदनेऽतिमलिना च ॥ २१ ॥

दनुजेति । कृष्णस्य वक्ष एव पुष्कर आकाशस्तस्मिन् कापि जगदपूर्वा राधाभिधाना चारुतारा जयति सर्वोत्कर्षेण वर्तते । सर्वोत्कर्षतामाह—यदियं नक्षत्रमालां सप्तविंशतिमौक्तिकमालामप्यपहरन्ती सती धाम्ना तनुना सद्गुणौ पुष्पवन्तौ शोभनसूत्रग्रथिते [1]पुष्पमालामपि तिरयति आच्छादयति । 'सैव नक्षत्रमाला स्यात् सप्तविंशतिमौक्तिकैः ।' पक्षे धाम्ना कान्त्या नक्षत्रमालां नक्षत्रश्रेणीं सद्गुणौ पुष्पवन्तौ चन्द्रसूर्यौ । 'एकयोक्त्या पुष्पवन्तौ दिवाकरनिशाकरौ' इत्यमरः । कापि जगदपूर्वेत्यनेनान्या तारा कान्त्या नक्षत्रमालां सूर्याचन्द्रौ च तिरयितुं न समर्था ॥ २२ ॥

---

१. मालापि तिरयति—ब० ।

कुन्दलता—( नेपथ्याभिमुखमवलोक्य ) वुंदे, दोण्णं ज्जेव्व सूरचंदाणं तिरोहाणं भणंती तुमं ताराए माहण्पे अणहिण्णासि। जं पराहूदसूरलक्खस्स चंदाअलीणाहस्स वि उवरि इमाए पउरिसं फुडं लक्खीअदि। [ वृन्दे, द्वयोरेव सूर्यचन्द्रयोस्तिरोधानं भणन्ती त्वं ताराया माहात्म्येऽनभिज्ञासि। यत् पराभूतं सूर्यलक्षस्य चन्द्रावलीनाथस्याप्युपर्यस्याः पौरुषं स्फुटं लक्ष्यते। ]

सख्यौ—कुडिले, अलिअं हसंती किंत्ति पिअसहीं लज्जावेसि ?

[ कुटिले, अलीकं हसन्ती किमिति प्रियसखीं लज्जयसि ? ]

कुन्दलता—( संस्कृतेन )

त्रपां त्यज कुडङ्गकं प्रविश सन्तु ते मङ्गला-
न्यनङ्गसमराङ्गणे परमसंयुगीना भव।
विवस्वदुदये भवद्विजयकीर्तिगाथावली
पुरः सखि मुरद्विषः सहचरीभिरुद्गीयताम्॥ २३॥

कृष्णः—( स्मितं कृत्वा )

अन्तस्तर्षं जगति तृषितैः काममाचम्यमानः
शैत्याधारः सुमधुररसो विच्छिनत्त्येव सर्वः।
केयं राधावदनशशिनः कान्तिपीयूषधारा
या भूयिष्ठं प्रथयति मुहुः पीयमानापि तृष्णाम्॥ २४॥

राधिका—( अपवार्य। संस्कृतेन )

चलाक्षि गुरु लोकतः स्फुरति तावदन्तर्भयं
कुलस्थितिरलञ्च मे मनसि तावदुन्मीलति।

---

यत् पराभूतं सूर्यलक्षं यस्मात् तत् तस्य चन्द्रावल्या नाथस्य श्रीकृष्णस्य पौरुषं प्रतिभा। श्लेषेण सूरो बलवान्। चन्द्रावली यूथेश्वरी। पौरुषं शृङ्गारविशेषे पुरुषवदाचरणम्।

त्रपामिति। कुडङ्गकं कुञ्जम्। सांयुगीनः रणे साधुः। विवस्वदुदये सूर्योदये। करणं नाम मुखसन्ध्यङ्गमिदम्। तथा च—'प्रस्तुतार्थसमारम्भं करणं परिचक्षते।' ( ना० चं० का० ६१ )। अत्र प्रस्तुतस्य क्रीडारूपस्यार्थस्य समारम्भकथनात् करणमिति॥ २३॥

अन्तरिति। तृषितैः जनैः कामं यथेष्टं सर्व एव शैत्यगुणविशिष्टः सुमधुररसः पीतः सन् अन्तस्तर्षं तृष्णां विच्छिनत्ति। राधावदनकान्तौ तु तद्विपरीतमित्याह—केयमिति॥ २४॥

चलाक्षीति। हे चलाक्षि यावद्वक्त्राम्बुजमपरोक्षतां प्रत्यक्षं नोपैति तावद्गुरु लोकभयादि। उद्भेदं नाम मुखसन्ध्यङ्गमिदम्। तथा च 'बीजस्य तु य उद्घाटः

चलन्मकरकुण्डलस्फुरितफुल्लगण्डस्थलं
न यावदपरोक्षतामिदमुपैति वक्त्राम्बुजम् ॥ २५ ॥

कुन्दलता—सुंदर, एत्थ रअणसिंहासणे राहिअं आरोवेहि । [ सुन्दर, अत्र रत्नसिंहासने राधिकामारोपय । ]

( कृष्णस्तथा करोति )

ललिता—हला, तक्किस्सदि जणो ता त्थम्भेहि संखउडारअं। [ सखि, तर्किष्यति जनस्तस्मात् स्तम्भय शंखचूडारवम् ]

( प्रविश्य शंखचूडः )

शङ्खचूडः—( लतान्तरे स्थित्वा ) [1]गोअद्धणमल्लवणिदलक्खणा कुमाली एसा रअणसिंहासणे रेहइ । ता ओसरं जाणिअ अप्पणो कम्मं अणुचिट्ठस्सं । [ गोवर्द्धनमल्लवर्णितलक्षणा कुमारी एषा रत्नसिंहासने [2]राजति । तस्मादवसरं ज्ञात्वात्मनः कर्म अनुष्ठास्यामि । ]

( इति कुञ्जे स्थितः )

कृष्णः—प्रिये, क्षणमलङ्क्रियतां मदूरुगारुत्मतपीठम् ।

राधिका—गोउलजुअराअ, तुम्हादिसाणं परिसुत्तमाणं ण जुत्तं कुलबालिआणं धम्मविद्धंसणं । [ गोकुलयुवराज, युष्मादृशानां पुरुषोत्तमानां न युक्तं कुलपालिकानां धर्मविध्वंसनम् । ]

( नेपथ्ये )

हा णत्तिणि राहिए, चिरं कहिं गदासि ।
( हा नप्त्रि राधिके, चिरं कुत्र गतासि )

कृष्णः—कुन्दलते, कथमियं मुखरा [3]विलपति ।

कुन्दलता—( विहस्य ) मोहण, जहिं तुम्हादिसो णिउंजणाअरो लीला रंगं तरंगेदि तहिं वुड्ढिआणं विलावस्स का क्खु दरिद्दा । [ मोहन, तत्र त्वादृशो निकुञ्जनागरो लीलारङ्गं तरङ्गयति तत्र वृद्धानां विलापस्य का खलु दरिद्रता । ]

---

स उद्भेद इति स्मृतः ।' ( ना० चं० का० ५९ ) अत्रानुरागबीजस्य स्वमुखेनैवोद्घाटनादुद्भेदः ॥ २५ ॥

हस्तस्थशङ्खचूडायाः शब्दम् । मदूरुरेव गारुत्मतपीठं मारकतपीठम् । कुलपालिकानां कुलस्त्रीणाम् । 'कुलस्त्री कुलपालिका' ।

---

१. वणिदलक्खणा—अ० । २. राजते—अ० । ३. विलापयति—अ० ।

मुखरा—( प्रविश्य, पुरो राधामाधवौ पश्यन्ती । स्वगतम् ) हा हा हद-देअ, एणं हरिचंदणं उज्झिअ एसा कप्पलदा कीस तुए तं एरंडं लंभिदा । ( प्रकाशम् ) हा वच्छे, इमस्स ज्जेव्व लंपडचूडामणिणो कीलाकुरंगी संवुत्तासि । [ हा हा हतदैव, एनं हरिचन्दनमुज्झित्वैषा कल्पलता कस्मात्त्वया तमेरण्डं लम्भिता । ( प्रकाशम् ) हा वत्से, अस्यैव लम्पटचूडामणेः क्रीडाकुरङ्गी संवृत्तासि । ]

ललिता—( सालीकम् ) अज्जे, पेक्ख । एसो कण्हो [1]मोट्टिमं अह्म विडंवणं करेदि । [ आर्ये, पश्य । एष कृष्णः बलादस्मद्विडम्बनं करोति । ]

मुखरा—अले रअणारीअ, चिट्ठ चिट्ठ । [ अरे रतनारीक, तिष्ठ तिष्ठ । ]

कृष्णः—( स्वगतम् ) कठोरेयं जरती तदहमन्तरितो भवेयम् । ( इति तथा स्थितः )

मुखरा—( साक्रोशम् ) ललिदे, धरेहि धरेहि णं धुत्तअं । [ ललिते, धर धरैनं धूर्तम् ]

ललिता—हुँ एण्हिं किंत्ति पलाएसि ? [ हुँ ! इदानीं [2]किमिति पलायसे ? ]

मुखरा—( धावन्ती पुरः कुब्जमासाद्य । सतर्जनम् ) दिट्ठिआ लद्धोसि रे कुडंगाअली भुअंग दिट्ठिआ लद्धोसि । [ दिष्ट्या लब्धोऽसि रे कुञ्जावलीभुजङ्ग, दिष्ट्या लब्धोऽसि । ]

कृष्णः—( साशङ्कम् । आत्मगतम् ) हन्त ! घनान्धकारे कथमन्धकल्पयाऽपि जरत्या दृष्टोऽस्मि ।

( मुखरा शिरः सञ्चाल्य मुहुर्निभालयते )

---

एनं कृष्णरूपं हरिचन्दनमुज्झित्वा त्यक्त्वा एषा राधिकारूपा कल्पलता एरण्डरूपमभिमन्युं लम्भिता प्रापिता । संवृत्तासि जातासि ।

आर्ये पश्येत्यादि । दाक्षिण्यं नाम नाटकभूषणमिदम् । तथा च 'दाक्षिण्यन्तु भवेद्वाचा परचित्तानुवर्तनम् ।' ( ना० चं० का० १६४ )

अत्र ललितया मुखरायाश्चित्तानुवृत्तिर्दाक्षिण्यम् । रतनारीक रतिवल्लभ । एण्हिं इदानीम् । आकाशकुसुमवत् मिथ्यादृष्टिः ।

शङ्खचूडं दृष्ट्वा कृष्णभ्रान्त्याह—हुमिदानीमिति । भानुभास्वरेण सूर्यसमकान्तियुक्तेन । कृष्णं तिरोहितं दृष्ट्वा राधिकाहरणेऽनुकूलं कालं मत्वा स्वगतमाह—दिष्ट्येति । मूर्तिभूतविक्रमचक्रवालस्य विक्रमसमूहस्य । नेष्यामीति विचार्य शङ्खचूडस्यथा कुर्वन् ससिंहासनां राधां मस्तके कुर्वन् ।

---

१. मोट्टिमं—अ० । २. कुत्र—अ० ।

कृष्णः—( स्वगतम् ) नूनमाकाशकुसुमदृष्टिरेवासौ जरत्याः ।

मुखरा—अम्मो ! तिमिरपुंजो ज्जेव एसो । [अहो तिमिरपुञ्ज एव एषः]

( कृष्णः स्मितं करोति )

मुखरा—( अन्यतो गत्वा ) हुँ दाणिं ज्जेव लद्धोसि [ हुँ इदानीमेव लब्धोऽसि ] ( पुनर्निभाल्य । साशङ्कम् ) रे धुत्तआ, वाराहणरसिंघादिबहुरूवोसित्ति सच्चं पौण्णमासीए कहिज्जसि । जं इमिणा भाणुभासुरेण भीसणरूवेण मं भीसअंतो णिक्कमसि । [ रे धूर्तक, वराहनरसिंहादिबहुरूपोऽसीति सत्यं पौर्णमास्या कथ्यसे । यदनेन भानुभास्वरेण भीषणरूपेण मां भीषयमाणः निष्क्रामसि । ]

शङ्खचूडः—( स्वगतम् ) दिट्ठिआ मुत्तिभूदविक्कमचक्कवालस्स बालस्य दिट्ठी वंचिदा । [ दिष्ट्या मूर्तिभूतविक्रमचक्रवालस्य बालस्य दृष्टिर्वञ्चिता । ] ( इत्युत्सर्पति )

सर्वाः—( समीक्ष्य । सत्रासम् ) अज्जे, परित्ताहि परित्ताहि । [ आर्ये, परित्रायस्व परित्रायस्व । ]

मुखरा—( सरोषम् ) रे सामला, ण जुत्तं क्खु एदं । [ रे श्यामल, न युक्तं खल्वेतत् । ]

ललिता—हा हदबुद्धिए, ईदिसं वि दारुणं कण्हं आसंकेसि [ हा हतबुद्धिके, ईदृशमपि दारुणं कृष्णमाशङ्कसे । ]

शङ्खचूडः—सुहित्तमस्स कंसभूवइणो कामं [1]अवंज्झं कादुं णं ससीहासणं ज्जेव्व पोम्मिणीअं सिरे घेत्तूण णइस्सं । [ सुहृत्तमस्य कंसभूपतेः काममवन्ध्यं कर्त्तुमेनां ससिंहासनामेव पद्मिनिकां शिरसि गृहीत्वा नेष्यामीति । ] ( इति तथा कुर्वन्निष्क्रान्तः । )

सर्वाः—( सव्यामोहम् ) हा कण्ह, कुदोसि । [ हा कृष्ण, कुत्रासि ! ]

कृष्णः—( कुञ्जान्निष्क्रम्य । सविषादम् )

> आनीतासि मया मनोरथशतव्यग्रेण निर्बन्धतः
> पूर्णं शारदपूर्णिमापरिमलैर्वृन्दाटवीकन्दरम् ।
> सद्यः सुन्दरि शङ्खचूडकपटप्राप्तोदयेन स्फुटं
> दैवेनाद्य विरोधिना कथमितस्त्वं हन्त ! दूरीकृता ॥ २६ ॥

( इति संरम्भेण परिक्रामन् ) आर्ये, मा भैषीः । एष नेदीयानस्मि ।

---

आनीतेति । शारदपूर्णिमापरिमलैः पूर्णं वृन्दाटवीकन्दरं मयाऽऽनीतासि । शङ्खचूडरूपधारिणा दैवेन दूरीकृता ॥ २६ ॥

---

१. अवंधंसं–अ० ।

मुखरा—चंदमुह, विजअलच्छीए सअं वरिदो होहि। [ चन्द्रमुख, विजयलक्ष्म्या स्वयं वृतो भव। ]

कृष्णः—रे दुष्ट,

राधापराधिनि मुहुस्त्वयि यन्न शस्तं
शक्यामि कर्तुमखिलां गुरुरेप खेदः।
सर्वाङ्गिलेयमभिधावति लुप्तधर्मा
त्वां मुक्तिकालरजनी बत किं करिष्ये ॥ २७ ॥

( इति निष्क्रान्तः )

कुन्दलता—ललिदे, पेक्ख पेक्ख। एसो हदासो राहिअं उज्झिअ कण्हेण जोद्धुं विक्कमेदि। [ ललिते, पश्य पश्य। एप हताशो राधिका-मुज्झित्वा कृष्णेन योद्धुं विक्रमते[1]। ]

( नेपथ्ये )

स्थूलस्तालभुजोन्नतिर्गिरितटीवक्षाः क यक्षाधमः
क्वायं बालतमालकन्दलमृदुः कन्दर्पकान्तः शिशुः।
नास्त्यन्यः सहकारितापटुरिह प्राणी न जानीमहे
हा गोष्ठेश्वरि, कीदृगद्य तपसां पाकस्तवोन्मीलति ॥ २८ ॥

( इति सर्वा समाकर्ण्य व्यामोहं नाटयन्ति। )

---

राधेति। राधापराधिनि त्वयि यदखिलां शास्तिं कर्तुं न शक्यामि एप गुरुः खेदः। सर्वङ्गिला मुक्तिरूपा कालरजनी त्वां धावति। तस्मात्तव मुक्तिर्भविष्यति न तु नरकभोगादिकम्। मम हस्तान्मरणस्यैवायं दोपः। किं करिष्ये इति भावः॥

अत्र—'मुखादिसन्धिष्वङ्गानामशैथिल्याय सर्वतः।
सन्ध्यन्तराणि योज्यानि तत्र तत्रैकविंशतिः॥' (ना० चं० का० १२६) इत्युक्तदिशा सन्ध्यन्तरैकविंशत्यभ्यन्तरे दण्डो नाम सन्ध्यन्तरमेतत्। तथा च—'दण्डस्त्वविनयादीनां दृष्ट्या श्रुत्या च तर्जनम्।' (ना० चं० का० १३२)। अत्र शङ्खचूडतर्जनं दण्डः॥ २७ ॥

स्थूलेति। स्थूल इत्यादिना शंखचूडेन सह कृष्णस्य युद्धोद्यमं दृष्ट्वा जयपराजये [2]संशयापन्नाऽऽह—नास्तीति। सहकारितायां पटुः समर्थः अन्यः प्राणी नास्ति। अत्र संशयो नाम नाटकभूपणमिदम्। तथा च—'अनिश्चयात्तु यद्वाक्यं संदेहः स निगद्यते।' ( ना० चं० का० १५९ ) अत्र संशयेनैव वाक्यसमाप्तेरयं संशयः सूचितः॥ २८ ॥

---

१. विक्रामति—ब.। २. युक्तः सन्नाह—ब.।

पौर्णमासी—( प्रविश्यापटीक्षेपेण ) पुत्रि ललिते, मा व्यथिष्ठाः । क्षिप्तं स्खलत्स्फुलिङ्गमेनं लब्धनिर्वाणं जानीहि ।

( नेपथ्ये )

दोर्दण्डाटोपभङ्गी विकटरिपुवपुर्घट्टनादुर्दुरूढः
क्रीडन्नुद्दण्डदंष्ट्राङ्कुरकुटिलतटोच्चण्डतुण्डान्तरस्य ।
दीव्यच्चण्डांशुबिम्बप्रतिभटमटवीमण्डले दण्डकोट्या
व्याकर्षन् पिञ्छचूडो हरति मुकुटतः शंखचूडस्य रत्नम् ॥२६॥

पौर्णमासी—दिष्ट्या रत्नाकृष्टिमिषादयमेवाकृष्टजीवो व्यधायि । [1]तेनाद्य जम्बुकानां पारणोत्सवः सम्पत्स्यते । ( पुनर्निरूप्य । सहर्षम् ) पश्यत पश्यत । विच्युतवक्षोऽयं यक्षो भङ्गमङ्गीचकार ।

( पुनर्नेपथ्ये )

मुष्टिना झटिति पुण्यजनोऽयं हन्त पापविनिवेशितचेताः ।
पुण्डरीकनयनेन सखेलं दण्डितः सकलजीवितवित्तम् ॥ ३० ॥

पौर्णमासी—( पुरो दृष्ट्वा । सानन्दम् )

विकटसमरधाटीधृष्टताध्वंसितारि-
र्विलुठदमलचूडश्चण्डिमाऽऽडम्बरेण ।

---

सूचितं पात्रं पटीक्षेपेण प्रविशतीति आचारः । यथा स्तम्भय शंखचूडरव-मित्यत्रोत्कण्ठितस्य शंखचूडस्य प्रवेशः । अत्र तु पूर्वमुद्दङ्कनं विनैव पौर्णमास्याः प्रवेशादाहापटीक्षेपेणेति । स्फुलिङ्गमग्निकणम् । लब्धनिर्वाणं लब्धशान्ति पक्षे—लब्धमोक्षम् ।

दोर्दण्डेति । पिञ्छचूडः क्रीडन् सन् दण्डकोट्या लकुटाग्रेण शंखचूडस्य मुकुटतः रत्नं व्याकर्षन् हरति । पिञ्छचूडः कीदृशः—दोर्दण्डाटोपभङ्ग्या विकट-रिपुवपुषो या घट्टना सञ्चालनं तत्र दुर्दुरूढोऽतिनिपुणः । शंखचूडस्य कीदृशस्य—उद्दण्डदंष्ट्राङ्कुरेण कुटिलतटमुच्चतुण्डान्तरं यस्य तस्य । रत्नं कीदृशम्—दीव्य-च्चण्डांशुबिम्बस्सूर्यस्तस्य प्रतिभटं सदृशम् ॥ २९ ॥

जम्बुकानां शृगालानाम् ।

मुष्टिनेति । पुण्डरीकनयनेन मुष्टिना पुण्यजनो यक्षः शंखचूडः सकलजीवन-रूपं वित्तं दण्डितः । द्विकर्मकत्वाद्दण्डयते ण्यन्तदण्डधातोः प्रयोगः । वधो नाम सन्ध्यन्तरमिदम् । तथाहि—'वधस्तु जीवितद्रोहक्रिया स्यादाततायिनः' ( ना० चं० का० १३४ ) अत्र शंखचूडस्य वधः ॥ ३० ॥

विकटेति । विकटसमरे धाटी बलादाक्रमणं तत्र या धृष्टता तया ध्वंसितोऽ-

---

१. तेन वृन्दाटवी जम्बुकानां—अ०, तेनाद्य वृन्दाटवी—ब० ।

कृतकुसुमविसर्गः स्वर्गिभिः श्लाघ्यमानो
मधुरिपुरयमद्दणोर्मोदमाविष्करोति ॥ ३१ ॥

विशाखा--भअवदि, पेक्ख सुगहिदणामाणं रामं अग्गे कदुअ सव्वे सहअरा समाअदा । [ भगवति, पश्य सुगृहीतनामानं राममग्रे कृत्वा सर्वे सहचराः समागताः । ]

पौर्णमासी—पुरुषोत्तमेन दत्तोऽयं रामाय रमणीयो मणीन्द्रः ।

ललिता—पेक्ख, वअस्सउलं पत्थाविअ एक्को ज्जेव माहवो रहिअं अणुसप्पदि । [ पश्य, वयस्यकुलं प्रस्थाप्यैक एव माधवो राधिकामनुसर्पति । ]

पौर्णमासी—पश्य पश्य ।

भयबाधितराधिकोपगूढः प्रचलाग्रप्रचलाकचारुचूडः ।
वदनोल्लसितश्रमाम्बुवृन्दः सविधं सुन्दरि विन्दते मुकुन्दः ॥ ३२ ॥

( ततः प्रविशति यथानिर्दिष्टः कृष्णः )

कृष्णः—

हा नेत्रनिन्दितकलिन्दसुतारविन्द
गोविन्द गोकुलपुरन्दरनन्दनाद्याः ।
मां रक्ष रक्षत रसेति कृतार्त्तनादां
राधामधीरनयनां न हि विस्मरामि ॥ ३३ ॥

पौर्णमासी—( परिक्रम्य ) यशोदामातः, उत्खातचिन्ताशल्यास्मि कृता । ( इति सराधं माधवमालिङ्गति । सुखपाणिभ्यां हरिं निर्मञ्छ्य । )

ललिता—वीर आराहिआ दे राहिआ दिट्ठिआ आरक्खिदा । [ वीर, आराधिका ते राधिका दिष्ट्या रक्षिता । ]

( प्रविश्य मधुमङ्गलः )

मधुमङ्गलः—पिअवअस्स, एसो मणींदो रामेण राहिआए दिण्णो [ प्रियवयस्य, एष मणीन्द्रः रामेण राधिकायै दत्तः । ]

---

रिर्येन सः । चण्डिमाडम्बरेण विलुठदमलचूडः कृष्णः ॥ ३१ ॥

सुगृहीताभिधं पूज्यम् ।

भयेति । भयेन बाधिता या राधा तयालिङ्गितः प्रचलोऽग्रदेशो यस्यास्तथाभूता चासौ प्रचलाकेन मयूरपिञ्छेन निर्मिता चारुचूडा यस्य ॥ ३२ ॥

हेति । नेत्रेण निन्दितं यमुनाया अरविन्दं येन हे तादृश गोविन्द इत्यादि नाम सम्बोध्य कृतार्त्तनादां राधां हे यशोदा माता यस्य तत्सम्बुद्धौ यशोदामातः । उत्खातितमुत्पाटितं चिन्तारूपशल्यं यस्यास्तथाभूताहं कृतास्मि ॥ ३३ ॥

कृष्णः—कौस्तुभस्य कुटुम्बं मणीनां ग्रामणीरयं राधाग्रैवेयकतामर्हति ।

ललिता—जधा दिसदि भवं । [ यथादिशति भवान् ]

कृष्णः—तदागच्छत । दुष्टविजयेनामुना पितरावानन्दयामः ।

( इति निष्क्रान्ताः सर्वे )

इति शङ्खचूडवधो नाम द्वितीयोऽङ्कः ।

---

मणीनां ग्रामणीः श्रेष्ठः । ग्रैवेयकतां कण्ठभूषणताम् ॥ इति ।

॥ इति द्वितीयाङ्कव्याख्या ॥



# तृतीयोऽङ्कः

( ततः प्रविशति वृन्दया सङ्कथयन्ती पौर्णमासी )

पौर्णमासी—हन्त ! कथमुपक्रान्तोऽयमन्तिमः तमीमुहूर्त्तः ।
पश्य पश्य ।

दूरात् खरांशुशरभस्य परिस्फुरन्तीं
विस्फूर्तितैरुदयशैलतटीं विलोक्य ।
त्रासादसौ विशति चन्दनपिण्डपाण्डु-
रस्ताचलं मृगकलङ्कमृगाधिराजः ॥ १ ॥

---

अङ्कद्वये श्रीकृष्णमिलनजनितप्रेमचेष्टामाधुरीं प्रकाश्य विरहजन्यलोकोत्तरां प्रेमचेष्टां वक्तुं तृतीयाङ्कमारभते—ततः प्रविशतीति ।

विन्दुप्रकृतियत्नावस्थाभ्यां योगः प्रतिमुखसन्धिः । स चात्र तृतीयचतुर्थयोरङ्कयोर्दर्शितः । तत्र विन्दुलक्षणं यथा—

फले प्रधाने वीजस्य प्रसङ्गोक्तैः [1]फलान्तरैः ।
विच्छिन्ने यदविच्छेदकारणं विन्दुरिष्यते ॥ ( ना० चं० का० ३३ )

यथात्र कृष्णस्य पुरगमनादिनाऽमुख्यफले विच्छिन्ने तेनैव समाश्वसनम्—'एतास्तूर्णं नयत कियती'रित्यादिना ।

यत्नावस्थालक्षणं यथा—

यत्नस्तु तत्फलावाप्तावौत्सुक्येन तु वर्तनम् । ( ना० चं० का० ४२ )

यथा तृतीये राधया कृष्णान्वेषणं चतुर्थे च कृष्णस्य गान्धर्वकृतनृत्यादौ राधावलोकनायोद्यमः । प्रतिमुखसन्धिलक्षणं यथा—

भवेत् प्रतिमुखं दृश्यादृश्यं वीजप्रकाशनम् ।
विन्दुप्रयोगोपगमादङ्गान्यस्य त्रयोदश ॥ ( ना० चं० का० ६२ )
अत्र राधामाधवयोः विश्लेषात् प्रेमबीजं दृश्यादृश्यम् ।

तत्र अङ्गानि यथा—

विलासः परिसर्पश्च विधुतं शमनर्मणी ॥
नर्मद्युतिः प्रगयनं विरोधः पर्युपासनम् ।
पुष्पं वज्रमुपन्यासो वर्णसंहार इत्यपि ॥ (ना० चं० का० ६४–६५)

इति । प्रकृतमनुसरामि ।

---

१. फलान्तरैः इति नाटकचन्द्रिकास्थपाठः ।

वृन्दा—भगवति, मथ्यमानस्येव महाम्भोनिधेर्गम्भीरं कमपि कोलाहलसंरम्भमाकर्ण्य सम्भ्रमेणाहमागतास्मि। तत् कथ्यतां किमेतदिति ?

पौर्णमासी—पुत्रि वृन्दे, नेदङ्क्ष ते कर्णयोः प्राङ्गणमधिरूढम्।

वृन्दा—भगवति, किं तन्नाम ?

पौर्णमासी—बलीवर्ददानवमर्दनवर्द्धितरोषपर्वतं पूर्वेद्युरपूर्वविक्रमेण केशिनमुत्पाट्य गोष्ठमधिष्ठिते शिखण्डावतंसे कंसेनानुशिष्टः स खलु गान्दिनेयो नन्दमन्दिरमासेदिवान्। स च राजोपजीवी राजीवबन्धौ पूर्वपर्वतमधिरूढे स पूर्वजं पूर्वदेवारिं पुरं नेष्यति।

वृन्दा—( क्षणं तूष्णीं स्थित्वा दीर्घमुष्णं निश्वस्य। सवैक्लव्यम् )

वनभुवि नवकुञ्जं कस्य हेतोर्विधास्ये<br>
धृतरुचि रचयिष्याम्यद्य वा पुष्पतल्पम्।<br>
सुरभिमसमये वा वल्लिमुत्फुल्लयिष्ये<br>
यदि नयति मुकुन्दं गान्धिनेयः पुराय॥ २॥

---

दूरादिति—खरांशुः सूर्यः एव शरभस्तस्य विस्फूर्जितैः पराक्रमैः परिस्फुरन्तीमुदयशैलतटीं विलोक्य चन्दनपिंडस्येव पाण्डुः सिंहः। पक्षे—मृगकलङ्कमृगाधिराजश्चन्द्रोऽस्ताचलं विशति। भयेन वैवर्ण्यमाह—चन्दनेति। शरभः अष्टापदयुक् सिंहस्य विजयी जन्तुविशेषः॥ १॥

श्रीभागवतादौ सर्वलोकगम्या श्रीकृष्णलीला श्रीवसुदेवनन्दन एव व्रजमागत्य नानाविधलीलां कृत्वा मथुरायां गतः पुनः व्रजे नागतः। अन्तरङ्गभक्तगम्या लीला तु—कृष्णोऽन्यो यदुसम्भूतो यस्तु [1]गोपेन्द्रनन्दनः। वृन्दावनं परित्यज्य स क्वचिन्नैव गच्छतीति तन्त्रोक्त्या वसुदेवनन्दनो नन्दनन्दनेन सहैकीभूय विहारादिकं कृत्वा मथुरां गतस्य कृष्णस्य यावन्मथुराविहारं तावत्कालं व्याप्य व्रजपुरसुन्दरीणामेकतरत्वतया पूर्वलिखितराधातन्त्राद्युक्तरीत्या च वृषभानुनन्दिन्यादिभिरेकीभूय विहारं कुर्वतीनां विन्ध्याचलकन्यादिस्वरूपाणां पूर्वापरलेखनानुसारेण कालक्षेपार्थं जलप्रवेशादिव्याजेन सूर्यमण्डलादिगमनं ततो द्वारकायां श्रीकृष्णेन सह मिलनादिमयी श्रीनन्दनन्दनादीनां सदैव [2]व्रजविलासमयी च तामेव लीलां वक्तुमादौ श्रीकृष्णस्य मथुरागमनवार्तयैव गोकुलवासिनामद्भुतकोलाहलं वर्णयन्नाह—वृन्देति। बलीवर्ददानवोऽरिष्टासुरस्तस्य मर्दनेन वर्द्धितरोषपर्वतं केशिनमुत्पाट्य गोष्ठङ्गते कृष्णे कंसेनानुशिष्टः प्रेरितः गान्दिनेयो नन्दमन्दिरं प्राप्तः। स च गान्दिनेयोऽक्रूरः। राजीवबन्धौ सूर्ये। सपूर्वजं रामसहितम्। पूर्वदेवारिं कृष्णम्। पुरं मथुराम्।

वनेति। गान्धिनेयः यदा मुकुन्दं नयति तदा-वनभुवीत्यादि॥ २॥

---

१. गोपेन्दु—अ०। २. विहारमयी—अ०।

पौर्णमासी—( सव्यथम् )

क्रन्दन्तीनां प्लुतविरुतिभिर्बिभ्यतीनां विभातात्
कुप्यन्तीनामसकृदसकृद्गान्धिनीनन्दनाय।
हा धिग्दैवं कुवलयदृशां जाग्रतीनां समग्रा
व्यग्राक्षीणां क्षणवदभितस्तामसीयं व्यरंसीत्॥ ३॥

वृन्दा—( सास्रम् )

लब्धभ्रमेण हरता हरिशर्वरीशं
विन्यस्यता च विरहक्लमकालकूटम्।
हा गान्दिनीतनय मन्दरभूधरेण
विक्षोभितः पृथुलगोकुलसागरोऽयम्॥ ४॥

पौर्णमासी—वत्से, तदितो गोपेन्द्रगोपुरमेवानुरावः। ( इति परिक्रम्य। पुरः पश्यन्ती सबाष्पम् )

यात्रामङ्गलसम्पदं न कुरुते व्यग्रा तदात्वौचितां
वात्सल्यौपयिकं च नोपनयते पाथेयमुद्भ्रान्तधीः।
धूलीजालमसौ विलोचनजलैर्जम्बालयन्ती परं
गोविन्दं परिरभ्य नन्दगृहिणी नीरन्ध्रमाक्रन्दति॥ ५॥

वृन्दा—शैब्यायां सखीजल्पितं किमाकर्णितमार्यया?

पौर्णमासी—पुत्रि, कीदृशमिदम्?

वृन्दा—

न निर्घोषान्मन्ये निशमयसि घोषस्य करुणान्

---

क्रन्दन्तीनामिति। प्लुतस्वरेण विरुतिभिः शब्दैः क्रन्दन्तीनां कुवलयदृशां पूर्वदिशं विलोक्य प्रभातशङ्कया व्यग्राक्षीणाम्। विभातात् प्रातःकालात् बिभ्यतीनां समग्रा तामसी निशा व्यरंसीत् विरताऽभूत्। श्लेषेण—यतस्तामसी तमोगुणबाहुल्यादेव परोपकारे प्रवृत्ता। 'निशा दुर्गा च तामसी'॥ ३॥

लब्धेति। लब्धभ्रमणेनाक्रूरभूधरेणायं गोकुलसागरः विक्षोभितः। मन्दरपक्षे—लब्धमब्धिमथनसमये भ्रमणं येन। अक्रूरपक्षे—प्राप्तो भ्रमो येन। हरिरेव शर्वरीशश्चन्द्रस्तं हरता। विरहविषं विन्यस्यता ददता। अनन्तस्त्रीवधरूपां नरकसामग्रीं कुर्वता॥ ४॥

यात्रेति। नन्दगृहिणी धूलिजालं जम्बालयन्ती पङ्किलयन्ती सती नीरन्ध्रं निरन्तरमाक्रन्दति। न तु तदा तु कर्तुमुचितां यात्रामङ्गलसम्पदं कुरुते। वात्सल्यौपयिकं पाथेयं पथि भोजनीयञ्च नोपनयते इति॥ ५॥

नेति। घोषस्य करुणान्निर्घोषान्न निशमयसि न शृणोषीत्यहं मन्ये। यद्

विमुग्धे त्वं दध्नामिह [1]यदनुबध्नासि मथनम् ।
जपन्कर्णोत्सङ्गे सखि किमपि दूतः क्षितिपते-
र्मुकुन्दं मन्दात्मा नगरगमनाय त्वरयति ॥ ६ ॥

पौर्णमासी—वत्से, शैब्या विमोहित त्वं विक्लवा (?) श्यामाविलापेनाभिज्ञासि ।

वृन्दा—तथ्यं ब्रवीषि । तदेतं वर्णय ।

पौर्णमासी—

भानोर्बिम्बे त्वरितमुदयप्रस्थतः प्रस्थितेऽसौ
यात्रानान्दीं पठति मुदितः स्यन्दने गान्धिनेयः ।
तावत्तूर्णं स्फुटखुरपुटैः क्षोणिपृष्ठं खनन्तो
यावन्नामी हृदय भरतो घोटकाः स्फोटकाः स्युः ॥ ७ ॥

वृन्दा—शृणुवः, किं परिदेवयति भद्रा ।

( नेपथ्ये )

[2]तुवरंतो तुह दइणो सअंगणेल्लं[3] पुरो समारुहइ ।
तहवि ण पराणसउणे हअंगणेल्लं परिच्चअसि ॥ ८ ॥
[ त्वरयन् तव दयितः शताङ्गनीडं पुरः समारोहति ।
तदपि न प्राणशकुन्ते हताङ्गनीडं परित्यजसि ॥ ]

पौर्णमासी—( वामतो दृष्ट्वा ) वत्से, माधवस्य माध्याह्निकं दाम निर्मिमाणायां चन्द्रावल्यां शल्यार्पिणी पद्माव्याहृतिराकर्ण्यताम् ।

( नेपथ्ये )

अज्झारूहो रहमिह पुरा संगरंगीरहंगी
हा पुप्फाणं तहवि चडुले गंठणुक्कंठिदासि ।

---

यस्माद्दध्नां मन्थनमनुबध्नासि । कंसस्य दूतः कृष्णस्य कर्णे किमपि जपन्नगरगमनाय मुकुन्दं त्वरयति ॥ ६ ॥

भानोरिति । उदयप्रस्थतः उदयाचलसानुतः भानोर्बिम्बे प्रस्थिते सति गान्धिनेयो यात्रानान्दीं यात्रासमये मङ्गलाधायकं पाठ्यं पठति । अमी घोटकाः खुरपुटैः क्षोणीपृष्ठं खनन्तो यावत् भरतः स्फोटकाः स्फोटनकर्त्तारः न स्युस्तावत् हे हृदय त्वं तूर्णं स्फुटं विदीर्णो भव ॥ ७ ॥

तुवेति । शताङ्गनीडं रथस्योपवेशनस्थानं पुरोऽग्रे हताङ्गनीडं हतं यदङ्गं तदेव नीडं वासस्थानं न परित्यजसि ॥ ८ ॥

१. यदि नु बध्नासि-अ० । २. तुवरंदो-अ० । ३. गणिल्लं-अ० ।

आहीरीणं बहिरि गहिरुक्कोसदीहा विलावा
किं दे चंदाअलि ण परिदो [1]कण्णकूअं विसंति ॥ ९ ॥
[ अध्यारूढो रथमिह पुरा सङ्गरङ्गी रथाङ्गी
हा पुष्पाणां तदपि चटुले ग्रन्थनोत्कण्ठितासि ।
आभीरीणां बधिरि गभीरोत्क्रोशदीर्घा विलापाः
किन्ते चन्द्रावलि न परितः कर्णकूपं विशन्ति ॥ ]

पौर्णमासी—( सोद्वेगम् )
आलीव्यलीकवचनेन मुहुर्विहस्ता
हस्तारविन्दविगलद्ग्रथितार्द्धमाल्या ।
हा हन्त हन्त किमपि प्रतिपन्नतन्द्रा
चन्द्रावली किल दशान्तरमारुरोह ॥ १० ॥

वृन्दा—पश्य, विवशामेव चन्द्रावलीं स्यन्दनाग्रतो निधाय शोचति पद्मा ।

( नेपथ्ये )

क्खणमवधेहि हदासे तिलं पि णअणंचलं पआसेहि ।
हंत तुवरेइ तुर अं [2]णिक्कलुणो गंदिणीपुत्तो ॥ ११ ॥
[ क्षणमवधेहि हताशे तिलमपि नयनाञ्चलं प्रकाशय ।
हन्त त्वरयति तुरगं निष्करुणो गान्धिनीपुत्रः ॥ ]

पौर्णमासी—हन्त वत्से, राधिकामपश्यन्ती बाढ़माकुलास्मि ।

वृन्दा—(दक्षिणतः प्रेक्ष्य ) हा धिक् हा धिक् ! पश्य पश्य ।
न वक्तुं नावक्तुं पुरगमनवार्त्तां मुरभिदः
क्षमन्ते राधायै कथमपि विशाखाप्रभृतयः ।
समन्तादाक्रान्ता निविडजडिमश्रेणिभिरिमाः
परं कर्णाकर्णिव्यवहृतिमधीरं विदधति ॥ १२ ॥

---

आलीति । आल्या व्यलीकवचनेनाप्रियवाक्येन । व्यलीकञ्चाप्रियेऽनृते । मुहुर्विहस्ता व्याकुला । चन्द्रावली दशान्तरं मूर्च्छाम् ॥ १० ॥

न वक्तुमिति । इमा विशाखाप्रभृतयः कर्णाकर्णिव्यवहृतिं यदि कृष्णस्य मथुरागमनवार्तामस्या अग्रे कथयामस्तदा न जाने । अधुनैव[3] किं भविष्यति । यदि न कथयामस्तदा महानेव दोषो भावीति । केचित्तु शमं नाम प्रतिमुखसन्धेरङ्गमपठित्वा तत्स्थाने तापनं पठन्ति । तथा च—'उपायादर्शनं यत्तु तापनं नाम तद्भवेत् ।' ( साहि० द० ६।८५ ) अत्र राधासखीनामुपायादर्शनात्तापनम् ॥१२॥

---

१. केण्णकूअं-ब० । २. णिक्करुणो-ब० । ३. अधुना किं-अ० ।

पौर्णमासी—( सखेदम् )

यस्यालोकसुखे कृतेन निमिषैराक्षिप्यमाणे मनाक्
प्रत्यूहेन वराक्षि तद्विरहितास्त्वं नौषि मीनीरपि ।
तस्मिन् विन्दति माधवे मधुपुरीं दैवान्न जानीमहे
हा राधे प्रणयानुविद्धमनसः का ते गतिर्भाविनी ॥ १३ ॥

वृन्दा—पश्य पश्य, समन्तादाकस्मिकेन कोलाहलेन कुरङ्गीव तरङ्गितदृष्टिरेषा बहिर्वीथीमाससाद राधा ।

पौर्णमासी—हा कष्टम् ! स्फुटं दिव्योन्मादमयीमुद्घूर्णामापद्यत राधिका यदियमसम्बद्धभूयिष्ठामनेकभाषामयीं भारतीमुद्गिरति ।

( नेपथ्ये )

[1]वअणरवइणंदणं सवंधुं रहप्पवरो परिपेक्खिअ प्फुरंतं ।
[ व्रजनरपतिनन्दनं सबन्धुं रथप्रवरे परिप्रेक्ष्य स्फुरन्तम् । ]
स्खलति मम वपुः कथं धरित्री भ्रमति कुतः किममी नटन्ति नीपाः ॥१४॥

पौर्णमासी—शृणुवः किमाह ललिता ।

( नेपथ्ये )

सहि राहे, मा विसीद । पव्वदपरिक्कमोवक्कमो एसो । [ सखि राधे, मा विषीद । पर्वतपरिक्रमोपक्रम एषः । ]

पौर्णमासी—श्रूयतां वत्साव्याहृतिः ।

---

यस्येति । निमिषैः कृतेन प्रत्यूहेन विरोधेन यस्य कृष्णस्यालोकसुखे आक्षिप्यमाने विघ्ने सति तद्विरहिता निमेषरहिता मीनीः मत्स्यस्त्रियस्त्वं नौषि तासां स्वभावसिद्धनिमेषाभावात् ॥ १३ ॥

दिव्योन्मादमयीमुद्घूर्णां[2] प्राप्ता । असम्बन्धस्यासंलग्नार्थस्य भूयिष्ठं बाहुल्यं यत्र तादृशीं भारतीं वाणीं यदियमुद्गिरति । दिव्योन्मादलक्षणं तु—'भावस्यैवाधिरूढस्य मोहनत्वमुपेयुषः । भ्रमाभा कापि वैचित्री दिव्योन्मादः प्रकीर्तितः ॥' इति ।

वअणेति । किममी नीपाः कदम्बाः नटन्तीत्यादिवाण्यासम्बद्धभूयिष्ठत्वम् । प्रगयणं नाम [3]प्रतिमुखसन्ध्यङ्गमिदम् । तथा च—'उत्तरोत्तरवाक्यन्तु भवेत् प्रगयणं पुनः' ( ना० चं० का० । ७१ ) अत्र वअणेत्यादिराधावाक्यात् सखि, राधेत्यादिललितावाक्यात् तथा पुनः 'सहचरि परिज्ञात'मित्यादिराधावाक्याच्चोत्तरोत्तरं प्रगयणम् ॥ १४ ॥

परिक्रमोपक्रम एषः न पुनर्मथुरागमनार्थं रथमारोहति कृष्णः । वत्सायाः राधाया व्याहृतिर्वाक्यम् ।

---

१. नरपरि—अ० ।   २. मुद्घूर्णां—अ० ।   ३. नाममुखस०—अ० ।

( नेपथ्ये )

सहचरि परिज्ञातं सद्यः समस्तमिदं मया
पटिमपटलैस्त्वं निह्नोतुं कियत्प्रभविष्यसि ।
विरम कृपणे भावी नायं हरेर्विरहक्लमो
मम किमभवन् कण्ठे प्राणा मुहुर्निरपत्रपाः ॥ १५ ॥

वृन्दा—भगवति, विवक्षुरिव विशाखा लक्ष्यते ।

( नेपथ्ये )

तं विद्धंसिअ कंसं रत्तिमुहे तुह मिलिस्सदि प्पणइ ।
सहि मा घुण्ण विअग्गा[1] क्खमावदीणं धुरीणासि ॥ १६ ॥
[ तं विध्वंस्य कंसं रात्रिमुखे तव मिलिष्यति प्रणयी ।
सखि मा घूर्ण व्यग्रा क्षमावतीनां धुरीणासि ॥ ]

पौर्णमासी—समाकर्णय वरवर्णिनीवर्णितम् ।

( नेपथ्ये )

नाश्वासनं विरचय त्वमिदं हताशे
शुष्यन्मुखी मम गुणं परिकीर्तयन्ती ।
दूरादमार्दवभृतोऽपि मुहुः क्षपायाः
कुक्षिं विदारयति पश्य रथाङ्गनेमिः ॥ १७ ॥

पौर्णमासी—अहह ! राजीवनेत्रयात्रावित्रासितचेताः कामप्यधैर्यदीक्षामूरीचकार चकोराक्षी ।

---

सहचरीति । यद्ययं हरेर्विरहक्लमो न भावी नाभविष्यत्तदा प्राणाः कण्ठे मुहुः किमभवन्निरपत्रपाः । यतोऽधुनापि न गताः प्राणाः ॥ १५ ॥

तं विद्धंसिएति । सखि मा घूर्ण व्यग्रा सती यतः क्षमावतीनां धुरीणासि ॥ १६ ॥

नाश्वासनेति । शुष्यन्मुखीति तव मुखशोषणादेव मया सर्वं ज्ञातम् । दूरात् मुहुरमार्दवभृतोऽपि कठिनाया अपि क्षमाया सहिष्णुताया पृथिव्याश्च कुक्षिं विदारयति । रथाङ्गस्य चक्रस्य नेमिः इति त्वं पश्य । श्लेषेण कठोरायाः क्षमायाः कुक्षिं रथचक्रनेमिर्यदि विदारयति किं पुनः क्षमावत्याः सुकुमार्याः मम । अतो मम कुतः क्षमा स्थास्यतीति भावः । मतभेदेन विधुतं नाम प्रतिमुखसन्ध्यङ्गमिदम् । तथा च—'अथवानुनयादीनां विधुतं स्यान्निराकृतिः ।' ( ना० चं० का० । ६७ ) अत्र विशाखाकृतानुनयस्य राधया ग्रहणाद्विधुतम् ॥ १७ ॥

---

1. विलक्खा–[ विलक्षा ]–अ०

वृन्दा—

क्षणं विक्रोशन्ती विलुठति शताङ्गस्य पुरतः
क्षणं बाष्पग्रस्तां किरति किल दृष्टिं हरिमुखे ।
क्षणं रामस्याग्रे पतति दशनोत्तम्भिततृणा
न राधेयं कं वा क्षिपति करुणाम्भोधिकुहरे ॥ १८ ॥

पौर्णमासी—( सास्रम् ) हन्त हन्त,

न हि न्यस्ता दृष्टिः क्षणमधरपालीपरिमले
यया कंसारातेः प्रियसहचरीणामपि पुरः ।
गुरूणामप्यग्रे यदकलितलज्जावलिरभूद्
इयं राधा सद्यस्तदिह मम चेतो ग्लपयति ॥ १९ ॥

( पुनर्निरूप्य )

रथिनः पथि[1] पश्यतः सखेदं बत राधावदनं मुरान्तकस्य ।
किरतो नयने घनाश्रुबिन्दूनरविन्दे मकरन्दवत्क्रमेण ॥ २० ॥

वृन्दा—भगवति, नूनं कुमारीणां प्राणाः प्राणेश्वरेण सार्धमेवाद्य प्रयास्यन्ति ।

पौर्णमासी—पुत्रि, हरेः सन्देशहरं पश्य ।

एतास्तूर्णं नयत कियतीरार्तिमिश्रास्तमिस्रा
भावी भव्याः पुनरपि मया मङ्गलः सङ्गमो वः ।

---

क्षणमिति । शताङ्गस्य रथस्य पुरतोऽग्रे विक्रोशन्ती क्षणं विलुठति । हरिमुखे बाष्पग्रस्तां दृष्टिं क्षिपति । दन्तकृततृणा रामस्याग्रे पतति । शास्त्रप्रसिद्धं यथा श्रीमद्भागवते—'निवारयामः समुपेत्य माधवं किं नोऽकरिष्यन्कुलवृद्धबान्धवाः ।' इत्यादिनोक्तमत्र व्यक्ततया नामग्रहणादिपूर्वकप्रेमावधिरूपं विलापकथनं कविनिर्मितम् ॥ १८ ॥

नहीति । यया प्रियसहचरीणामपि पुरा कंसारातेरधरपालीपरिमलेऽधरस्याङ्कोत्कर्षेऽपि दृष्टिर्न हि न्यस्ता सेयं राधा गुरूणामप्यग्रे न कलिता लज्जाया आवलिर्यया तथाभूताऽभूत् । क्रोडं मध्यमित्यर्थः । पालिरश्र्यङ्कपङ्क्तिष्वित्यमरः । परिमलमौत्कर्ष्यम् ॥ १९ ॥

रथिन इति । पथि राधावदनं पश्यतो रथिनो मुरान्तकस्य कृष्णस्य नयने कर्तृणि क्रमेण घनाश्रुबिन्दून् किरतः । किमिव—अरविन्दे मकरन्दवत् ॥ २० ॥

एता इति । आर्तिः पीडा तन्मिश्रा कियती तमिस्रा रजन्यस्तूर्णं नयत गमयत । हे भव्याः पुनरपि मया सह वो युष्माकं मङ्गलरूपः सङ्गमो भावी

---

[1] पथि पश्य तं सखेदं–ब० ।

इत्थं दीर्घैरघविजयिना हन्त सन्दानितोऽभूद्
आशापाशैः सरसिजदृशां प्राणसारङ्गसङ्घः ॥ २१ ॥

वृन्दा—( सव्यथम् )

न पिबति मकरन्दवृन्दमिन्दिन्दिराणां
वनमपि न मयूरास्ताण्डवैर्मण्डयन्ति ।
विदधति च रथाङ्गाः स्वाङ्गनाभिर्न सङ्गं
सरति सरसिजाक्षे गोष्ठतः पत्तनाय ॥ २२ ॥

पौर्णमासी—( नेमिवर्त्मानुसृत्य । सखेदम् ) अहह !

अद्वीपे क्षिपती समस्तजगतीमस्तोकशोकाम्बुधौ
राधासम्भृतकाकुराकुलमसौ चक्रे तथा क्रन्दनम् ।
येन स्यन्दननेमिनिर्मितमहासीमन्तदम्भादिदं
हा ! सर्वंसहयापि निर्भरमभूद् दूराद्विदीर्णं भुवा ॥ २३ ॥

वृन्दा—हा कष्टं ! कष्टम् !!

पुरः क्वचन धावति स्फुरति चित्रितेव क्वचित्
तनोति हसितं क्वचित् क्वचन तीव्रमाक्रन्दति ।
इयं [1]प्रलपति क्वचित् क्वचन मौलमालम्बते
मुकुन्दविरहोद्गतैर्मुहुरधीरधीरादिभिः ॥ २४ ॥

---

भविष्यति । इत्थमद्य विजयिना कृष्णेन दीर्घैराशापाशैः सरसिजदृशां प्राणसारङ्गसङ्घः हरिणसमूहः सन्दानितो बद्धोऽभूत् ॥ २१ ॥

न पिबतीति । सरसिजाक्षे कृष्णे गोष्ठतः पत्तनाय मथुरापुराय सरति गच्छति सति इन्दिन्दिराणां भ्रमराणां वृन्दम् । रथाङ्गाः चक्रवाकाः स्वस्त्रीभिः सह सङ्गं न विदधति ॥ २२ ॥

अद्वीप इति । सम्यक् भृतो धृतः काकुः शोकभीत्यादिभिर्ध्वनेः विकारो यया तादृशी राधा अद्वीपे द्वीपरहिते निराश्रयेऽस्तोकशोकाम्बुधावपारशोकसमुद्रे समस्तजगतीं क्षिपति सत्याकुलं यथा स्यात्तथा क्रन्दनं चक्रे येन क्रन्दनेन रथचक्रनिर्मितमहासीमन्तदम्भाद्दीर्घपरिघातकपटात् सर्वंसहयापि भुवा दूराद्दूरपर्यन्तं विदीर्णमभूत् ॥ २३ ॥

पुरः क्वचनेति । मुकुन्दविरहोद्भवैराधिभिर्मनःपीडाभिरधीरधीरियं राधा क्वचन पुरोऽग्रे धावतीति योज्यम् ॥ २४ ॥

---

१. प्रलयति—अ० ।

( नेपथ्ये )

क नन्दकुलचन्द्रमाः क्व शिखिचन्द्रकालंकृतिः
क्व मन्दमुरलीरवः क्व नु सुरेन्द्रनीलद्युतिः ।
क्व रासरसताण्डवी क्व सखि जीवरक्षौषधि-
र्निधिर्मम सुहृत्तमः स तव हन्त हा धिग् विधिम् ॥ २५ ॥

पौर्णमासी—धिक् कष्टम् । मूर्त्तमेतद्दुर्निवारं कारुण्याडम्बरं परिलम्बते तदितस्तूर्णं मे प्रस्थितिः पथ्या ।

वृन्दा—भगवति, मुखरामत्र सन्निधापयितुमिच्छामि । ( इत्युभे निष्क्रान्ते ) ।

विष्कम्भकः

( ततः प्रविशति सखीभ्यामाश्वास्यमाना राधा )

राधा—( साक्रन्दम् )

निपीता न स्वैरं श्रुतिपुटिकया नर्मभणितिः
न दृष्टा निश्शङ्कं सुमुखि मुखपङ्केरुहरुचः ।
हरेर्वक्षःपीठं न किल घनमालिङ्गितमभू-
दिति ध्यायं ध्यायं स्फुटति लुठदन्तर्मम मनः ॥ २६ ॥

विशाखा—हला कण्हस्स पच्चाअमणसंदेसं जाणंती वि ईदिसे वेअणाणलज्झलक्कारे अप्पाणं परिक्खवंती कीस सहीणं पराणं करीसेण रंधेसि ? [ सखि, कृष्णस्य प्रत्यागमनसन्देशं जानत्यपि ईदृश्यां वेदनानलज्वालायामात्मानं प्रक्षिपन्ती कस्मात् सखीनां प्राणान् करीषेण रन्धयसि ? ]

राधिका—

चेतः खिन्नजने हरेः परिणतं कारुण्यवीचीभरै-
रित्याभीरनतभ्रुवां सखि भवेदालोकसम्भावना ।

---

क्व नन्देत्यादि श्रीराधावाक्यम् । सुरेन्द्रनीलः इन्द्रनीलमणिः ॥ २५ ॥

विष्कम्भकलक्षणं यथा—'भवेद्विष्कम्भको भूतभाविवस्त्वंशसूचकः । अमुख्यपात्रैः सङ्क्षेपादादावङ्कस्य दर्शितः ॥' ( ना० चं० का० । १९५ ) इति ।

निपीतेति । निपीतेत्यादिहेतोर्ममान्तर्मनः लुठत् स्फुटति । प्रथमं विधूतं नाम प्रतिमुखसन्ध्यङ्गमिदम् । तथा च—'विधूतं कथितं दुःखमभीष्टार्थानवाप्तितः ।' ( ना० चं० का० । ६७ ) इति । अत्र श्रीकृष्णस्य दर्शनालिङ्गनाद्यनवाप्त्या विधूतम् ॥ २६ ॥

करीषेण करीषसम्बन्ध्यग्निना रन्धयसि ।

चेतः इति । श्रीमद्भागवते 'योऽहःक्षये' इत्यनन्तरम् 'अमुमृते नु कथं

मर्मग्रन्थिनिकृन्तनव्यसनिनी तं तादृशं वैरिणि
क्रूरेयं विरहव्यथा न सहते मद्भागधेयोत्सवम् ॥ २७ ॥
( इत्यार्तिं नाटयन्ती )
उत्तापी पुटपाकतोऽपि गरलग्रामादपि क्षोभणो
दम्भोलेरपि दुस्सहः कटुरलं हृन्मग्नशल्यादपि ।
तीव्रः प्रौढ़विसूचिकानिचयतोऽप्युच्चैर्ममायं[1] बली
मर्माण्यद्य भिनत्ति गोकुलपतेर्विश्लेषजन्मा ज्वरः ॥ २८ ॥
( इति मुक्तकण्ठं रोदिति )
( नेपथ्ये )
अद्य प्राणपरार्द्धतोऽपि दयिते दूरं प्रयाते हरौ
हा धिग् दुःस्सहशोकशङ्कुभिरभूद्विद्धान्तरा राधिका ।
तेनास्याः प्रतिषेधमार्यचरिते त्वं मा कृथाः मा कृथाः
क्षीणेयं क्षणमत्र सुष्ठु विलुठत्यार्त्तस्वरं रोदितु ॥ २९ ॥

ललिता—( नेपथ्याभिमुखमवलोक्य । स्वगतम् ) वुंदे, साहु साहु । जं निवारणम्मुही मुहरा तुह वरिदा । [ वृन्दे, साधु साधु । यन्निवारणोन्मुखी मुखरा त्वया वारिता । ]

---

भवेम' अमुं श्रीकृष्णं विना कथं जीवेमेत्यादिनोक्तमेवार्थमाह । यथार्थमेव करिष्यति'''खिन्नजने कारुण्यवीचीभरैः हरेश्चेतः परिणतं स्यादिति हेतोराभीरसुन्दरीणामन्यासां कृष्णस्यालोकसम्भावना भवेत् । मम तु विरहव्यथा । कीदृशी—मर्मग्रन्थेर्निकृन्तनं छेदनमेव चेष्टा यस्याः सा । तत्रापि वैरिणी पुनश्च क्रूरा इयं तादृशं तं पुनः श्रीकृष्णेन सह मिलनरूपं मद्भागधेयोत्सवं न सहते । विरोधं नाम प्रतिमुखसन्ध्यङ्गमिदम् । यथा—'यत्र व्यसनमायाति विरोधः स निगद्यते ।' ( ना० चं० का० । ७२ ) अत्र व्यसनागमनेन विरोधः स्पष्ट एव ॥ २७ ॥

उत्तापीति । गोकुलपतेर्विश्लेषाज्जन्म यस्य स ज्वरः मम मर्माण्यद्य भिनत्ति । कीदृशो ज्वरः ? पुटपाकतोऽप्युत्तापी । पुटपाकस्तैजसद्रवीकरणपात्रं 'मुच्छीति' प्रसिद्धम् । गरलसमूहात् चोभणः दम्भोलेर्वज्रादपि दुःसहः प्रौढ़विसूचिकासमूहादपि तीव्रः । विसूचिका रोगविशेषः ॥ २८ ॥

अद्येति । प्राणपरार्द्धादपि दयिते दूरङ्गते शोक एव शङ्कुः कील इति प्रसिद्धैर्विद्धान्तरा राधिका तेन हेतुना विलुठन्ती सती रोदितु । उपन्यास-नाम प्रतिमुखसन्ध्यङ्गमिदम् । तथा च—'युक्तिभिस्सहितो योऽर्थ उपन्यासः स इष्यते ।' ( ना० चं० का० । ७६ ) अत्र युक्तिसहितार्थता प्रकटैव ॥ २९ ॥

---

१. ०च्चैर्मनोऽयं-( ? )-अ० ।

राधा—( पुनश्चक्रवाकीं विलोक्य । साभ्यर्थनम् )

इयमुपगता प्राचीतस्त्वं रथाङ्गि ततो हरिः
तव पदमगादद्य्णोरस्य प्रवृत्तिमुदीरय ।
विनयति रथक्लान्तिं हन्त ! प्रभोः पथि तस्य कः
प्रणयति जनः को वा पत्राङ्कुरादिपरिष्क्रियाः ॥ ३० ॥

ललिता—पिअसहि, विउइणी णिउरंब कुडवं कलंबसाहिसिहरे महुरापत्थाणुक्कंठिदं विअ पेक्ख वलिपुट्ठराअं । [ प्रियसखि, वियोगिनीनिकुरम्बकुटुम्बं कदम्बशाखिशिखरे मथुराप्रस्थानोत्कण्ठितमिव पश्य वलिपुष्टराजम् ।]

राधा—( सश्लाघम् )

भ्रातर्वायस मण्डलीमुकुट हे निष्क्रम्य गोष्ठादितः
सन्देशं वद वन्दनोत्तरममुं वृन्दाटवीन्द्राय मे ।
दग्धुं प्राणपशुं शिखी विरहभूरिन्धे मदङ्गालये
सान्द्रं नागरचन्द्र भिन्धि रभसादाशार्गलाबन्धनम् ॥ ३१ ॥

( सव्यतः शारिकामवेक्ष्य )

न वेद्मि न हि शारिके यदसि तस्य दूती हरे-
रिदं प्रथमतः स्फुटं कथय मुञ्च वार्तां पराम् ।
स पिष्टकटुकण्टकः सखिभिरावृतो वर्तते
रथो रथ इति ब्रुवन् किमधुना प्रतीचीमुखः ॥ ३२ ॥

( इति विक्रोशन्ती । सशङ्कम् )

---

इयमिति । इयं चक्रवाकी पूर्वदिशातः उपगता तदेनां कृष्णवार्त्तां पृच्छामीति मनसि कृत्वाऽऽह—हे रथाङ्गि, त्वं पूर्वदिशात आगता ततो हेतोः हरिस्तवाक्ष्णोः पदमगात् । प्रवृत्तिं वार्त्तां कथय । कस्तस्य क्लान्तिं विनयति नाशयति परिष्क्रियाः भूषाः प्रणयति करोति ॥ ३० ॥

वलिपुष्टराजं काकराजम् ।

भ्रातरिति । वन्दनोत्तरं प्रणामोत्तरममुं सन्देशं वद । विरहभूर्विरहजन्मा शिखिः अग्निर्मदङ्गालये प्राणपशुं दग्धुमिन्धे । इन्धि दीप्तौ । तवागमनाशया जीवामि तामाशां छिन्धि । तस्मान्मरणं सुकरं तव विरहन्तु सर्वथा दुस्सहमिति भावः ॥ ३१ ॥

न वेद्मि इति । हे शारिके तस्य हरेर्दूती त्वमसीत्यहं न वेद्मि इति न ह्यपि तु जानाम्येव । परमन्यां वार्तां मुञ्च प्रथमं स्फुटमिदं कथय । स श्रीकृष्णः, पिष्टकटुकण्टकः नाशितकंसरूपकण्टकस्सन्नधुना व्रजागमनार्थं प्रतीचीमुखः पश्चिममुखः सरथो रथ इति ब्रुवन् वर्तते । शीघ्रागमनसम्भ्रमाद् वीप्सा । रथः कीदृशः—पिष्टकटुकण्टक इति वा ॥ ३२ ॥

किं जप्पिस्सदि संपदं गुरुअणो हा वैणवं क्वामृतं
जुत्तिं सोअहरं सुणामि ण कहं हा नर्मभङ्गी क सा।
धीरं किं ण धरेमि हंत हिअए हा प्राणनाथः क मे
कठ्ठं मुंचध रे पराणहदआ हा धिङ् न दृष्टो हरिः ॥ ३३ ॥

विशाखा—( अपवार्य ) ललिदे, तुरिअं कुण कं वि उआअं। जेण एसो पराणविद्दोही पिअसहीए वेअणंतरंगो क्खणं वि सिढ़िलीअदि। [ ललिते, त्वरितं कुरु कमप्युपायम्। येनासौ प्राणविद्रोही प्रियसख्या वेदनान्तरङ्गः क्षणमपि शिथिलीभवति। ]

ललिता—( राधामुपेत्य। संस्कृतेन )

आशङ्केमहि पङ्कजाक्षि कुतुकी निर्माय मायां क्रमा-
दक्रूरादिमयीं हरिः परिहसत्यस्मान् [1]कलावानयम्।
मोक्तुं न क्षमते कदापि यदयं वृन्दाटवीकन्दरं
शक्यः प्रेक्षितुमञ्जसा सखि स चेत् कुञ्जान्तरे मृग्यते ॥ ३४ ॥

विशाखा—ललिदे, साहु साहु। सच्चं विअक्खणासि। [ ललिते, साधु साधु। सत्यं विलक्षणासि। ]

राधा—हन्त सख्यौ, नासम्भा[2]व्यमिदम्। तन्मृगयेमहीति। ( इति परिक्रम्य पुरः कुरङ्गीर्विलोकयन्ती सबाष्पमुच्चैः )

हरि हरि भवतीभिः स्वान्तहारी हरिण्यो
हरिरिह किमपाङ्गातिथ्यसङ्गी व्यधायि।
यदनुरणितवंशीकाकलीभिर्मुखेभ्यः
सुखतृणकवला वः सामिलीढाः स्खलन्ति ॥ ३५ ॥

( इत्यन्यतो गत्वा साट्टहासम् )

---

किमिति। गुरुजनेभ्यः शङ्किताह—किं जल्पिष्यति साम्प्रतं गुरुजनः। मुरलीध्वनिं स्मृत्वाह—वैणवममृतं क्व। पुनरपि विवेकमवलम्ब्याह—युक्तिं शोकहरां न शृणोमि कथम्। परिहासपरिपाटीं स्मृत्वाह—कष्टं मुञ्चथ रे प्राणहतकाः। मृते सति श्रीकृष्णदर्शनं दुर्घटमित्याह—हा धिङ् न दृष्टो हरिः। इति ॥ ३३ ॥

आशङ्केमहीति। यद्यस्माद्वृन्दाटवीकन्दरं त्यक्तुमयं कृष्णः न क्षमते अत आशङ्केमहि। आशङ्कैव का तत्राह—कुतुकी हरिः अक्रूरादिमयीं मायां निर्मायास्मान् परिहसति। कुञ्जान्तरे मृग्यते चेत् स अञ्जसा प्रेक्षितुं शक्यः ॥ ३४ ॥

हरीति। यद् यस्माद्वो युष्माकं मुखेभ्यः सामिलीढा। अर्द्धचर्विततृणकवलाः स्खलन्ति। अतो हरिरपाङ्गातिथ्यसङ्गी व्यधायि ॥ ३५ ॥

---

१. वानलम्-ब०। २. नासम्भावित-अ०।

अलो मौलिच्छिप्पं भण पलिहलंदीं कुडिलदं
कुडंगे गूढंगो णिवसइ कहं पिञ्छमउली ।
नवाम्भोदश्रेणीस्तनितगणतोऽप्यर्बुदगुणं
पिअं भो तुम्हाणं मुरलिजणिदं जस्स रणिदं ॥ ३६ ॥

विशाखा—( सोद्ग्रीवमवेक्ष्य ) एसा पिअसहीए कुंडणिउंजे गुंजाअली दीसदि । [ एषा प्रियसख्याः कुण्डनिकुञ्जे गुञ्जावली दृश्यते । ]

राधा—( सम्भ्रमेणादाय । जिघ्रन्ती सोत्कम्पम् )

मणिराजरुचाविराजिता दनुजारेः स्फुरितासि वक्षसि ।
इह किं लुठसि त्वमाकुला सखि गुञ्जावलि कुञ्जवर्त्मनि ॥ ३७ ॥

ललिता—मग्गेणाहिणिवेसेण अविण्णादमग्गाओ अम्हे कथं सहित्थ-लीपेरंतं पत्तम्ह । [ मार्गेणाभिनिवेशेणाविज्ञातमार्गा वयं कथं सखीस्थली-पर्यन्तं प्राप्ता स्म । ]

राधा—हा प्रियसखि चन्द्रावलि, ( इत्यौत्सुक्यमभिनीय ) विशाखे, तामदृष्टपूर्वां वल्लवितवल्लवेन्द्रनन्दिनीं चन्द्रावलीं द्रष्टुमिच्छामि ।

विशाखा—सा क्खु करालाए संदाणिदा मंदिरे ऋीणदि । [ सा खलु करालया सन्दानिता मन्दिरे क्षीयते । ]

राधा—तदमुं गिरीन्द्रमेव गौरवेण गिरां पात्रङ्करवाणीति । ( परिक्रम्य सेर्ष्यम् ) विशाखे, कुतः साम्प्रतं मां प्रतारयसि यदग्रे देवी चन्द्रावली ।

( इत्युपसृत्य सबाष्पगद्गदम् )

---

अलेति । अलेत्यादिकं प्राकृतभाषायामप्युन्मादवशाद्बालकशब्दानुकरणम् । अरे मयूरी क्षिप्रं भण परिहरन्ती कुटिलताम् । कुञ्जे गूढाङ्गः निवसति कुत्र पिञ्छमौलिः । नवाम्भोदश्रेण्याः स्तनितगणतो गर्जितसमूहादप्यर्बुदगुणं प्रियं नो युष्माकं मुरलिजनितं यस्य रणितम् ॥ इति ॥ ३६ ॥

मणीति । हे सखि गुञ्जावलि मणिराजरुचा कौस्तुभकान्त्या विराजिता सती दनुजारेर्वक्षसि स्फुरितासि । इह किं लुठसीत्यादिना श्रीकृष्णविरहे न किमिति भावः ॥ ३७ ॥

द्वेपादिवशात् सम्यक्तयादृष्टपूर्वाम् । वल्लवितः…कृतो वल्लवेन्द्रनन्दनो यया तां चन्द्रावलीम् । हा प्रियसखीत्यादिना श्रीकृष्णस्य सुखसंवर्द्धनार्थं योग-मायाकृतचन्द्रावल्यां या ईर्ष्याऽऽसीत्साऽधुना गतेत्यपि बोध्यम् । करालया सन्दानिता रुद्धा । अमुं गोवर्द्धनम् । गिरां गौरवेन स्तौमीत्युक्त्वा परिक्रम्याग्रे गत्वा स्वप्रतिबिम्बं स्फटिकशिलायां दृष्ट्वा सेर्ष्यमाह—हे विशाखेत्यादि ।

कुसुमिनि लतापुञ्जे गुञ्जे मदान्धमधुव्रते
त्रसदिव दृशोर्द्वन्द्वं न्यस्यन्स्मितस्फुरिताधरः।
किमिह मुरलीपाणिर्वेणीशिखोच्चलचन्द्रकः
सखि तव सखा दृष्टः स्वैरी व्रजेन्द्रसुतस्त्वया ॥ ३८ ॥

( कन्दरे निजोक्तिप्रतिध्वानमाकर्ण्य । सव्यथम् ) कथं साक्रन्दमसौ मामेवानुपृच्छति । ( इति सविधमासाद्य । सव्यामोहम् )

सान्द्रैः सुन्दरि वृन्दशो हरिपरिष्वङ्गैरिदं मङ्गलं
दृष्टं ते हत राधया गमनया दिष्ट्याद्य चन्द्रावलि: ।
द्रागेनां निहितेन कण्ठमभितः शीर्णेन कंसद्विषः
कर्णोत्तंससुगन्धिना निजभुजद्वन्द्वेन सन्धुक्षय ॥ ३९ ॥

( इत्यालिङ्गितुमुपक्रमते )

ललिता—हला, फलिहसिलापडिबिंबिदा एसा तुमं ज्जेव ण क्खु चंदाअली । [ सखि, स्फटिकशिलाप्रतिबिम्बितैषा त्वमेव न खलु चन्द्रावली । ]

राधा—( निरूप्य ) नातथ्यं ब्रवीषि [ पुरो गत्वा । सोल्लासं विहस्य ] ललिते, दिष्ट्याहममुक्तविग्रहाऽद्य संवृत्ता । पश्य पश्य । ( इत्यङ्गुल्या दर्शयन्ती )

विदूरे कंसारिर्मुकुटितशिखण्डावलिरसौ
पुरो गौराङ्गीभिः कलितपरिरम्भो विलसति ।
( इति साभ्यसूयं पुनर्निरूप्य । सखेदम् )
न कान्तोऽयं शङ्के सुरपतिधनुर्धाममधुर-
स्तडिल्लेखाहारी गिरिमवललम्बे जलधरः ॥ ४० ॥

( इति मूर्च्छति )

---

कुसुमिनीति । कुसुमिनि कुसुमयुक्ते लतापुञ्जे दृशोर्द्वन्द्वं त्रसदिवान्यकर्तृकस्य दर्शनशङ्कया भीतमिव क्षिपन् स्मितस्फुरिताधरस्तव सखा त्वया दृष्टः ॥ ३८ ॥

सान्द्रैरिति । गिरां पान्थ्याऽनया सह कथोपकथनं करवाणि । हरिपरिष्वङ्गैः मङ्गलन्तेऽङ्गमनया हतराधया दिष्ट्याद्य दृष्टम् । निजभुजद्वन्द्वेन मम कण्ठमभितः निहितेनैनां मां सन्धुक्षय जीवय ॥ ३९ ॥

असुक्तविग्रहाऽत्यक्तशरीराऽहं संवृत्ता यदग्रे श्रीकृष्णो वर्तते । पश्य । विदूरे इति । पुनर्निरूप्याह—न कान्तोऽय[1]मित्यादि । अत्र पुष्पं नाम प्रतिमुखसन्ध्यङ्गम् । तथा हि—

---

१. कान्तोऽयमिति—अ० ।

उभे—हला, समस्सस समस्सस । [ सखि, समाश्वसिहि समाश्वसिहि ]

राधा—( समाश्वस्य । सादरम् )

गिरीन्द्र त्वं प्रेम्णा प्रवर वरिवस्याविरचने
वरीयानित्यङ्के तव वसति शङ्के प्रभुरसौ ।
( इति काकुमातन्वती )
दरीद्वारं दूराद्द्रुतमिह दरोद्घाट्य दयया
दुरन्तं दैन्योर्मिं मम दमय दामोदर दृशा ॥ ४१ ॥

( पुनर्निभाल्य ) कथमेष झात्कारिवारिनिर्झरायितमहाश्रुपूरो मौनमेवा[1]ऽऽलम्बे । ( इत्यञ्जलिं बध्नन्ती )

गोवर्द्धन त्वमिह गोकुलसङ्गिभूमौ
तुङ्गैः शिरोभिरभिपद्य नभो विभासि ।
तेनावलोक्य हरितः परितो वदाशु
कुत्राद्य वल्लवमणिः खलु खेलतीति ॥ ४२ ॥
( किञ्चिदग्रे गत्वा )

मकरन्दकरम्बितः कदम्बो ननु सोऽयं चटुलाक्षि यस्य मूले ।
प्रचलाकशलाकया हरिस्ते कचपक्षे रचयाञ्चकार चूडाम् ॥ ४३ ॥
( दक्षिणतः प्रेक्ष्य । सविक्रोशम् )

---

सविशेषोऽभिधानं यत् पुष्पं तदिति सङ्गतम् । ( ना० चं० का० । ७४ ) अत्र पुनर्जलधरतया विशेषज्ञानात् पुष्पम् ।

गिरीन्द्रेति । प्रवरवरिवस्यायाः श्रेष्ठशुश्रूषाया विरचने त्वं वरीयानिति हेतोस्तवाङ्के क्रोडे प्रभुर्वसति इत्यहं शङ्के । दरी कन्दरा तस्य द्वारमीषदुद्घाट्य हे दामोदर दृशा दर्शनेन मम दैन्योर्मिं दमयेति ॥ ४१ ॥

झात्कारि झात्कारशब्दयुक्तो[2] वारि निर्झरमिवाचरितो महाश्रुपूरो यस्यास्तादृश एष गोवर्द्धनः कथं मौनमालम्बे[3] । तस्मादत्र कृष्णो नास्ति तद्विरहेणायं रोदिति । भ्रमोपरि भ्रमान्तरमाह—इत्यञ्जलिमिति ।

गोवर्द्धनेति । त्वं शिरोभिर्नभोऽभिपद्य प्राप्य गोकुलसङ्गभूमौ विभासि तेनोच्चमस्तकतया दूरदर्शितत्वेन हेतुना परितः हरितो दिशोऽवलोक्य वद कृष्णः कुत्र खेलतीति ॥ ४२ ॥

मकरन्देति । सोऽयं कदम्बो यस्य मूले प्रचलाको मयूरपुच्छस्तस्य शलाकया ते । कचपक्षे—केशे चूडाम् ।

---

१. मालम्बते–ब० । २. झात्कारयुक्तो–अ० । ३. मालम्बते–ब० ।

सेयं गोवर्द्धनगिरिदरीद्वारि विन्यस्तचित्रा
यस्यामास्ते विचकिलमयी कल्पिता तेन शय्या।
दृष्ट्वाप्येनां ललितमभितः स्मारयन्ती पुरस्तात्
प्राणान् कण्ठे सखि [1]विचरतो धिग्वराकान् ममास्तु ॥ ४४ ॥

( इति वैक्लव्यं नाटयन्ती )

दृष्टः कुञ्जगणो व्यलोकि निखिलं वृन्दाटवीकोटरं
निर्बन्धेन निभालिता च निखिला भाण्डीरभूमण्डली।
प्रत्यङ्गं मुहुरीक्षितः सखि मया सोऽयञ्च गोवर्द्धनो
लब्धः क्वापि न तस्य हन्त ललिते गन्धोऽपि बन्धोस्तव ॥ ४५ ॥

ललिता—हला, कुडंगे लुक्किदो माहवो तुए केतिअवारं ण लद्धोत्थि। ता णिव्विण्णा मा होहि। [ सखि, कुञ्जे निह्नुत माधवस्त्वया कियद्वारं न लब्धोऽस्ति। तस्मान्निर्विण्णा मा भव। ]

राधा—( परिक्रम्य। ससम्भ्रमम् ) साधु ललिते, साधु। पश्य दूरादक्रूरेण सार्द्धं पुरस्स्यन्दनमारूढोऽयं नन्दनन्दनः। तदेनं कण्ठग्राहमवरोहयिष्ये। ( इति तदभ्यर्णमासाद्य। सव्यथम् )

गिरेः शृङ्गं स्वर्णस्तवकितमिदं हन्त न रथ-
स्तमालोऽयं नीलद्युतिरिह न गोपीरतिगुरुः।
वली शार्दूलोऽसौ नहि नृपतिदूतः सखि पुरो
विधातुर्वामत्वात् कथमितरथा सर्वमुदभूत् ॥ ४६ ॥

( इति मूर्च्छति )

विशाखा—( सावेगम् ) ललिदे, जाव भिसिणीदलाइं आणेमि ताव

---

सेयमिति। यस्यां दर्यां विचकिलमयी मल्लिका पुष्पमयीं शय्यां दृष्ट्वा। कीदृशीम्—ललितं विलासं स्मारयन्तीम्। कण्ठे विचरतो न तु निर्गच्छतोऽतो वराकान् प्राणान् धिगस्तु ॥ ४४ ॥

दृष्ट इति। निखिला भाण्डीरभूमण्डलीत्यत्र निविडा भाण्डीर इत्यपि पाठः। तस्य तव बन्धोर्गन्धोऽपि न लब्धः ॥ ४५ ॥

तत्तस्मान्निर्विण्णाऽन्वेषणे विरागा मा भव। स्यन्दनं रथम्। एनं श्रीकृष्णं कण्ठग्राहं कण्ठे गृहीत्वोत्तारयिष्यामि। अभ्यर्णं निकटम्।

गिरेरिति। शार्दूलो व्याघ्रविशेषः। नृपतिदूतोऽक्रूरः। विधातुर्वामत्वादेव सर्वं रथादिकम्। कथमितरथा निश्चिनाच्छिन्नमुदभूत् ॥ ४६ ॥

पूर्वापरविचारणीया ग्रन्थतात्पर्यानुसारेण 'कृष्णोऽन्यो यदुसम्भूतो यस्तु

1. विरचयतो—अ०।

णं पडंचलेण वीएहि। [ ललिते, यावद् बिसिनीदलान्यानयामि तावदेनां पटाञ्चलेन वीजय। ] ( इति धावति )

( नेपथ्ये )

विरहभरमुदीर्णं प्रेक्ष्य राधातिदैन्यं
स्फुटमखिलमशुष्यन्मानसी हन्त गङ्गा।
अहह रवितुरङ्गाजीव्यशृङ्गाग्रदूर्वः
शतभुजमितिरासीदेष गोवर्द्धनोऽपि ॥ ४७ ॥

राधा—( प्रबुद्धय। सप्रणयेर्ष्यम् ) हला राहि, मुंच अलिअमाण-दुल्ललिदत्तणं। [ सखि राधे, मुञ्चालीकमानदुर्ललितत्वम्। ]

( ललिता निश्चस्य नम्रीभवति )

राधा—हला राहि, एसो दे पअसद्ददिण्णकण्णो[1] केलिकुडंगे पविसदि कण्हो। [ सखि राधे, एष ते पदशब्ददत्तकर्णः केलिकुञ्जे प्रविशति कृष्णः। ]

( इति ललितायाः पदान्ते पतन्ती )

मुकुन्दोऽयं कुन्दोज्ज्वलपरिसरं कुञ्जमयते
लताली च स्मेरा मधुपविरुतैस्त्वां त्वरयति।

---

गोपेन्द्रनन्दनः। वृन्दावनं परित्यज्य स क्वचिन्नैव गच्छतीति'। तन्त्रोक्तेन च धनुर्मखदर्शनच्छलेन योगमायाकृतं श्रीकृष्णस्य प्रकाशद्वयमेकेन गोपनन्दनरूपेण व्रजे स्थितिरन्यस्य यदुनन्दनस्य मथुरागमनम्। तथैव—'विन्ध्यशैलप्रसूता च कीर्तिका प्रसुता तथा। द्वयोरेवात्र प्रकटं लीला च द्विविधा मता॥' इत्यादि राधातन्त्रानुसारेण मूर्च्छाच्छलेन श्रीराधायाः, राधिकाया वीजनार्थं कमलपत्रा-नयनच्छलेन विशाखाया, गोवर्द्धने भृगुपातच्छलेन ललितायाश्च योगमायाकृत-प्रकाशद्वयम्। एकप्रकाशेन व्रजे स्थितिरन्येन द्वारकागमनञ्च ज्ञेयम्। एकदैवान्य-लक्षितप्रकाशद्वये भिन्नचेष्टायां प्रमाणं मुनिभिः सह श्रीकृष्णस्य श्रुतदेवबहुलाश्व-योर्गृहागमनादिकम्।

विरहेति। राधातिदैन्यं प्रेक्ष्य मानसी गङ्गा शुष्यद्रवितरङ्गानामाजीव्यं भक्ष्यं शृङ्गाग्रवर्ती दूर्वा यस्य स एष गोवर्द्धनश्शतभुजेन मितिः परिमितिः यस्य तादृश आसीत्॥ ४७॥

दिव्योन्मादेनात्मानं ललितां ललिताञ्चात्मानं मत्वा सप्रणयेर्ष्यमाह—सखीति। दुर्ललितत्वं दुश्चेष्टनम्। नम्रीभवतीति खेदातिशयेनास्या आत्मवि-स्मृतिरपि जाता न जानेऽतः परं किं भविष्यतीति भावनया।

मुकुन्देति। कुन्दपुष्पेनोज्ज्वलपरिसरं कुञ्जं मुकुन्दोऽयते गच्छति। लताश्रेणी

---

१. पअसद्दिस्सकण्णो—अ०।

सेयं गोवर्द्धनगिरिदरीद्वारि विन्यस्तचित्रा
यस्यामास्ते विचकिलमयी कल्पिता तेन शय्या ।
दृष्ट्वाप्येनां ललितमभितः स्मारयन्ती पुरस्तात्
प्राणान् कण्ठे सखि [1]विचरतो धिग्वराकान् ममास्तु ॥ ४४ ॥

( इति वैक्लव्यं नाटयन्ती )

दृष्टः कुञ्जगणो व्यलोकि निखिलं वृन्दाटवीकोटरं
निर्बन्धेन निभालिता च निखिला भाण्डीरभूमण्डली ।
प्रत्यङ्गं मुहुरीक्षितः सखि मया सोऽयञ्च गोवर्द्धनो
लब्धः क्वापि न तस्य हन्त ललिते गन्धोऽपि बन्धोस्तव ॥ ४५ ॥

ललिता—हला, कुडंगे लुक्किदो माहवो तुए केतिअवारं ण लद्धोत्थि । ता णिव्विण्णा मा होहि । [ सखि, कुञ्जे निह्नुत माधवस्त्वया कियद्वारं न लब्धोऽस्ति । तस्मान्निर्विण्णा मा भव । ]

राधा—( परिक्रम्य । ससम्भ्रमम् ) साधु ललिते, साधु । पश्य दूरादक्रूरेण सार्द्धं पुरस्स्यन्दनमारूढोऽयं नन्दनन्दनः । तदेनं कण्ठग्राहमवरोहयिष्ये । ( इति तदभ्यर्णमासाद्य । सव्यथम् )

गिरेः शृङ्गं स्वर्णस्तवकितमिदं हन्त न रथ-
स्तमालोऽयं नीलद्युतिरिह न गोपीरतिगुरुः ।
वली शार्दूलोऽसौ नहि नृपतिदूतः सखि पुरो
विधातुर्वामत्वात् कथमितरथा सर्वमुदभूत् ॥ ४६ ॥

( इति मूर्च्छति )

विशाखा—( सावेगम् ) ललिदे, जाव भिसिणीदलाइं आणेमि ताव

---

सेयमिति । यस्यां दर्यां विचकिलमयी मल्लिका पुष्पमयीं शय्यां दृष्ट्वा । कीदृशीम्—ललितं विलासं स्मारयन्तीम् । कण्ठे विचरतो न तु निर्गच्छतोऽतो वराकान् प्राणान् धिगस्तु ॥ ४४ ॥

दृष्ट इति । निखिला भाण्डीरभूमण्डलीत्यत्र निविडा भाण्डीर इत्यपि पाठः । तस्य तव बन्धोर्गन्धोऽपि न लब्धः ॥ ४५ ॥

तत्तस्मान्निर्विण्णाऽन्वेषणे विरागा मा भव । स्यन्दनं रथम् । एनं श्रीकृष्णं कण्ठग्राहं कण्ठे गृहीत्वोत्तारयिष्यामि । अभ्यर्णं निकटम् ।

गिरेरिति । शार्दूलो व्याघ्रविशेषः । नृपतिदूतोऽक्रूरः । विधातुर्वामत्वादेव सर्वं रथादिकम् । कथमितरथा निश्चिताच्छिन्नमुदभूत् ॥ ४६ ॥

पूर्वापरलिखनरीत्या ग्रन्थतात्पर्यानुसारेण 'कृष्णोऽन्यो यदुसम्भूतो यस्तु

१. विरचयतो–अ० ।

णं पडंचलेण वीएहि। [ ललिते, यावद् बिसिनीदलान्यानयामि तावदेनां पटाञ्चलेन वीजय। ] ( इति धावति )

( नेपथ्ये )

विरहभरमुदीर्णं प्रेक्ष्य राधातिदैन्यं
स्फुटमखिलमशुष्यन्मानसी हन्त गङ्गा।
अहह रवितुरङ्गाजीव्यशृङ्गाग्रदूर्वः
शतभुजमितिरासीदेष गोवर्द्धनोऽपि॥ ४७॥

राधा—( प्रबुद्धय। सप्रणयेर्ष्यम् ) हला राहि, मुंच अलिअमाण-दुल्ललिदत्तणं। [ सखि राधे, मुञ्चालीकमानदुर्ललितत्वम्। ]

( ललिता निश्वस्य नम्रीभवति )

राधा—हला राहि, एसो दे पअ[1]सद्ददिण्णकण्णो केलिकुडंगे पप-विसदि कण्हो। [ सखि राधे, एष ते पदशब्ददत्तकर्णः केलिकुञ्जे प्रविशति कृष्णः। ]

( इति ललितायाः पदान्ते पतन्ती )

मुकुन्दोऽयं कुन्दोज्ज्वलपरिसरं कुञ्जमयते
लताली च स्मेरा मधुपविरुतैस्त्वां त्वरयति।

---

गोपेन्द्रनन्दनः। वृन्दावनं परित्यज्य स क्वचिन्नैव गच्छतीति'। तन्त्रोक्तेन च धनुर्मखदर्शनच्छलेन योगमायाकृतं श्रीकृष्णस्य प्रकाशद्वयमेकेन गोपनन्दनरूपेण व्रजे स्थितिरन्यस्य यदुनन्दनस्य मथुरागमनम्। तथैव—'विन्ध्यशैलप्रसूता च कीर्तिका प्रसुता तथा। द्वयोरेवात्र प्रकटं लीला च द्विविधा मता॥' इत्यादि राधातन्त्रानुसारेण मूर्च्छाच्छलेन श्रीराधायाः, राधिकाया वीजनार्थं कमलपत्रा-नयनच्छलेन विशाखाया, गोवर्द्धने भृगुपातच्छलेन ललितायाश्च योगमायाकृत-प्रकाशद्वयम्। एकप्रकाशेन व्रजे स्थितिरन्येन द्वारकागमनञ्च ज्ञेयम्। एकदैवान्य-लक्षितप्रकाशद्वये भिन्नचेष्टायां प्रमाणं मुनिभिः सह श्रीकृष्णस्य श्रुतदेवबहुलाश्व-योर्गृहागमनादिकम्।

विरहेति। राधातिदैन्यं प्रेक्ष्य मानसी गङ्गा शुष्यद्रवितरङ्गानामाजीव्यं भक्ष्यं शृङ्गाग्रवर्ती दूर्वा यस्य स एष गोवर्द्धनश्शतभुजेन मितिः परिमितिः यस्य तादृश आसीत्॥ ४७॥

दिव्योन्मादेनात्मानं ललितां ललिताञ्चात्मानं मत्वा सप्रणयेर्ष्यमाह—सखीति। दुर्ललितत्वं दुश्चेष्टनम्। नम्रीभवतीति खेदातिशयेनास्या आत्मवि-स्मृतिरपि जाता न जानेऽतः परं किं भविष्यतीति भावनया।

मुकुन्देति। कुन्दपुष्पेनोज्ज्वलपरिसरं कुञ्जं मुकुन्दोऽयते गच्छति। लताश्रेणी

---

1. पअसद्दद्दिस्सकण्णो–अ०।

तदुक्तिभ्रोन्मत्ते न तुद पदलग्नां सहचरीं
दुरापस्ते मौग्ध्याद्विरमति वरीयानवसरः ॥ ४८ ॥

ललिता—हा हदह्मि देव्वहदएण । [ हा । हतास्मि दैवहतकेन ]
( इति फूत्कृत्य रोदिति )

विशाखा—( सम्भ्रमादुपेत्य ) ललिदे, किं ख्खु एदं ! धीरा होहि । [ ललिते, किं खल्विदम् । धीरा भव । ]

राधा—( सविस्मयम् ) सहि, किं ख्खु तुमं च्चेअ ललिदासि । [ सखि किं त्वमेव खलु ललितासि । ]

ललिता—( सगद्गदम् ) अध इं [ अथ किम् ]

राधा—अम्महे सच्चं भणादि जं अहं राहंह्मि । [अहो सत्यं भणति यदहं राधास्मि] ( समन्ताद्विलोक्य ) णूणं वणमालिआपुफ्फाइं विइणिदुं एत्थ पत्तह्मि ता कण्हस्स कण्णपूरकिदे मल्लित्थवअं गेण्हिस्स । [ नूनं वनमालिकापुष्पाणि विचेतुमत्र प्राप्ताः स्म तस्मात् कृष्णस्य कर्णपूरकृते मल्लिकास्तवकं ग्रहीष्यामि ] ( इति पुष्पवाटिकामुपेत्य । सातङ्कम् )

किमग्रे मल्लीनां स्खलति कलिकाश्रेणिरधुना
सरोजानां किं वा त्रुटति परितः कोरकततिः ।
कथं वा जातीनां दधति मुकुलाः श्यामलरुचं
हरेर्वृन्दारण्ये द्रुतमहह केयं गतिरभूत् ॥ ४९ ॥

उभे—णूणं महादावग्गिज्जालाविलीहा एसा वणत्थली । [ नूनं महादावाग्निज्वालाविलीढैषा वनस्थली । ]

राधा—ललिदे, ण जाणे लिक्खदाआणलकीलाविलीहं[1] व्व कीस अज्ज मे चित्तं पडिभादि । ता 'दिट्ठिमेत्तमहिदपअणुदावमंडलं दे वअस्सं

---

च स्मेरा प्रफुल्ला । श्लेषात् लतारूपी सखी श्रेणी च स्मेरा मधुपानां विरुतैर्विशिष्टशब्दैस्त्वां गन्तुं त्वरयति । हे उन्मत्ते, ते तव मौग्ध्याद्दुरापो दुष्प्रापो वरीयानवसरः श्रीकृष्णमिलनसमयः विरमति याति ॥ ४८ ॥

किमिति । मल्लीनां कलिकाश्रेणिः स्खलति । किं वा कथं वा कोरकततिः कलिकाततिः त्रुटति । 'कदम्बानां किं वा त्रुटति परितो मञ्जरितति'रित्यपि पाठ० । जातीनां मुकुलाः शुक्ला एव भवन्ति कथं श्यामलरुचं दधति । का गतिरभूत् । कलिका तु प्रफुल्ला भूत्वा परिणाम एव स्खलति न तु कलिकावस्थायाम् । अनेनाशुभदर्शनेन कलिकारूपानां स्वानां स्खलनमपि सूचितम् । जातिमुकुलानां श्यामरुचिदर्शनेन स्वानां रूपान्तरतया प्रतीतिश्च ॥ ४९ ॥

---

१. विलीहाव्व–अ० ।

अणुसरम्ह। [ ललिते, न जाने तीव्रगदावानलज्वालावलीढ़मिव कस्मादद्य मे चित्तं प्रतिभाति। तस्माद् दृष्टिमात्रमथितप्रचण्डदावमण्डलं ते वयस्यमनुसरामः ]

ललिता—एदु एदु पिअसही। [ एतु एतु प्रियसखी। ] ( इति तिस्रः परिक्रमन्ति )

राधा—( सहर्षम् ) णादिदूरे गोउलिंदणंदणो भवे जं एसा गोमंडली लक्खीअदि। [ नातिदूरे गोकुलेन्द्रनन्दनो भवेद्यदेषा गोमण्डली लक्ष्यते। ]

( इति परिक्रम्य। सोद्वेगम् )

चरति न पुरः शष्पं बाष्पप्रवाहिविलोचनान्
मुखपरिसरे लब्धोद्घूर्णान्न लेढि च तर्णकान्।
किमिति हरितो हम्भारावैरियं सखि भिन्दती
हरि हरि हरेर्धेनुश्रेणी परं पथि शीर्यति ॥ ५० ॥

( नेपथ्ये )

दंशः कंसनृपस्य वक्षसि बलात् कृष्णोरगेणार्प्यतां
दूरे गोष्ठतडागजीवनमितो येनाचकर्षे हरिः।
हा धिक् कः शरणं भवेन्मृदि लुठद्गात्रीयमन्तः क्लमा-
दाभीरी शफरीततिः शिथिलितश्वासोर्मिरामीलति ॥ ५१ ॥

( राधिका सोत्कम्पं घूर्णन्ती मूर्च्छति )

ललिता—हला, समस्सस समस्सस। [ सखि, समाश्वसिहि समाश्वसिहि। ]

राधा—( चक्षुरुन्मील्य नभो विलोकयन्ती ) देव दिवाकर, नमस्यति राधिका। साधयाभीष्टम्।

विशाखा—( ससम्भ्रमम् ) सहस्सभाणुणा मंगलं आसंसिदं। [ सहस्रभानुना मङ्गलमाशंसितम् ]

---

अत्र दावाग्निपदेन पक्षे विरहज्वाला। ते वयस्यं श्रीकृष्णम्।

चरतीति। धेनुश्रेणी शष्पं बालतृणं न चरति। मुखसमीपे लब्धघूर्णान् तर्णकान् नववत्सान्न लेढि। हरितो दिशः भिन्दती सती पथि परं केवलं शीर्यति ॥ ५० ॥

दंश इति। कृष्णोरगेण कृष्णसर्पेण कंसस्य वक्षसि दंशो दन्तोऽर्प्यताम्। गोष्ठतडागस्य जीवनं जलम्। हरिपक्षे स्फुटम्। यो न कंसेनाचकर्षेऽपजह्रे। मृदि लुठद्गात्री शिथिलिताः श्वासरूपा ऊर्मयस्तरङ्गा यस्याः सा। आभीरीरूपा शफरीततिः मत्स्यश्रेण्यामीलति प्राणान् त्यजति। आभीरीततेः कः शरणं रक्षिता भवेद्। इति ॥ ५१ ॥

राधा—( अश्रुतिमभिनीय ) हन्त,

विपूचीनैर्नीता मधुरिमपरीतैः मधुभिदः
पदैर्वैलक्षण्यं किमपि जगतीलोचनहरम् ।
इयं तीरक्षोणी तरणितनयायाः सखि दृशो-
र्व्रजन्ती पन्थानं मम करणवृत्तीर्ज्वरयति ॥ ५२ ॥

ललिता—हला, एत्थ पुलिने सूरं आराहिअ अहिट्ठं अब्भत्थेह्म । [ सखि, अत्र पुलिने सूर्यमाराध्याभीष्टमभ्यर्थयामः । ]

राधा—( पुलिने लुठन्ती )

त्वमस्माकं यस्मिन्पशुपरमणीनां रचितवान्
सदा भूयो भूयः प्रणयगहनां तुष्टिलहरीम् ।
तदेतत्कालिन्दीपुलिनमिह खिन्नाः किमधुना
परीरम्भादम्भोरुहमुख न सम्भावयसि नः ॥ ५३ ॥

ललिता—( कालिन्दीमवलोक्य ) बहिणि, मिहिरवंसुत्तंसरूपे तुअत्तो महुमहणपउत्तिं [1]लद्धुकामह्मि । [ भगिनि मिहिरवंशोत्तंसरूपे, त्वत्तः मधुमथनप्रवृत्तिं लब्धुकामास्मि । ]

राधा—यदजनि मणिहर्म्यस्पर्द्धिकुञ्जानुविद्धं
तव सखि नवरोधस्तस्य लीलावरोधः ।

( इति मूर्च्छति )

विशाखा—ललिदे, वणमालिणो णिम्मलमालं णासासिहरे अप्पेहि । [ ललिते, वनमालिनो निर्माल्यमालां नासाशिखरेऽर्पय । ]

( इत्युभे तथा कुरुतः )

---

सहस्रभानुना सूर्येण । आशंसितं कथितम् । श्रुतमपि विशाखावाक्यमश्रुतिम् । विपूचीनै इति । तरणितनयाया यमुनायास्तीरवर्तिभूमिः मधुभिदः पदैः । कीदृशैः—विपूचीनैः विपु अञ्चतीति विपूचीनः । अर्थात् विश्वव्याप्तैः सर्वत्र दत्तैः । किमपि वैलक्षण्यं नीता दृशोः पन्थानं व्रजन्ती सती मम करणवृत्तीः सन्तापयति ॥ ५२ ॥

त्वमिति । हे अम्भोरुहमुख श्रीकृष्ण यस्मिन् पुलिनेऽस्माकं तुष्टिलहरीं रचितवान् तदेतत् कालिन्दीपुलिनम् । इह पुलिने खिन्ना वयमधुना परीरम्भात् परीरम्भं कृत्वा । ल्यब्लोपे पञ्चमी । नोऽस्माकं किं न सम्भावयसि सम्भापयसि ।

मिहिरस्य सूर्यस्य वंशोत्तंसरूपे त्वत्तः सकाशात् मधुमथनस्य प्रवृत्तिं लब्धुकामा वयमागताः स्म । यदजनीति । हे सखि, मणिहर्म्यस्पर्द्धि कुञ्जेनानुविद्धं तव नवरोधः नव्यतीरं तस्य कृष्णस्य लीलावरोधः लीलान्तःपुरमजनि ।

---

1. लद्धुकामागदह्मि [ लब्धुकामाऽऽगतास्मि ]—व० ।

राधा—( चिरात् प्रबुद्धय ) ललिते, समाकर्णय ।

दृष्टः कोऽपि भयङ्करः सखि मया स्वप्नो बलीयानभूद्
एतस्मिन्नपि मे प्रतीतिरचला जाग्रद्दशेत्युद्गता ।
दूतः कोऽपि दुराग्रहः क्षितिपतेरागत्य वृन्दाटवीं
कृष्णं हन्त रथेन ( इत्यर्द्धोक्ते )
शान्तमहह क्षेमं व्रजे तिष्ठतु ॥ ५४ ॥

तदहं दुःस्वप्नविपाकशान्तये कलिन्दनन्दिन्यां कृताभिषेका मुकुन्दं पश्येयम् ।

विशाखा—हला, खेलातित्थं गच्छेह्म जहिं सदा मुउन्दो खेलदि । [ सखि, खेलातीर्थं गच्छामो यत्र सदा मुकुन्दः खेलति । ] ( इति सर्वाः परिक्रामन्ति )

( ततः प्रविशति वृन्दा मुखरा च )

मुखरा—वच्छे, किं करेदि राही ? । [ वत्से, किं करोति राधा ? ]

वृन्दा—आर्ये पश्य । इयं विशाखया सह खेलातीर्थमवगाहते ।

राधा—( [1]तुङ्गां तरङ्गशोभां विलोक्य ) विशाखे, साधु साधु यदद्य खेलातीर्थमुपनीतास्मि । पश्य नीलाम्बुजवनीनिलीनस्तव सखा विस्तृतभुजार्गलः खेलति ।

विशाखा—अदो ओतरेहि । [ अतोऽवतर । ] ( इत्युभे निष्क्रान्ते )

---

दृष्ट इति । कोऽपि स्वप्नो दृष्टस्तस्मिन् स्वप्नेऽचला प्रतीतिरभूत् । क्षितिपतेः कंसस्य कोऽपि दूतः वृन्दाटवीमागत्य कृष्णं रथेन इत्यर्द्धोक्ते मथुरां नीत इति क्रियापदम् । अमङ्गलरूपमनुक्त्वा व्रजे शान्तं क्षेमञ्च तिष्ठत्वित्युवाच । ह्लादिनी सारभूताया आशीर्वादादेः अप्रकटलीलायां प्रकटलीलायाञ्च । सर्वेषां व्रजस्थानां श्रीकृष्णविरहजन्यदेहत्यागादिरूपा । यत् शान्तमभूत् श्रीकृष्णमिलनरूपं क्षेमञ्चाभूदित्यपि स्फुटं ज्ञेयमिति । अत्र 'साकाङ्क्षस्यैव वाक्यस्य वाक्केलिः स्यात् समाप्तितः' । इति वाक्केलिसंज्ञं वीथ्यङ्गम् । वाक्केलिसमाप्तिरत्र श्रीकृष्णप्राप्त्याकाङ्क्षया विरहजन्यवाक्केलेः समाप्तितः इति ॥ ५४ ॥

यमुनायास्तरङ्गशोभां दृष्ट्वा यमुनायां नीलाम्बुजभ्रमात्तरङ्गे श्रीकृष्णभुजभ्रमादाह—पश्येत्यादि । अतः कारणादवतर । इत्युभे राधाविशाखे यमुनाप्रवाहमध्ये निष्क्रान्ते प्रविष्टे बभूवतुः । पितुः सूर्यस्यादेशात् यमुनया विन्ध्याचलकन्या राधा नीता सूर्यलोकं गता वृषभानुजा तु विशाखया सह सर्वैरलक्षिता प्रेममूर्च्छिता सती व्रज एव योगमाययैवाच्छादिता तस्थौ इत्यग्रे व्यक्तं भविष्यति ।

---

१. तुङ्गीं तरङ्ग—अ० ।

ललिता—( विलोक्य । सविक्रोशम् ) हद्दो ! हद्धी ! हद्धि । एसा पिअसही विसाहाए सद्धं गहिरप्पवाहे णिमग्गा ज्जेव्व । ण उण इदो उत्थिदा । ता [1]तुण्णं दोण्णं तइआ भविस्सं । [हा धिक् हा धिक् । हतास्मि । एषा प्रियसखी विशाखया सार्द्धं गम्भीरप्रवाहे निमग्नैव । न पुनरित उत्थिता । तस्मात्तूर्णं द्वयोस्तृतीया भविष्यामि । ] ( इत्यवतरणं नाटयति )

मुखरा—( सास्रम् ) हा देव्व, किं क्खु एदं । [ हा दैव ! किं खल्वेतत् ? ]

वृन्दा—( साक्रन्दम् ) धिक् केयं गतिरुपस्थिता । ( इत्यार्त्तिं नाटयन्ती ) आर्ये, मन्युनावतितीर्षुं तरसा धारय ललिताम् ।

( इत्युभे तथा कुरुतः )

ललिता—( विलोक्य । स्वगतम् ) हद्धी हद्धी । गरिट्ठो विग्घो उवट्ठिदो । ता केण वि ववदेसेण इदो णिक्कमिअ गोवद्धणे [2]भिउपडणेण णं पिअजणविओअदंसणेण वि अविदिण्णं[3] सिलाकठिणं तणुअं सिलाहिं चुण्णइस्सं । [ हा धिक् हा धिक् । गरिष्ठो विघ्न उपस्थितस्तस्मात् केनापि व्यपदेशेनेतो निष्क्रम्य गोवर्द्धने भृगुपातेनैनां प्रियजनदर्शनेनाप्यविदीर्णां शिलाकठिनां तनुं शिलाभिश्चूर्णयिष्यामि ] ( इति शोकावेगमपह्नुत्य । प्रकाशम् ) अज्जे, मुंचेहि मं । अहं गदुअ एदं अच्चरिअं वुत्तं भअवदीप्पहुदीणं [4]विण्णविस्सं । [ आर्ये, मुञ्च माम् । अहं गत्वेदमाश्चर्यवृत्तं भगवतीप्रभृतिभ्यः विज्ञापयिष्ये । ] ( इति निष्क्रान्ता )

( आकाशे )

प्रभुर्भवति कः कृती महिमपूरमस्याः परं
निरूपयितुमुज्ज्वलं जगति गोपवामभ्रुवः ।
मुनीन्द्रकुलदुर्लभा नवतडिद्विलासाद्य या

---

द्वयोस्तृतीयेति । मया च जलप्रवेशं कर्तव्यमित्यर्थः ।

मन्युना दैन्येन । 'मन्युर्दैन्ये क्रतौ क्रुधि' । तरसा वेगेन । उभे वृन्दामुखरे । व्यपदेशेन छलेन । गोवर्द्धने भृगुपातेन गोवर्द्धनाच्छरीरपातेन । शोकावेगाच्छादनं बाह्यैव स्वस्य [5]मरणाभावज्ञापनार्थं मनसि मरणनिश्चयात् ।

प्रभुरिति । अस्या गोपवामभ्रुवः श्रीराधायाः महिमपूरं महिमातिशयं को निरूपयितुं प्रभुः समर्थः । महिमपूरमाह—मुनीत्यादि । अद्य नवतडिद्विलासा या राधा वयस्यया सह मुनीन्द्रकुलदुर्लभां मिहिरमण्डलस्य सूर्यमण्डलस्य भिदां

---

१. ता उस्सं दोण्णां हं—अ० । २. भिउपउणेण—अ० । ३. अविदिस्स—अ० ।
४. विणइस्सं—अ० । ५. मरणाभावस्य ज्ञाप० अ० ।

भिदां सह वयस्यया मिहिरमण्डलस्याकरोत् ॥ ५५ ॥

वृन्दा—आर्ये, श्रूयतां राधिकाया सिद्धिरमीभिर्मेघान्तरितैः सिद्धैः श्लाघ्यते ।

मुखरा—( भूतले लुठन्ती ) हा हा णत्तिणि राहे, कहं गदासि ! [ हा हा नप्त्रि राधिके, कुत्र गतासि ! ]

वृन्दा—( सखेदम् )

अहह गहनमेतच्चिन्तयन्ती समन्तात्
कटुतरपुटपाकज्वालयैवाकुलास्मि ।
विपरिणतिमकाण्डे पुण्डरीकेक्षणस्ते
कथमिव भवितासौ शुश्रुवान् पङ्कजाक्षि ॥ ५६ ॥

( पुनराकाशे )

प्रणयमणि-करण्डिका मुरारेः
शिव शिव जीवितमेव राधिकायाः ।
इयमपि ललिता द्रुतं सखेदा
शिखरदती शिखराद् गिरेः पपात ॥ ५७ ॥

मुखरा—हा ! ललिदे, कहं परिच्चत्तासि । [ हा ! ललिते, कथं परित्यक्तासि । ] ( इत्युद्घूर्णयन्ती ) वुंदे, सोआणलज्जालाजणिदं [1]अत्ताणअं

---

भेदमकरोत् । स्कन्दपुराणराधातन्त्राद्युक्तयोः राधाया स्वरूपद्वयोर्मध्ये मूलभूता राधा सर्वैरलक्षिता प्रेममूर्च्छिता उद्धवयानकुरुक्षेत्रव्रतवत्स्यमानचरित्रा गोकुल एव तस्थौ । अंशभूता राधा यमुनया पितुः सूर्यस्य निकटे नीता । सूर्येण तां कन्यात्वेन स्वीकृत्य रक्षितेति पश्चाद् व्यक्तं भविष्यति ॥ ५५ ॥

सिद्धास्तु तत्र प्रस्थानसमये प्रकाशमानां दृष्ट्वा यथा प्रतीतिस्तथैवाहुः— 'हा नप्त्रि' इत्यादि ।

अहहेति । हे पङ्कजाक्षि राधे ते तवाकाण्डे विपरिणतिं दशां शुश्रुवान् पुण्डरीकेक्षणः कथमिव भविता भविष्यतीति । अस्माकं का गणना श्रीकृष्णसुखमात्रतात्पर्यकसर्वचेष्टितया भवत्या किं कृतं मम एतादृशीं चेष्टां श्रुत्वा श्रीकृष्णस्य का दशा भविष्यतीत्यपि न विचारितम् ॥ ५६ ॥

प्रणयेति । मुरारेः प्रणयरूपमणेः करण्डिका सम्पुटिका राधिकाया जीवितमेवेयं ललिता गिरेः शिखरात् पपात । शिखरदन्तीति—'पक्वदाडिमबीजाभं माणिक्यं शिखरं विदुः' इति लक्षितशिखरोक्तलक्षणानीव दन्ताः यस्याः ॥५७॥

माथुरलीलान्ते द्वारकालीलारम्भे नारदपौर्णमासीसंवादे व्रजसुन्दरीणां व्रज-

---

१. अत्ताणं—अ० ।

जउणाप्पवेसेण सीअलाएम्मि । [ वृन्दे, शोकानलज्वालाज्वलितमात्मानं यमुनाप्रवेशेन शीतलयामि । ] ( इत्यवतितीर्षति )

( पुनराकाशे )

'वृद्धे, साम्प्रतमिदमसाम्प्रतं मा कृथाः'

वृन्दा—आर्ये, रविमण्डलान्निस्सरन्ती वाणीयमनतिक्रमणीया ।

मुखरा—ता एदं वुत्तन्तं भअवदीए णिवेदइस्सं । [तदेतद्वृत्तान्तं भगवत्यै निवेदयिष्यामि । ]

---

भूमावेव स्थितिः विन्ध्याचलादिकन्यानां द्वारकागमनमिति । तद्यथा—

'नारदः—( चणं प्रणिधाय । स्वगतम् ) नन्वेताः पुरव्रजरमण्यः समानतरवा अपि विग्रहादिभिर्भिन्ना एव । यद्यपि व्रज एव ता व्रजरमण्यः प्रेममूर्च्छिता वर्तन्ते किन्तु योगमाययैव विप्रयोगेऽपि प्रियसङ्गसुखसङ्गमनाय तत्रैवाच्छाद्य पुररमणीपु स्वाभेदाभिमानेनावेशिता दीर्घस्वप्न इव । यास्तु उद्धवयानकुरुक्षेत्रयात्रयोर्वृत्तवत्स्यमानचरित्रास्ता खल्वष्टोत्तरैकशतषोडशसहस्रतस्तस्मादन्या एव तदलं तत्तद्रहस्योद्घाटनेन ।' इति ।

एवमेव ग्रन्थसमाप्तौ राधाकृष्णसंवादे एकानंशाह । तद्यथा—

'एकानंशा—सखि राधे, मात्र संशयं कृथाः । यतो भवत्यः श्रीमति गोकुले तत्रैव वर्तन्ते किन्तु मयैव कालक्षेपार्थमन्यथा प्रपञ्चितम् । तदेतन् मनस्यनुभूयताम् । कृष्णोऽप्येप तत्र गत एव प्रतीयताम् ।' इति ।

ग्रन्थस्य मध्येऽन्ते च ग्रन्थकर्तुः स्वाक्षरपुस्तके लिखनमिदं क्वापि क्वापि पुस्तके नास्ति । तत्र संशयभञ्जनार्थं सर्वपुस्तकस्थमेतदर्थसम्पादकं प्रथमाङ्के पौर्णमासीगार्गीसंवादे यथा—

'गार्गी—सुदं मए तादमुहादो जं...चंदभाणुप्पहुदीणां'''तस्स रहस्सस्स उट्टंकणेणेत्ति' ।

पञ्चमाद्यङ्कोक्तरीत्या विशाखाभिमानिन्या यमुनया सह राधिकाभिमानिनी विन्ध्याचलकन्या सूर्यलोकाद् द्वारकायामागत्य सत्यभामाख्या सती स्थास्यति । विशाखया सह वृषभानुकन्या राधिका तु योगमायाच्छादिता व्रजे तस्थौ । ललिता जाम्बवत्याख्यया द्वारकायां गता व्रजे तु यथास्थितैव ललिताख्यया तस्थौ । इति ।

असाम्प्रतमयोग्यम् । निर्व्याजमिति । देवस्य सूर्यस्य दिव्या गिरः कर्णयोः कुरु । देवस्य किम्भूतस्य—कमलिनीक्लान्तिच्छिदाधर्मिणः चक्रवाकस्त्रीणां प्रियेण सह सङ्गमे प्रतिभुवः । विशेषणाभ्यां विरहिणीदुःखहारित्वमुक्तम् । ते तव भूयः पुनरपि महानुद्धवः उत्सवो भविता भविष्यति ॥ ५८ ॥

( पुनरप्यम्बरे गम्भीरध्वनिः )

मुखरा—वच्छे, सुट्ठु ण सुव्वइ। केरिसी एसा दिव्वा वाणी ?
['वत्से, सुष्टु न श्रूयते। कीदृश्येषा वाणी ? ]

---

अत्र केचित् स्निग्धाः भक्ता पूर्वलिखितदिग्दर्शनादिना ग्रन्थस्यादिमध्याव- साने ग्रन्थतात्पर्यं विचारपूर्वकपर्यालोचनमकृत्वैव मुह्यन्ति। हा हन्त! कथमेवं वृत्तं कथं वा विज्ञचूडामणिना क्वापि शास्त्रेऽदृष्टा ईदृशी लीला प्रकटिता। तत्रोच्यते—अत्र खेदस्य को विषयः। प्रत्युतोचितमेव प्रेमवतीनामिदम्। खेदा- भावे कारणमाह। पूर्वलिखितलीलाऽनुसारेण श्रीकृष्णः गोपगोपीभिः[1] सह व्रज- भूमावप्रकटप्रकाशभावेन च सदा क्रीडत्येव। तथैवोक्तं श्रीशुकेन—'मथुरा भगवान् यत्र नित्यं सन्निहितो हरिः' इति। 'जयति जननिवास' इत्यादिना श्रीमद्भागवते। तन्त्रे च—'कृष्णोऽन्यो यदुसम्भूतो यस्तु गोपेन्द्रनन्दनः। वृन्दा- वनं परित्यज्य स क्वचिन्नैव गच्छतीति' इत्यादिप्रमाणैः श्रीकृष्णस्ताभिस्सह सदा [2]गोकुलेऽस्त्येव। तथा—'साधवो हृदयं मह्यं साधूनां हृदयन्त्वहम्। मदन्यं ते न जानन्ति नाहं तेभ्यो मनागपि।' इत्यादि भगवद्वाक्येन भगवद्हृदयतुल्या ये साधूनां हृदयास्तेषु स्फुटितं यद्भगवतो लीलाया नित्यत्वं शास्त्रयुक्त्या तदेव लिखितम्। एतद्ग्रन्थानुसारेण तु श्रीकृष्णः प्रकाशान्तरेण मथुरायां गतस्तस्यो- पनयनसमये पौर्णमासी यशोदाप्रभृतयः वात्सल्यादिप्रेमवत्यः सर्वाः मथुरायामेव गताः। सर्वाः प्रेयस्यस्तु प्रकाशभेदेन रुक्मिणीसत्यभामादिरूपेण श्रीकृष्णविषयका- नुरागवत्यो भूत्वा श्रीकृष्णमचिरात् प्राप्य सुखिन्यो भविष्यन्तीति। प्रेममूर्च्छिताः सत्यः चन्द्रभानुवृषभानुकन्यास्वरूपास्तु व्रजे तस्थुरिति खेदाभावो दर्शितः।

प्रेमवतीनामौचित्यमाह—प्रीतिलेशयुक्ताः पतिव्रता नार्यः प्रीतिलेशयुक्तं नश्वरं देहं त्यक्त्वा लोकान्तरगतं पतिमुद्दिश्याग्निप्रवेशादिना देहान् मुञ्चन्ति पतिलोके पतिं प्राप्नुवन्ति च। दुर्गादेवी तु स्वजनकेन दक्षेण स्वप्रियस्य शम्भो- र्यज्ञभागादिदूरकरणाद्यवज्ञां दृष्ट्वा स्वकलेवरं तत्याज पार्वतीरूपेण पुनस्तं प्राप च। सीतादेवी च श्रीरघुनाथेन लोकप्रवादभीत्या दत्तवनवासा पृथ्वीमध्ये निविष्टा बभूव। एतास्तु प्रेमवतीनां शिरोरत्नरूपाः। प्रेमरत्नाकरस्य [3]नखचन्द्रच्छटावि- निर्जिताखिलसौन्दर्यस्य निमेषकृतविरहासहिष्णुश्रीविग्रहस्य नित्यप्रियस्य स्वप्रेमा- स्पदस्य श्रीकृष्णस्य विरहेऽप्यासां यथास्थितरूपेण शरीरधारणं किमुचितं भवति नैवेत्यर्थः।

---

१. गोपस्त्रीभिः—अ०। २. गोकुले इत्येव···—अ०।
३. चन्द्रच्छविनिर्जिताखिल—अ०।

वृन्दा—

निर्व्याजं कुरु कर्णयोः कमलिनीक्लान्तिच्छिदा घर्मिणः
कोकस्त्रीप्रियसङ्गमप्रतिभुवो देवस्य दिव्या गिरः।

---

ननु क्वापि शास्त्रेऽस्फुटमिदं न श्रुतं तत्राह। रसशास्त्रे विरहिणीनां दश दशा भवन्ति तेषु दशमी दशैषा। दशमे च 'नो चेद्वयं विरहजाग्न्युपयुक्तदेहा ध्याने नयाम पदयोः पदवीं सखे ते।' इति यदुक्तं तत् कपटेनासत्यमेव भवेत् यदि तस्य विरहे तथा न कुर्यादतः शास्त्रोक्तमपीदमिति। किन्तु नित्यसिद्धानां तासां मरणसम्भावनैव न भवेत्। भक्तमात्रस्यैव मरणेच्छा मरणप्रायावस्था च भवेत्। तथा च भक्तिरसामृतसिन्धौ—

'अशिवत्वान्न घटते भक्ते कुत्राप्यसौ मृतिः।
क्षोभकत्वाद्वियोगस्य जातप्रायेति कथ्यते॥'

प्राचीनालङ्कारशास्त्रेऽपि

रसविच्छेदहेतुत्वान्मरणं नैव वर्ण्यते।
जातप्रायन्तु तद्वाच्यं चेतसाऽऽकांक्षितं तथा॥
[ वर्ण्यतेऽपि यदि प्रत्युज्जीवनं स्याददूरतः ]

( सा० दर्पण-परि० ३।१९३, १९४ )

एवं चेत्तदा श्रीमद्भागवते उद्धवेन सह संवादादिकं कुरुक्षेत्रे कृष्णेन सह मिलनादिकञ्च कथं सङ्गतं स्यात् तत्राह—पूर्वयुक्त्या प्रकाशभेदेनैव भवेदिति।

नन्वेकस्य यदि 'बहुस्वरूपेण स्थितिचेष्टयोर्बाहुल्यं[1] शास्त्रादौ दृश्यते तदा पूर्वलिखितं सुसङ्गतं भवति तत्रोच्यते। श्रीबलदेवस्य कृष्णसमीपे भ्रातृरूपेण पृथ्वीधारणभगवद्यशोवर्णनं पातालेऽनन्तरूपेण महावैकुण्ठे ब्रह्माण्डवर्तिवैकुण्ठे श्वेतद्वीपादौ च शय्यादिरूपेण सदा स्थितिरुक्तैव श्रीमद्भागवतादौ। एवं महा-वैकुण्ठनाथादेर्नानारूपेण स्थितिचेष्टादिकं सर्वशास्त्रप्रसिद्धम्।

श्रीकृष्णस्य तु एकेन वपुषा पृथग्गृहेषु द्व्यष्टसाहस्रं स्त्रीणामेक उदवहदित्या-दिना द्वारकायां बहुरूपेण नानाविधचेष्टादिकं नारदेन दृष्टम्। 'कृत्वा तावन्तमा-त्मानं यावतीर्गोपयोषितः' इत्यनेन रासेऽनन्तरूपेण क्रीडा दृष्टा। कारणार्णवशायि-गर्भोदकशायि-क्षीरोदकशायिकादिरूपेण नारायणस्यानन्त्यं सर्वनारायणसन्निधौ तावत्यो लक्ष्मीमूर्तयश्च नानारूपेण सन्ति।

देवी कृष्णमयी प्रोक्ता राधिका परदेवता।
सर्वलक्ष्मीमयी सर्वकान्तिः सम्मोहिनी परा॥

---

१. स्वरूपचेष्टयोर्बाहुल्यं—अ०

कालिन्दीजलमज्जनेन मुखरे मा साहसिक्यं कृथाः
भूयस्ते भविता प्रमोदसुधया पूर्णो महानुद्भवः ॥ ५८ ॥

( इति निष्क्रान्ते )

( इति निष्क्रान्ताः सर्वे )

इति उन्मत्तराधिको नाम तृतीयोऽङ्कः ।

---

इत्यत्र श्रीराधिकाया अपि लक्ष्म्याद्यनन्तरूपेण स्थितिरुक्ता । ततः श्रीकृष्ण-राधिकाया प्रकाशद्वयेन प्रेमरसास्वादने का विप्रतिपत्तिरिति । न चेन्मुक्ताचरित्र-ग्रन्थे द्वारकास्थसत्यभामादीनां तल्लीलायाः सचमत्कारश्रवणानन्तरं श्रीराधिका-दिमिलनार्थं व्रजगमननिश्चयं कथं वा सम्भवेत् । तथा च श्रीराधाकृष्णयोः प्रेमरस-निर्यासप्रकटनायावतीर्णेन भगवता श्रीकृष्णचैतन्यदेवेन दत्तवरस्यास्य कवि-मुकुटमणेः श्रीरूपगोस्वामिप्रभुपादस्य वाक्ये रसाभासगन्धोऽपि नास्तीति दिक् ।

इति तृतीयाङ्कव्याख्या ।



# चतुर्थोऽङ्कः

( ततः प्रविशत्युद्धवः )

उद्धवः—

अयं सर्वज्ञानां गुरुरपि भजत्यज्ञपदवीं
प्रभुष्णूनां चूडामणिरपि जडीभावमयते ।
सदा सान्द्रानन्दप्रकृतिरपि धत्ते विधुरतां
मुकुन्दः स्वीकुर्वन् प्रणयिनि जने प्रेमवशताम् ।। १ ।।

( पुरोऽवलोक्य ) कथमियमत्र गार्गी ( इत्युपसृत्य )आर्ये, प्रणमामि ।

( प्रविश्य गार्गी )

गार्गी—अमच्च, चिरं सिंचेहि भत्तिसुहाप्पवाहेण [1]पुहवीं । [ अमात्य, चिरं सिञ्च भक्तिसुधाप्रवाहेण पृथ्वीम् । ]

---

श्रीवृन्दावनीयलीलानुकरणादिकं वीक्ष्य श्रीकृष्णस्यापि चमत्कारपूर्वकस्वीयरूपमाधुर्यास्वादने महान् लोभो जायते । अन्येषां शुद्धचित्तानां का वार्तेति व्यञ्जयन् महाप्रभोः श्रीकृष्णचैतन्यदेवस्यावतारं सूचयन् चतुर्थाङ्कमारभते—तत इति ।

श्रीकृष्णो व्रजे यथेष्टं विहारं कृत्वा व्रजात् मथुरायां गतस्तत्रापि कियत्कालं [2]विहर्य तस्मादपि द्वारकायां गत्वा तस्थौ पुनर्व्रजे नागत इत्यनेन श्रीकृष्णस्य स्वपरिकरभक्तभिन्नेष्विव स्वीयपरिकरभक्तेष्वपि प्रेमशून्यत्वमासक्तिराहित्यमात्मारामत्वादिकं मत्वा तत्त्वानभिज्ञतया···युक्तान् कांश्चिद्भक्तान् ज्ञात्वा श्रीचैतन्यदेवप्रेरणया च ग्रन्थकर्ता शास्त्रादौ गुप्तमपि स्वपरिकरभक्तेषु विशेषतो व्रजपरिकरेषु प्रेमवश्यत्वासक्तिमत्त्वक्रीडापरत्वादिकं व्यक्तं कुर्वन्नादौ श्रीकृष्णस्य प्रेमवश्यत्वमाह—अयमिति । मुकुन्दः प्रणयिनि जने अनादित एव [3]प्रेमवशतां स्वीकुर्वन् सर्वज्ञानां गुरुरप्यज्ञपदवीं भजति इत्यादिना [4]एतादृशीं श्रीकृष्णप्रीतिं त्यक्त्वा योऽन्यत्राशक्तो भवेत्तस्मादन्यो मूढः कोऽपि नेति विज्ञापितम् ॥ १ ॥

'सिञ्च पृथ्वीम्' इत्यनेन भक्तिरसास्वादनदानादन्यो महानाशीर्वादो नित्यपरिकराणामपि नास्तीति बोद्धव्यम् । यदुराजः उग्रसेनः । व्रतबन्धमुपनयनं तस्य महोत्सवे ।

---

१. पहुवीं–अ० ।    २. विहृत्य ।
३. प्रेमवश्यतां–व० ।    ४. एतादृशश्रीकृष्णप्रीतिं–व० ।

उद्धवः—नूनं यदुराजाभिषेककौतुके तत्रभवत्या रोहिण्या सह गोकुलादत्र समायातमार्यया।

गार्गी—णहि णहि। किं तु [1]दोण्णं रामकण्हाणं [2]व्वदबंधमहूसवे आहूदाए गोउलेसरीए सद्धं समाअदं। [नहि नहि। किन्तु द्वयोः रामकृष्णयोर्व्रतबन्धमहोत्सवे आहूतया गोकुलेश्वर्या सार्द्धं समागतम्।]

उद्धवः—नालोकि लोकोत्तरदेवस्य रङ्गस्थलकेलिरार्यया।

गार्गी—केरिसी सा? कहिज्जउ कहिज्जउ। [कीदृशी सा? कथ्यतां कथ्यताम्।]

उद्धवः—श्रूयताम्।

कृष्णार्कः साधुचक्रोत्सवरभसकृती रक्तलोकः खलाली
खद्योतद्योतहारी कलितकुवलयापीडगम्भीरनिद्रः।
सल्लोल्कान् [3]विधुन्वन् यदुकुलकमलोल्लासकारी स तुङ्गे
रङ्गद्वारोदयाद्रौ दनुजनृपतमः सूदयन् प्रादुरासीत्॥ २॥

गार्गी—तदो तदो। [ततस्ततः]

उद्धवः—ततश्च।

द्विपरुधिरसदृशभोदबिन्दुच्छलघुसृणागुरुचन्दनैः परीतः।
[4]जरठदशनदण्डमण्डितांसो हरिरिह रङ्गधरान्तरे चुकूर्द॥ ३॥

---

कृष्णार्क इति। कृष्ण एवार्कः रङ्गद्वार एव उदयाद्रिस्तत्र दनुजनृपः कंस एव तमस्तं सूदयन् सूदयितुं प्रादुरासीत्। कीदृशः—साधव एव चक्रवाकास्तेषामुत्सवस्य रभसं वेगं कर्तुं शीलं यस्य। सूर्यपक्षे-स्पष्टम्। रक्ता अनुरक्ता लोका यस्मिन्। पक्षे लौहित्यकिरणैर्नीतो लोको भुवनं येन। कलिता कृता कुवलयापीडो हस्ती तस्य गम्भीरनिद्रा मरणं येन। पक्षे कृता कुवलयापीड उत्पलमाला तस्य गम्भीरनिद्रा मुद्रणं येन सः॥ २॥

द्विपेति। रुधिरसदृशमबिन्दुच्छलेन वर्णसादृश्यात् ये कुङ्कुमादयस्तैर्व्याप्तो हरिः रङ्गभूमौ चुकूर्द ननर्त। सिंहपक्षे हस्तिनो रुधिरव्याप्तस्य सिंहस्य कूर्दनं प्रसिद्धम्। जरठदशनः कुवलयापीडहस्तिनो प्राचीनः दन्तः एव दण्डः। पक्षे हस्तिसामान्यस्य दन्तस्तस्य दण्ड एव प्रहारस्तेन मण्डितोंऽसः स्कन्धोऽङ्गो वा यस्य सः। पक्षे रङ्गधरः पर्वतः॥ ३॥

---

१. दोण्हं—अ०। २. बंधमण्हस्सुवे—अ०।
३. विधन्वन्—अ०। ४. जठरदशनमण्डितांसो—अ०।

ततश्च तथाविधवेषो दशविधैरेष दशधान्वभाति ।
दैत्याचार्यास्तदास्ये विकृतिमरुणतां मल्लवर्याः सखायो
गण्डौन्नत्यं खलेशाः प्रलयमृषिगणाः ध्यानमुष्णास्रमम्बाः ।
रोमाञ्चं सांयुगीनाः कमपि नवचमत्कारमन्तः सुरेन्द्रा
लास्यं दासाः कटाक्षं ययुरसितदृशः प्रेक्ष्य रङ्गे मुकुन्दम् ॥ ४ ॥

ततश्च—

वरकेसरमालयाञ्चितश्चलचाणूरचमूरुमर्दनः ।
कुतुकोच्चलवीरदीधरत्यदुसिंहः खलु भोजकुञ्जरम् ॥ ५ ॥

गार्गी—दिट्ठिआ दिठ्ठंतं गदो साहुजणाणं महावुक्कसूलो । [ दिष्टया दिष्टान्तं गतः साधुजनानां महावक्षःशूलः । ] (इत्यानन्दमभिनीय) अमच्च, धण्णा पोण्णमासी जा कण्हस्स संगं[1] अमुंचंदी रंगकीलादिकोदूहलं

---

'मल्लानामशनि'रित्यादिना श्रीमद्भागवतोक्तं बहुविधाधिकारिषु एकदैव श्रीकृष्णस्य बहुप्रकारानुभवमयं यत् महामहैश्वर्यं तदेवाह—तथाविधवेष इत्यादिना श्लोक( पद्य )द्वयेन च । दैत्याचार्य इति—रङ्गे मुकुन्दं प्रेक्ष्य दैत्याचार्याः कंसपुरोहिताः तदा आस्ये विकृतिं ययुः । अत्र बीभत्सरसस्योदयात् रक्तमदिरादिवानयं श्रीकृष्णः बीभत्स एव । एवमग्रेऽप्यूह्यम् । मल्लवर्याः अरुणतामनेन रौद्रः । गण्डौन्नत्यमित्यनेन [2]हास्यम् । खलेशाः कंसादयः प्रलयं नष्टचेष्टतामिति भयानकः । ध्यानं शान्तिरिति शान्तः । अम्बा देवक्याद्याः सप्त उष्णास्रम् इति करुणः । सांयुगीनाः रणे साधवः रोमाञ्चमिति वीरः । कमपीति । सुरेन्द्राः चमत्कारमिति अद्भुतः । लास्यमिति प्रीतः कटाक्षमित्यनेन शृङ्गारश्च । अत्र क्रमेण बीभत्सरौद्रहास्यभयानकशान्तकरुणवीराद्भुतप्रीतशृङ्गारा इत्येतत्तद्दशविधरसस्वरूपेण तथाविधवेषः रक्तमदादिविन्दुयुक्त कृष्णः दशविधैर्जनैर्दैत्याचार्यादिभिरन्वभावीति पूर्वेणान्वयः । वर्णसंहारं नाम प्रतिमुखसन्धेरङ्गमिदम् । तथा च—'सर्ववर्णोपगमनं वर्णसंहार इष्यते ।' (ना० च० का० ७७) अत्र सर्ववर्णानां ब्राह्मणादीनां सङ्गमः । तथा हि दैत्याचार्यनारदादयो ब्राह्मणाः, क्षितीशसांयुगीनादयः क्षत्रियाः वल्लादासादयश्च शूद्रा इति वर्णसंहारः ॥ ४ ॥

वरकेसरेति । यदुसिंहः खलु भोजकुञ्जरं कंसमदीदरत् । सिंहपक्षे वरकेसरमालया श्रेष्ठलोमश्रेण्या । पक्षे केसरो बकुलस्तस्य दाम्नाऽञ्चितः युक्तः । चाणूरचमरुर्मृगविशेषः । पक्षे मल्लः ॥ ५ ॥

दिष्टान्तं मरणम् । प्रसङ्गात् पुत्रादेव जगद्गुरोः श्रीकृष्णस्य सान्दीपनिमुनिर्गुरुः बभूव ।

---

१. संगअमंमुंचंदी–अ० ।   २. हास्यसख्यौ–ब० ।

पेक्खइ ।[ अमात्य, धन्या पौर्णमासी या कृष्णस्य सङ्गमसुञ्चन्ती रङ्गक्रीडादि-कौतूहलं प्रेक्षते । ]

उद्धवः—किमेतदुच्यते । यस्याः प्रसङ्गादेव जगद्गुरोरपि गुरुर्बभूव सान्दीपनिः ।

गार्गी—( संस्कृतेन )

कामं सर्वाभीष्टकन्दं मुकुन्दं या निर्बन्धात् प्राहिणोदिन्धनाय ।
आचार्यानी सा करोति स्म पण्यं पण्याकार्थं हन्त चिन्तामणीन्द्रम् ॥६॥

उद्धवः—गार्गि, शिष्याचारप्रचारचातुरीयं चाणूरमर्दनस्य । तदत्र नापराध्यति गुरोः कलत्रम् ।

गार्गी—सुदं मए महुमंगलो कणंतणअरादो आअड्ढिअ उण हरिणा गुरुणो दक्खिणीकिदो । [ श्रुतं मया मधुमङ्गलः कृतान्तनगरादाकृष्य पुनः हरिणा गुरवे दक्षिणीकृतः । ]

उद्धवः—न केवलं गुरव एव दक्षिणीकृतः किन्तु केलिगुरवे स्वात्मनेऽपि । यदस्य सौभाग्यकुलं मया गोकुलेऽपि श्रुतम् ।

गार्गी—अवि णाम तत्थ भवंतेण गोउले गदं आसी ? [ अपि नाम तत्रभवता गोकुले गतमासीत् ? ]

उद्धवः—अथ किम् ।

गार्गी—किं कादुं ? [ किं कर्तुम् ? ]

---

काममिति । या आचार्यानी । अत्र णत्वं न । इन्धनाय काष्ठमानेतुं मुकुन्दं प्राहिणोत् सा पिण्याकार्थं चिन्तामणिं पण्यं मूल्यं करोति स्म । पिण्याकं खलीति प्रसिद्धम् । अत्र निदर्शनं नाम नाटकभूषणमिदम् । तथा च—

'यत्रार्थानां प्रसिद्धानां क्रियते परिकीर्तनम् ।
परोपेक्षाव्युदासार्थं तन्निदर्शनमुच्यते ॥' ( ना० चं० का० । १६२ )

अत्र बिम्बानुबिम्बवस्तुबोधनान्निदर्शनम् ॥ ६ ॥

केलिगुरवे स्वात्मनेऽपीति । स्वकेलिसिद्ध्यर्थं स्वस्मायानुकूलीकृतः । अस्य मधुमङ्गलस्य सौभाग्यसमूहं गोकुले श्रुतमिति । श्रीकृष्णस्य मथुरागमनानन्तरमेव । रासादिकं श्रीकृष्णस्य मथुरागमनात् पूर्वमेवेति गोकुले मधुमङ्गलस्य स्थितिः कथं सम्भवेदिति चेत् तत्रोच्यते । पौर्णमास्या सहागतेन मधुमङ्गलेन गोकुले लीलासहायं कृत्वा श्रीकृष्णे मथुरां गते तद्विरहात् पितृगेहे गतस्स समुद्रे मग्नोऽभूत् । श्रीकृष्णस्तमेव यमपुरादानीय गुरवे दक्षिणामदात् गुरुरपि श्रीकृष्णाय तमदादथवा श्रीकृष्णस्य पार्षदरूपो यः स सदा श्रीकृष्णसङ्ग एव वर्तते तस्यांशरूपो यस्तस्य समुद्रमग्नादिकं पूर्वोक्तयुक्त्या ज्ञेयम् ।

उद्धवः—देवीं चन्द्रावलीमानेतुम् ।

गार्गी—किंत्ति एसा णाणीदा ? [ किमित्येषा नानीता ? ]

उद्धवः—( सबाष्पम् ) रुक्मिणा गोकुलादियं पुनः कुण्डिने नीता ।

गार्गी—कुदो सुदा इमिणा गोउले चंदाअली ? [ कुतः श्रुतानेन गोकुले चन्द्रावली ? ]

उद्धवः—सख्युः शिशुपालस्य मुखात् ।

गार्गी—( स्वगतम्[1] ) सुदं मए तादमुहादो जं चंदहाणुप्पहुदीणं कण्णआ भिस्समप्पहुदीणं कण्णआए एक्कतत्ता वि विग्गहादीहिं भिण्णा ज्जेव्व त्ति । ता वाढमेक्कविग्गहदासंविहाणं माअआच्चेअ प्पवंचिदं । होदु । पच्चादो जाणिस्सं । किं दाणिं तस्स रहस्सस्स उट्टंकणेण । ( प्रकाशम् ) तिणा वि कुदो सुदा ? [ श्रुतं मया तातमुखतः यच्चन्द्रभानुप्रभृतीनां कन्यकाभीष्मकप्रभृतीनां कन्यकातो एकतत्त्वापि विग्रहादिभिर्भिन्ना एवेति तस्माद्बाढमेकविग्रहतासंविधानं माययैव प्रपञ्चितम् । भवतु । पश्चाद् ज्ञास्यामि । किमिदानीं तस्य रहस्यस्योट्टङ्कनेन । ( प्रकाशम् ) तेनापि कुतः श्रुता ? ]

उद्धवः—तत्रभवत्याः श्रुतश्रवसो मुखात् ।

गार्गी—सच्चं सच्चं सा खु बंधादो विमुक्कं भादरं आणअदुंदुहिं दठ्ठुं णाहिअरं आअदा आसी तदो मए च्चेअ अणहिण्णाए[2] गोउलगदं सव्वं रहस्सं तिस्सा सआसे प्पआसिदं । [ सत्यं सत्यं सा खलु बन्धाद्विमुक्तं भ्रातरमानकदुन्दुभिं द्रष्टुं पितृगृहमागताऽसीत्तदा मयैवानभिज्ञया गोकुलगतं सर्वं रहस्यं तस्याः सकाशे प्रकाशितम् । ]

उद्धवः—आर्य, किमत्र ते दूषणम् । मद्विधेषु विधिरेव प्रतिबन्धी ।

गार्गी—भिस्सणंदणे चंदाअलीं णेदुं पउत्ते कहं ण को वि पडिवंधी संवुत्तो ? [ भीष्मनन्दने चन्द्रावलीं नेतुं प्रवृत्ते कथं न कोऽपि प्रतिबन्धी संवृत्तः ? ]

उद्धवः—मथुरामास्थिते [3]चिरसबान्धवे गोकुलेन्द्रे हते च तोशलापरपर्याये गोवर्द्धने कोऽन्यः प्रतिबन्धीयात् !

---

श्रुतश्रवाः शिशुपालस्य माता तस्या मुखात् । सा श्रुतश्रवाः । तोशलनाममल्लस्यापरं नाम गोवर्द्धनमल्लस्तस्य स्वामी ।

---

१. स्वगतमित्यारभ्य प्रकाशमित्यन्तो भागः ब-पु० नास्ति ।

२. अणहिएणाए-अ० ।

३. चिरं बान्धवे-अ०; चिरं सबान्धवे-ब० ।

गार्गी—भो सोम्म पोमापहुदि कण्ण[1]आचदुक्कं कीस णाणीदं ?
[ भोः सौम्य, पद्माप्रभृति कन्यकाचतुष्कं कस्मान्नानीतम् ? ]

उद्धवः—

पद्मा नग्नजितः सुता नरपतेर्मद्रेशितुः श्यामला
भद्रा केकयचक्रमस्तकमणेः शैब्यस्य शैब्यास्तथा ।
ज्ञात्वा हन्त चिराच्चतुर्भिरभितो वीणाप्रवीणान्मुने
रेभिर्गोपपतिं प्रसाद्य विनयैः कन्यास्ततो निन्यिरे ॥ ७ ॥

गार्गी—कच्चाअणीव्वदपराणं गोउलकण्णाणं किं क्खु कुसलं ?
[ कात्यायनीव्रतपराणां गोकुलकन्यानां किं खलु कुशलम् ? ]

उद्धवः—( सबाष्पम् )

स्तवं कामाख्यायाः कमपि विदधन्ति द्युमणिजा-
तटान्ते सम्भूय ज्वरितहृदयानि क्लमभरैः ।
सहस्राण्युद्दण्डप्रकृतिरचिरं षोडश हठात्
कुमारीणां तासामहरत शताढ्यानि दनुजः ॥ ८ ॥

गार्गी—( सव्यथम् ) अवि णाम इदं वुत्तं तुम्ह प्पहुणा सुदं ? [ अपि नामेदं वृत्तं तव प्रभुना श्रुतम् ? ]

उद्धवः—श्रुतमेव किन्तु बाढमविशिष्टम् ।

गार्गी—केरिसं तं ? [ कीदृशं तत् ? ]

उद्धवः—अष्टाधिकशतोत्तरेषु षोडशसु कुमारीणां सहस्रेषु नैकापि गोष्ठमधितिष्ठतीति ।

गार्गी—को वा तस्स अवराणुसंधाणस्स ओसरो । जं राहीए ताए दारुणदसाए [2]णिव्वुदिलओ वि सुदुग्घडो । [ को वा तस्यानुसन्धानस्यावसरः यद्राधाया तया दारुणदशया निर्वृतिलवोऽपि सुदुर्घटः । ]

---

पद्मेति । मुनेर्नारदात् ज्ञात्वा गोपपतिं नन्दं विनयैः प्रसाद्य नग्नजिदादयो राजानः पद्मा श्यामला भद्रा शैब्या इति कन्याचतुष्कं निन्यिरे ॥ ७ ॥

स्तवमिति । उद्दण्डप्रकृतिः उद्दण्डा प्रकृतिर्यस्य स दनुजो नरकासुरस्तासां कुमारीणां शताढ्यानि षोडशसहस्राण्यहरत् । यमुनायास्तटान्ते सम्भूय मिलित्वा कामाख्याया कमपि स्तवं विदधन्ति । कीदृशानि—क्लमभरैर्ज्वरितहृदयानि ॥८॥

तव प्रभुणा कृष्णेन । तमविशिष्टम् । अविशेषमेवाह—अष्टाधिक इत्यादि । भगवत्या पौर्णमास्या । कीदृशः स उपायः । अपूर्वं रूपकं नाटकं भरतं मुनि-

---

1. कण्णआचउक्कं—अ० ।  2. णिव्वूदिलवो—अ० ।

उद्धवः—आर्ये, तथ्यमात्थ । तत एव बाढं व्यग्रया भगवत्या निर्मितोऽस्ति देवस्य कोऽपि मनोविनोदनोपायः ।

गार्गी—केरिसो सो ? [ कीदृशः सः ? ]

उद्धवः—सङ्गीतविद्यावेधसं भरतमभ्यर्च्य किञ्चिदपूर्वं रूपकं कारितम् । तच्च देवर्षितीर्थेन तुम्बुरुहस्ते प्रेषितम् । तुम्बुरुणा च गन्धर्वानिदमध्यापितम् ।

गार्गी—दाणिं के वा दिव्वपुरिसा तत्तहोदीए [1]पोण्णमासीए सद्धं आलवंदा मए दिट्ठा ता एदे गंधव्वा हुविस्संदि । [ इदानीं केऽपि दिव्यपुरुषा तत्रभवत्या पौर्णमास्या सार्द्धमालपन्तो मया दृष्टा तस्मादेते गन्धर्वाः भविष्यन्ति । ]

उद्धवः—अथ किम् । पश्यायं मधुमङ्गलेन सह नृत्यविलोकनार्थमरविन्दलोचनः [2]कुरुविन्दमन्दिरस्यालिन्दमधिरोहते ।

गार्गी—अहं गदुअ मुहरं पेसइस्सं । [ अहं गत्वा मुखरां प्रेषयिष्ये । ]

उद्धवः—अहमपि भगवत्या सह नटान् प्रवेशयिष्यामि । ( इति निष्क्रान्तौ )

विष्कम्भकः ।

( ततः प्रविशति यथानिर्दिष्टः कृष्णः )

कृष्णः—( सखेदम् )

हा लीलावति हा चकोरनयने हा चन्द्रबिम्बानने
हा बिम्बप्रतिमौष्ठि हा गुणवती गोष्ठीपुरोवर्तिनि ।
हा गोष्ठाखिलखञ्जरीटनयनामूर्द्धाभिषिक्ते कथं
हा राधे हतदैवदुर्विलसितैर्यातासि घोरां दशाम् ॥ ९ ॥

मधुमङ्गलः—पिअवअस्स, अदिदुल्लहदंसणा वि राहिआ विज्जमाणेव मे पडिभादि । [ प्रियवयस्य, अतिदुर्लभदर्शनापि राधिका विद्यमानेव मे प्रतिभाति । ]

---

मभ्यर्च्य कारितं तन्नाटकं देवर्षितीर्थेन नारदगुरुणा । तुम्बुरुः तुम्बुरुनामा मुनिः । तस्य हस्ते प्रेषितम् । कुरुविन्दस्य प्रवालस्यालिन्दमङ्गणम् ।

हा लीलावतीति । हा राधे घोरां दशां यातासि । राधे इत्यस्य विशेषणपदानि लीलावतीत्यादीनि । बिम्बफलस्य प्रतिमा ओष्ठे यस्याः । हे गुणवतीनामग्रगामिनि । हे गोष्ठाखिलसुन्दरीणां श्रेष्ठे ॥ ९ ॥

---

१. पोण्णमासीए–अ० । २. कुरुचिन्दमन्दिर–अ० ।

कृष्णः—सखे, सत्यमाशयैव कदर्थ्यमानोऽस्मि । यतः

नीरे मङ्क्षु सिमङ्क्षुमार्त्तमुखरामुद्दिश्य चण्डद्युते-
दूरान्मण्डलतः कृपातुरतया यत् प्रादुरासीत्तदा ।
हा धिग् वागमृतेन तेन जनितस्तस्याः पुनः सङ्गम-
प्रत्याशाङ्कुर उच्चकैर्मम सखे स्वान्तं हठाद्विध्यति ॥ १० ॥

( क्षणं तूष्णीं स्थित्वा पुनरुच्चकैः )

प्रयातुं श्वाफल्कौ धृततुरगवल्गे चटुलधी-
र्निरुद्धा साक्रन्दं रथमधिरुरुक्षुः परिजनैः ।
उदस्रं सा दृष्टिं मयि विकिरती क्रूरमनसा
विलम्ब्याल्पं हा धिक् सुतनुरनुनीतापि न मया ॥ ११ ॥

( ततः प्रविशति गन्धर्वैरनुगम्यमान उद्धवः पौर्णमासी मुखरा च )

उद्धवः—देव, समानीतः पेशलोऽयं दिव्यनर्तकसम्प्रदायः ।

कृष्णः—सूत्रधार, तूर्णमारभ्यतां तौर्यत्रिकम् ।

सूत्रधारः—निजमधुरिमसुद्राम्लापितेन्दीवरश्री-
र्जयति परमजैत्रः कोऽपि राधाकटाक्षः ।

---

नीरे इति । नीरे जले मङ्क्षु शीघ्रं सिमङ्क्षुं मज्जितुमिच्छन्तीमार्तमुखरामुद्दिश्य तदा चण्डद्युतेः सूर्यस्य मण्डलतः यद्वागमृतं प्रादुरासीत्तेन[1] वागमृतेन तस्या राधायाः सङ्गमप्रत्याशाङ्कुरः स्वान्तं विध्यतीति । स क्षणो मे कदा भविष्यति यत्र राधा मे दृष्टिगोचरा भवेत् । वागमृतञ्च—'हे मुखरे, श्रीराधा-वियोगेन देहं मा त्यज पुनरपि कृष्णेन सह राधाया मिलनं भविष्यती'त्यादि-रूपम् । तदा तव इतोऽप्युत्सवातिशयो भविष्यति ॥ १० ॥

प्रयातुमिति । मथुरां प्रयातुं श्वाफल्कावक्रूरे धृततुरगवल्गे धृताश्वमुखरज्जौ चटुलधीः सा राधा रथारोहणं कर्तुमिच्छुः परिजनैर्निरुद्धा सती उदश्रु यथा स्यात्तथा मयि दृष्टिं विकिरती विक्षिपती सा सुतनुः सुन्दरी क्रूरमनसा मया अल्पं स्वल्पकालमपि विलम्ब्य नानुनीता । अहो मे दौरात्म्यमिति । अनेन

'वज्रादपि कठोराणि मृदूनि कुसुमादपि ।
लोकोत्तराणां चेतांसि को हि विज्ञातुमर्हति ॥' ( उ० रा० च० ) इत्यपि

शास्त्रोक्तं प्रकटितम् ॥ ११ ॥

तौर्यत्रिकं नृत्यगीतवाद्यम् । निजमधुरिमेति । त्रिभुवनजयलक्ष्मीवर्यया पतिंवरया पतित्वेन दत्तं दाम माला यस्मै स त्रिभुवनजयी मधुरिपुरपि येन

---

१. रासीत्तेन तस्या—अ० ।

त्रिभुवनजयलक्ष्मीवर्यया दत्तदामा
मधुरिपुरपि येन क्रीडया निर्जितोऽभूत् ॥ १२ ॥

कृष्णः—( सहर्षम् ) साधीयानेष हृदयानन्दी नान्दीप्रयोगः ।

सूत्रधारः—( पार्श्वतो विलोक्य ) आर्ये, केनापि चारुसन्धिना प्रबन्धेन जगद्बन्धोरस्य समाराधनाय कुलाचार्येण स्वर्गतः प्रेषितोऽस्मि ।

नटी—( प्रविश्य ) अज्ज, को खु सो दाव पबन्धो ? [ आर्य, कः खलु स तावत् प्रबन्धः ? ]

सूत्रधारः—
रसिकशिरोमणिरमणः सुलभो गोकुलनिवासिनामेव ।
सन्दर्भो गुणगर्भः स जयति राधाभिसाराख्यः ॥ १३ ॥

तद् गीयतां मङ्गलध्रुवा ।

नटी—अज्ज, कं ओदुं ओलंबिअ गाइस्सं ? [ आर्य, कमृतुमवलम्ब्य गास्यामि ? ]

सूत्रधारः—आर्ये, पश्य पश्य ।

श्रीरेषा नवमालिकासु मिलति प्रोज्झ्याद्य[1] कुन्दावलीं
स्मर्तुं पञ्चमचातुरीं चिरपरित्यक्तां यतन्ते पिकाः ।
भाण्डीरात् परिपाण्डुराः स्फुटममी भ्रश्यन्ति यत्र च्छदाः
कालः कोऽप्ययमुज्ज्वलः स कुतुकी मन्दं परिस्पन्दते ॥ १४ ॥

---

राधाकटाक्षेण निर्जितोऽभूत् । सः परमजैत्र जयशीलः कोऽपि राधा-कटाक्षो जयति ॥ १२ ॥

साधीयान् श्रेष्ठः । नान्दीप्रयोग इति । नान्दीलक्षणमादौ लिखितम् । तत्र राधाकटाक्षरूपवस्तुनिर्देशोऽत्र नान्दी । चारुसन्धिर्यत्र तेन प्रबन्धेन । अस्य कृष्णस्य ।

रसिकेति । स राधाभिसाराख्यः सन्दर्भः प्रबन्धो जयति ॥ १३ ॥

श्रीरेषेति । सोऽयं कोऽप्युज्ज्वलः कालोऽत्र हिमवसन्तयोः सन्धिरूपः कुतुकी मन्दं परिस्पन्दते । यत्र काले श्रीः शोभा कुन्दावलीं त्यक्त्वा नवमालिकासु मिलति । कोकिलस्य स्वरः पञ्चमस्तस्य चातुरीं चिरपरित्यक्तां स्मर्तुं पिकाः यतन्ते । भाण्डीराद् वटात् छदाः पत्राणि भ्रश्यन्ति । इतः परं वसन्तरागेण गीयतामिति भावः ॥ १४ ॥

---

१. प्रोज्जाद्य—अ० ।

नटी—

इह झंपिदा वि परिदो समीलदाए फुडं कढ़ोराए।
महुवेण होहि लहुणा ण माहवी अलुलिदत्थवआ ॥ १५ ॥
[ इह आक्रान्तापि परितः शमीलतया स्फुटं कठोरया।
मधुपेन भवति लघुना न माधवी अलुलितस्तवका ॥ ]

सूत्रधारः—( सपरितोषम् ) आर्ये, साधु साधु। प्रस्तावोचितमेव तावदुपन्यस्तम्। तथा हि—

वृद्धया शश्वदारब्धनिरोधामपि राधिकाम्।
निराबाधं सदा साधु रमयत्येष माधवः ॥ १६ ॥

( इति निष्क्रान्तौ )

( ततः प्रविशति माधवः )

माधवः—

लक्ष्मीवानिह दक्षिणानिलसखः साक्षान्मधुर्मोदते
माद्यद्भृङ्गविहङ्गहारि विहसत्यत्रापि वृन्दावनम्।
राधा यद्यभिसारमत्र कुरुते सोऽयं महानेव मे
सान्द्रानन्दविलाससिन्धुलहरीहिल्लोलकोलाहलः ॥ १७ ॥

---

इह झंपिदा वीति। आक्रान्ताऽऽच्छादितापि परितः शमीलतया स्फुटं कठोरया मधुपेन भवति लघुना माधव्यलुलितस्तवका। कठोरया शमीलतया झम्पिता आक्रान्ता माधवी वासन्तीलता लघुना शीघ्रेण मधुपेनालुलितस्तवका न भवत्यपि तु लुलितस्तवका भवति। 'शमी शक्तुफला शिवे'त्यमरः। शमीलतास्थानीया वृद्धा माधवी राधा मधुपः कृष्णः।

वृद्धयेति। भारतीवृत्तेरङ्गमामुखं तस्याङ्गमिदं प्रयोगातिशयो नाम। तथा हि—

'एषोऽयमित्युपक्षेपात् सूत्रधारप्रयोगतः।
प्रवेशसूचनं यत्र प्रयोगातिशयो हि सः॥" (ना०चं०का० २५) इति॥१६॥

माधवः नटरूपः प्रविशति। लक्ष्मीवानिति। मधुर्वसन्तकालः साक्षान्मोदते। कीदृशः—लक्ष्मीवानित्यादि। अत्र मधौ वृन्दावनं विहसति। अत्र वृन्दावने राधा यद्यभिसारं कुरुते सोऽभिसारो महानेव मे मम सान्द्रानन्दस्य विलासो यत्र तस्य सिन्धोर्या लहरी तस्या हिल्लोलस्य चलनस्य कोलाहलः ममानन्दस्य परमावधिरूपः इत्यर्थः। विशेषणं नाम नाटकभूषणमिदम्। तथा च—'सिद्धान् बहून् प्रधानार्थानुक्त्वा यत्र प्रयुज्यते। विशेषयुक्तं वचनं विज्ञेयं तद्विशेषणम्।' (ना० चं० का०। १६६) अत्र प्रसिद्धार्थान् मधुवृन्दावनादीनुक्त्वा राधाभिसारस्य वैशिष्ट्याद् विशेषणम् इति॥ १७॥

मधुमङ्गलः—( विहस्य ) ही ! ही ! दासीएपुत्तएहिं सुरिंदपुरीभंडेहिं दुदिओ मे पिअवअस्सो पच्चक्खीकिदो । [ ही ! ही ! दास्यापुत्रैः सुरेन्द्रपुरीभण्डैर्द्वितीयो मे प्रियवयस्यः प्रत्यक्षीकृतः । ]

उद्धवः—( सचमत्कारम् )

नवमुरलिमरालीहारि-हस्तारविन्दः
कवलितकुरुविन्दच्छायगुञ्जाद्भुतश्रीः ।
मृदुलपवनचञ्चत्पिच्छचूडाञ्चलोऽयं
मदयति हृदयं मे श्यामिकानां विलासः ॥ १८ ॥

कृष्णः—( सौत्सुक्यं रोमाञ्चमुन्मील्य )

तदुद्गीर्णाद्भुतमाधुरीपरिमलस्याभीरलीलस्य मे
द्वैतं हन्त समक्षयन् मुहुरसौ चित्रीयते चारणः ।
चेतः केलिकुतूहलोत्तरलितं सद्यः सखे मामकं
यस्य प्रेक्ष्य सुरूपतां व्रजवधूसारूप्यमन्विष्यति[1] ॥ १९ ॥

---

दास्याः पुत्रैः नारदादिभिः । नवमुरलीति । अयं श्यामिकानां श्यामतानां विलासः मे हृदयं मदयति । इत्यनेन मथुरावासिनः कृष्णस्य साक्षाद्दर्शनादपि व्रजस्थकृष्णस्य वेषधारिणो नटस्य वर्णगतसौन्दर्यस्य चमत्कारानुभवेन स्वरूपगतभेदं कथयति । अयं कीदृशः—नवेत्यादिना 'वृन्दावनविलासिनश्चमत्कारिभूषामाह । कवलिता तिरस्कृता कुरुविन्दः प्रवालस्तस्य छाया कान्तिर्याभिस्ताहशगुञ्जाभिरद्भुता श्रीर्यस्य सः ॥ १८ ॥

श्रीकृष्णस्यौत्सुक्येन रोमाञ्चोद्गमात् तथा परश्लोके व्रजवधूसारूप्येच्छया च व्रजविलासिनः कृष्णस्य स्वरूपसौन्दर्यगतवैलक्षण्यमाख्याति—उद्गीर्णेति । असौ चारणो नर्तकः आभीरलीलस्य मम द्वैतं द्वितीयं रूपं समक्षयन् मुहुः चित्रीयते चित्रमिवाचरति । यस्य चारणस्य शोभनरूपतां प्रेक्ष्य मामकं चेतः सद्यो व्रजवधूनां समानरूपत्वमन्विष्यति । सत्यसङ्कल्पतया इच्छैषा श्रीकृष्णचैतन्यस्वरूपेण सिद्धिं गता । ममापि सचमत्कारचित्तक्षोभत्वादस्य चारणस्याद्भुतवेषधारित्वं व्रजसम्बन्धि मम स्वरूपवेषभूषादेः सर्वोत्कृष्टत्वं व्रजसुन्दरीषु मन्नामगुणलीलासौन्दर्यमाधुर्यरसास्वादपरमकाष्ठात्वञ्च ध्वनितम् । अभिप्रायो नाम नाटकभूषणमिदम् । तथा च—'अभिप्रायस्त्वभूतार्थो हृद्यः साम्येन कल्पितः । अभिप्रायं परेऽप्याहुर्ममतां हृद्यवस्तुनि ।" ( ना० चं का०।१६१ ) इति । अत्राभूतार्थरूपस्य ममवद् द्वितीयत्वस्य च नटे कल्पनमभिप्रायः, हृद्यवस्तुनि स्वसौन्दर्यभोगेच्छया ममता वेति ॥ १९ ॥

---

1. मन्विच्छति—ब० ।

तदद्य भवन्तं पृच्छामि। कथमनेनाविष्कृता ममापि मनोहारिणीयं सा कापि रूपचन्द्रिका।

उद्धवः—देव, भगवद्भक्तिप्रभावसम्भावितोऽयं देवर्षेरेव सेवापरिपाटी-विवर्त्तः।

कृष्णः—( साश्चर्यम् )

प्रपद्य नटतां नटन् किमयमस्मि रङ्गस्थले
सदस्यथ सदस्यतां किमुपलभ्य पश्यामि वा।
इति स्फुटविनिर्णये किमपि संविधानं पुरः
समीक्ष्य परमाद्भुतं निमिषमप्यहं न क्षमः॥ २०॥

माधवः—

मतिमघूर्णत सार्द्धमलिव्रजै-
र्धृतिरभून्मधुभिः सह विच्युता[1]।
व्यकसदुत्कलिका कलिकालिभिः
सममिह प्रियया वियुतस्य मे॥ २१॥

तदिदानीं वेणुगीतसंज्ञया ललितामभ्यर्थयिष्ये ( इत्यधरे वेणुं विन्यस्य )

---

सम्भावितो जनितोऽयं नारदस्यैव सेवेत्यादिना भगवद्भक्त्या भागवतस्य किमप्यशक्यं नास्तीति श्रीकृष्णोद्धवसंवादेन निर्द्धारितम्। एतदेव सचमत्कारं स्वयं श्रीकृष्ण एवाभिनन्दति—प्रपद्येति। रङ्गस्थले नटतां प्रपद्य नटन् सन् किमयमहमेवास्मि अहमेव नटरूपः सन्नटाम्यथवा सदसि सभायां सदस्यतां सभ्यतामुपलभ्य नटस्य नृत्यं पश्यामीति पुरोऽग्रे परमाद्भुतं किमप्यनिर्वचनीयं संविधानं रचनाविशेषं समीक्ष्य स्फुटविनिर्णये निमिषं कालमभिव्याप्याहमपि न क्षमः। कुतोऽन्य इति भावः। तेन भक्तकृतश्रीकृष्णलीलानुकरणादेः कृष्ण-कृतलीलादितोऽन्यूनता दर्शिता॥ २०॥

मतिमिति। प्रियया वियुतस्य मे मतिर्मधुव्रतैः सार्द्धमघूर्णत। कलिका-श्रेणिभिः सममुत्कलिकोत्कण्ठा व्यकसत्। पदोच्चयं नाम नाटकभूषणमिदम्। तथा च—'बहूनाञ्च प्रयुक्तानां पदानां बहुभिः पदैः। उच्चयः सदृशार्थो यः स विज्ञेयः पदोच्चयः॥' ( ना० चं० का०।१६७ )। अत्र मत्यादीनां घूर्णादिक्रि-यास्वलिव्रजादिभिः समावेशादयं पदोच्चयः॥ २१॥

---

1. विच्युताम्- अ०।

अक्ष्णोर्बन्धुं हरिहयहरिन्नागरि प्रागरिक्तां
रागेणाविष्कुरु गुरुरुचं मानवीयां नवीनाम् ।
चक्राभिख्यः किमपि विरहादाकुलः काकु लक्ष्यं
कुर्वन्मुख्यस्त्वयि सवयसामर्थिभावं तनोति ।। २२ ।।

कृष्णः—( सकौतुकम् ) किमशक्यं देवर्षिप्रसादस्य येनायमनन्यवेद्या-मपि मदन्तरीणचर्यां विवृणोति ।

माधवः—( सहर्षम् ) कथं नातिदूरे मनोहरिणहारिणी सैवेयं मञ्जु-मञ्जीरशिञ्जितकाकली । तदहं माधवीमण्डपं प्रविशामि ।

( इति निष्क्रान्तः )

( ततः प्रविशति ललितयानुगम्यमाना राधिका )

राधिका—( सौत्सुक्यं पुरो दृष्ट्वा ) हला ललिदे, पेक्ख पेक्ख । धण्णा एसा तरंगलेहा जा क्खु सेआलवल्लीणिअद्धपाअ णं हंसिअं मोआवेदि ता फुडं भिसिणीपत्तंतरिदेण कलहंसेन संघट्टइस्सदि । [ सखि ललिते,

---

ततस्तस्मादिदानीं राधिकामिलनार्थं वेणुगीतेत्यादि । अभ्यर्थनमाह—अक्ष्णोरिति । हे हरिहयहरिन्नागरि हरिहय इन्द्रस्तस्य हरिद्दिक् हे पूर्वदिङ्-नागरि पूर्वदिशः सम्बन्धिनि नागरि हे तथाविधे ललिते । योगपीठस्थितयोः राधाकृष्णयोः पूर्वदिग्वर्तित्वात् तद्रूपेण ललितायाः सम्बोधनं सङ्गतम् । सूर्योदये पूर्वदिगिव राधिकोदये ललिता संगतैव भवतीति[1] ज्ञापितम् । पक्षे—पूर्वा दिगेव नागरी प्राक् पुरतः रागेणारिक्तां पूर्णां नवीनां मानवीयां गुरुरुचं गुरुरुत्कृष्टा रुक् कान्तिर्यस्यास्तां राधामाविष्कुरु । पक्षे—सूर्यसम्बन्धिनीम् । सवयसां वयस्या-नाम् । पक्षे—सः वयसां पक्षिणां मुख्यः चक्राभिख्यः । 'अभिख्या नामशोभयो'-रित्यभिधानात् श्रीकृष्णश्चक्रवाकश्चाकुलः सन् काकुलक्ष्यं कुर्वन् अर्थिभावं तनोति । विलासं नाम प्रतिमुखसन्ध्यङ्गमिदम् । तथा च—'विलासः सङ्गमार्थश्च व्यापारः परिकीर्तितः ।' ( ना० चं० का०।६५ ) । अत्र माधवस्य राधासङ्गमार्थं व्यापार-कथनाद् विलासः ॥ २२ ॥

पुनरप्यभिनन्दयन्नाह—किमशक्यमित्यादि । कथं नातिदूरेऽपि तु सैव प्रसिद्धेयं काकली । सखि ललितेत्यादि । अत्र मनोरथं नाम नाटकभूषणमिदम् । तथा च—'मनोरथस्तु व्याजेन विवक्षितनिवेदनम्' ( ना० चं० का०।१७७ ) अत्र हंसीव्याजेन [2]राधायाः कृष्णसङ्गमाभिलापकथनं मनोरथः । बिसिनीपत्रान्त-रितेन पद्मपत्रावृतेन ।

---

१. भवतीत्यपि ज्ञापितम्–ब० । २. राधया–ब० ।

पश्य पश्य। धन्या एषा तरङ्गलेखा या खलु शैवालवल्लीनिबद्धपादामेनां हंसिकां मोचयति। तस्मात् स्फुटं बिसिनीपत्रान्तरितेन कलहंसेन सङ्घटयिष्यति। ]

ललिता—( स्मित्वा )
भो हंसि हंसवइणो पक्खवादेण च्चेअ उद्धुरा एसा।
तुमं [1]आकट्ठादि उम्मिआली ता वीसद्धा कंतं [2]अणुसरेहि ॥ २३ ॥
[ भो हंसि, हंसपतेः पक्षपातेन उद्धुरा एषा।
त्वामाकर्षति उर्म्याली तद्विश्रब्धा कान्तमनुसर ॥ ]

कृष्णः—( सोत्कण्ठम् )
उच्चैरभूदननुभूतचरी दशा मे
यस्याश्चिरेण विरहज्वरजर्जरस्य।
सा हन्त सेयमियमामियमाविरासीन्
मच्चित्तहंससरसी सरसीरुहाक्षी ॥ २४ ॥
( इति सिंहासनादुत्थाय भुजाभ्यां ग्रहीतुं परिक्रामति )

उद्धवः—देव, नाट्यप्रणीतोऽयमर्थः।

कृष्णः—( सधैर्यं लज्जामभिनीय )
सा वक्त्रश्रीर्विरमितशरच्चन्द्रनान्दीस्तवासौ
सेयं दृष्टिर्मदकलमृगीमृग्यमाधुर्यकेलिः।
सा भ्रूरेखा रतिपतिधनुर्विभ्रमाभ्यासगुर्वी
गन्धर्वी मे क्षपयति धृतिं हन्त गान्धर्विकेव ॥ २५ ॥

---

भो हंसीति। भो हंसि हंसश्रेष्ठस्य पक्षवातेन पक्षे कृष्णस्य पक्षपातेनैवोद्धुरैषा त्वां कर्षति ऊर्म्याली तस्माद् विश्रब्धा सती कान्तमनुसर ॥ २३ ॥

उच्चैरिति। चिरेण चिरकालं व्याप्य यस्या विरहजर्जरस्य मेऽननुभूतचरी नानुभूतपूर्वा दशा अभूत्। आं स्मरणे। ज्ञातमित्यर्थः। हन्त हर्षे। सा सेयम् इयमियमाविरासीत्। हर्षौत्सुक्यादिवेगेन सेति शब्दस्येयमिति शब्दस्य च [3]पौनःपुन्यम् ॥ २४ ॥

सेति। गान्धर्विका राधिकेव गन्धर्वी मे धृतिं क्षपयति। तुल्यतामाह—सेति। सा वक्त्रश्रीः। कीदृशी—विरमितः नाशितः शरच्चन्द्रस्य नान्दीस्तवो मङ्गलस्तुतिर्यया सा। मदेनोत्कटाः याः मृग्यस्ताभिः मृग्योऽन्वेषणीयः माधुर्यकेलिर्यस्याः सा इयं दृष्टिः। 'मदोत्कटो मदकलः' इत्यमरः। कन्दर्पधनुषो विलासाभ्यासे गुरुरूपा भ्रूरेखा ॥ २५ ॥

---

१. ओकट्टदि—अ०। २. अणुसर—ब०।
३. पौनरुक्त्यम्—अ०।

मुखरा—हा णत्तिणि राहिए, जीअसि। [ हा नप्त्रि राधिके, जीवसि।
( इति धावति )।

पौर्णमासी—( पटाञ्चले धृत्वा ) सौहृदान्धे, गान्धर्वमिदं गन्धर्वाणाम्।

मुखरा—( सास्रम् ) भअवदि, सूरमंडलं भेत्तूण लोअंतरं गदा राही सग्गालएहिं गंधव्वेहिं आणीदेत्ति तक्केमि। [ भगवति, सूर्यमण्डलं भित्त्वा लोकान्तरं गता राधा स्वर्गालयैर्गन्धर्वैरानीतेति तर्कयामि। ]

राधिका—हला ललिदे, पुप्फाहरणकोदूहलस्स[1] णिअदादो तुए आणिज्जन्ती अहं अवि णाम अज्जाए मुहलाए दिट्ठम्हि। [ सखि ललिते, पुष्पाहरणकौतूहलाय निकेतनात् त्वया नीयमानाऽहमपि नाम आर्यया मुखरया दृष्टास्मि। ]

ललिता—ण केअलं अज्जाए मुहराए जडिलाए वि। [ न केवलमार्यया मुखरया जटिलयापि। ]

मुखरा—( सबाष्पगद्गदम् ) हा वच्छे, सच्चं दारुणीए मए जालिदासि। [ हा वत्से ! सत्यं मया दारुणया ज्वालितासि। ]

मधुमङ्गलः—( सरोषम् ) रक्खसि बुड्ढिए, दाणिं मा क्खु अलिअं पेम्मं पअडेहि। जा क्खु घरावंतवाडिआपेरन्तं च्चेअ णं दट्ठूण कक्कुरीव भुक्कसि। [ राक्षसि वृद्धे, इदानीं मा खल्वलीकं प्रेम प्रकटय। यया खलु गृहोपान्तवाटिकापर्यन्त एव मां दृष्ट्वा कुक्कुरीव शब्दायसे। ]

मुखरा—अज्ज महुमंगल, किं करिस्सं अप्पकासिदरहस्साए वंचिदम्हि भअवदीए। [ आर्य मधुमङ्गल, किं करिष्येऽप्रकाशितरहस्यया वञ्चितास्मि भगवत्या। ]

राधिका—हला, जइ दिट्ठह्मि। तदो उवाअं[2]वाहरेहि। [ सखि, यदि दृष्टास्मि। तदोपायं व्याहर। ]

ललिता—हंत मंथरे, [3]पंथरं परिहरिअ कलंबसंगडेण कालिंदीतीरमग्गेण तुरिअं गच्छह्म। [ हन्त मन्थरे, प्रान्तरं परिहार्य कदम्बसङ्कटेन कालिन्दीतीरमार्गेण त्वरितं गच्छामः। ] ( इत्युभे परिक्रामतः )

राधिका—सहि, पिसुणेहिं णेउरेहिं किंत्ति संगमिदह्मि। [ सखि, पिशुनैः नूपुरैः किमिति सङ्गमितास्मि। ]

ललिता—विदक्कसीलाए जडिलाए बुढ्ढिं मोहेदुं। [ वितर्कशीलाया जटिलायाः बुद्धिं मोहयितुम्। ]

---

गान्धर्वं नाट्यम्। व्याहर वद। हे मन्थरे मन्दगामिनि। प्रान्तरं पन्थानम्।

---

१. कोदूहलस्स णिएदाहो—अ०। २. वाहरेदि—अ०। ३. पंथरे—अ०।

( प्रविश्य जटिला )

जटिला—( पुरः पश्यन्ती ) कहं दिट्ठिपहम्मि ण लक्खिज्जइ वरिसहाणइ ता कहिं णं मग्गिस्सं। [ कथं दृष्टिपथे न लक्ष्यते वार्षभानवी तस्मात् कुत्रैनां मार्गयिष्यामि । ] ( भुवस्तलमवलोक्य । सहर्षम् ) इमाए वहूए पदाइं दीसन्ति जं कुंडलाइदीए सोहग्गमुद्दाए अंकिदाइं। ता इमिणा मग्गेण मग्गिस्सं [ इमानि वध्वः पदानि दृश्यन्ते यत् कुण्डलाकृत्या सौभाग्यमुद्रयाऽङ्कितानि । तस्मादनेन मार्गेण मार्गयिष्यामि । ]

राधिका—हला, अज्ज मए अउरुव्वं किम्मि सिविणे अणुहूदं। [सखि, अद्य मयाऽपूर्वं किमपि स्वप्नेऽनुभूतम् । ]

ललिता—सहि, किं तं ? [ सखि, किन्तत् ? ]

राधिका—लवंगकुडंगे पुप्फं आहरंती तुमं वुंदावणवासिणा मद्कलहिंदेण आअदुअ हत्थेण ग्गहिदहत्थासि संवुत्ता। तदो संभमेण घुंमंतीए तुह हत्थेण उट्टपल्लअं डसंतेण तिणा वामे त्थवअम्मि फुरंततीक्खकामंकुसं करपुक्खरं [ लवङ्गकुञ्जे पुष्पमाहरन्ती त्वं वृन्दावनवासिना मत्तकलभेन्द्रेणागत्य हस्तेन गृहीतहस्तासि संवृत्ता । तदा सम्भ्रमेण घूर्णन्त्या तव हस्तेनोष्ट्रपल्लवं दशता तेन वामे स्तवके स्फुरत्तीक्ष्णकामाङ्कुशं करपल्लवम् ] ( इत्यर्धोक्ते [1]सरोमाञ्चमानम्रमुखी भवति )

ललिता—( स्मित्वा ) अइ सरले, तुज्झ हिअए कत्थूरिआपत्तभंगं लिहंतीए मए पच्चक्खीकिद सिविणसंगिणाअरकुंजरबिब्भासि। ता फुडं कधेहि तइणजणसंगअजोग्गे तस्सिं ओसरे दीहसुत्ता णीवीसहअरी झत्ति णिक्कंता ण वेत्ति। [ अयि सरले, तव हृदये कस्तूरिकापत्रभङ्गं लिखन्त्या मया प्रत्यक्षीकृतस्वप्नसङ्गिनागरकुञ्जरविभ्रमासि । तस्मात् स्फुटं कथय तृतीयजनसङ्गायोग्ये तस्मिन्नवसरे दीर्घसूत्रा नीवीसहचरी झटिति निष्क्रान्ता न वेति । ]

---

बुद्धिं मोहयितुमिति । अन्यथा नूपुरे गृहमध्ये तया दृष्टे सति तवाभिसारशङ्का भवति ।

कलभेन्द्रेण हस्तिश्रेष्ठेन । वामे स्तवके स्तने इति लज्जया नोक्तम् । अत्रानुक्तसिद्धिर्नाम नाटकभूषणमिदम् । तथा च—'प्रस्तावेनैव शेषार्थो यत्रानुक्तोऽपि बुद्ध्यते । अनुक्तसिद्धिरेषा स्यादित्याह भरतो मुनिः ॥' ( ना० चं० का० । १७८ ) अनुक्तस्यापि स्तनेन नखार्पणार्थस्य बोधनादनुक्तसिद्धिः ।

निष्क्रान्ता न वेति । अत्र नर्मद्युतिर्नाम प्रतिमुखसन्ध्यङ्गमिदम् । तथा च

---

१. सरोमाञ्चं नम्रमुखी—अ०, सरोमाञ्चमानतमुखीति नाटकचन्द्रिकायां पाठः ।

राधिका—( स्वगतम् ) कधं तक्किदं अत्थि धुत्ताए ( प्रकाशम् । सभ्रूभङ्गम् ) वामे, क्कित्ति अलिअं आसंकसि ? । [ कथं तर्कितमस्ति धूर्त्तया । ( प्रकाशम् । सभ्रूभङ्गम् ) वामे, किमित्यलीकमाशङ्कसे ? ]

जटिला—णूणं णूउरसद्देण आअट्टिदा एदे हंसा हंसणंदिणीजलादो वणे धाअंति ता वहूडिआ णादिदूरे हुविस्सदि । [ नूनं नूपुरशब्देनाकृष्टा एते हंसा हंसनन्दिनीजलाद्वने धावन्ति । तस्माद्वधूटिका नातिदूरे भविष्यति । ]

उद्धवः—अहो ! जरतीनामपि बुद्धिकौशलम् ।

ललिता—( स्वगतम् ) पुरदो माहवीमंडवे माहवेण होदव्वं । [ पुरतो माधवीमण्डपे माधवेन भवितव्यम् । ]

( ततः प्रविशति वृन्दयानुगम्यमानो माधवः )

माधवः—( समन्तादवलोक्य )

हेतुर्मे हृदयोत्सवस्य विविधः कामं क्रमाद्वर्त्ततां
प्राप्नोत्यस्य तुलाधिरोहपदवीं राधाभिसारस्य कः ।
यस्मिन्नल्पतरं मनोरथतटीसीमामपि प्रापिते
सान्द्रानन्दमयी भवत्यनुपमा सद्यो जगद्विस्मृतिः ।। २६ ।।

कृष्णः—( पौर्णमासीमवेक्ष्य ) हन्त वत्सले गुरोरपि गुर्वि, त्वमेव सर्वदा मां विनोदयितुं कोविदासि यदद्य नाट्यकलाच्छलेन दुर्लभे तत्र गोकुलविलासे पुनः प्रवेशितोऽस्मि ।

राधिका—( माधवमवलोक्य । सानन्दमात्मगतम् ) भो भअवं आणंद पज्जण्ण, ण खु रुंधीअदु जलासारेण । उक्कंठिदा तवस्सिणी मे दिट्ठि-चओरी क्खणं पिवेदु एसा दुल्लहं इमस्स मुहचंदस्स जोण्हं । ( प्रकाशम् ।

---

'नर्मजाता द्युतिः प्राज्ञैर्नर्मद्युतिरुदीरिता ।' ( ना० चं० का०। ७० ) अत्रापि सरले इत्यादि ललिताया नर्मजातया राधाया रुच्या द्युत्या वा नर्मद्युतिः ।

हंसनन्दिनी यमुना तस्याः जलात् । भविष्यतीति । अत्र तुल्यतर्को नाम नाटकभूषणस्य मतान्तरे उदाहरणमेतत् । तथा च—'कश्चित्तु–तुल्यतर्को यदर्थेन तर्कः प्रकृतगामिना ।' ( सा० दर्प० ६।१८० ) इत्याह । अत्र नूपुरशब्देन हंसाकर्षणात् राधायाः स्थितिः तुल्यतर्कः ।

पुरतो माधवीमनु भवितव्यम् । हेतुरिति । मे हृदयोत्सवस्य हेतुर्विविधो वर्त्तताम् । राधाभिसारस्य तुल्यं कः प्राप्नोति न कोऽपीत्याह । राधाभिसारेऽल्पतरं यथा स्यात्तथा मनोरथतटीसीमामपि प्रापिते जगद्विस्मृतिर्भवति ॥ २६ ॥

हे वत्सले मयि वात्सल्ययुक्ते । हे गुरोः सान्दीपनिमुनेः गुर्वि गुरुरूपे । तस्याः मातृत्वात् । आनन्दपर्जन्येति । अत्र शोभा नाम नाटकभूषणमिदम् ।

भ्रुवौ विभुज्य ) ललिदिए, जुत्तं एदं जं सरलाहं वंचिदह्मि । [ भो भगवन्नानन्दपर्जन्य, न खलु रुध्यतां जलासारेण । उत्कण्ठिता तपस्विनी मे दृष्टिचकोरी क्षणं पिबत्वेषा दुर्लभां सुखचन्द्रस्य ज्योत्स्नाम् । ( प्रकाशम् । भ्रुवौ विभुज्य ) ललिते, युक्तमिदं यत्सरलाऽहं वञ्चितास्मि । ( इति नासया थूं थूं कुर्वती सलीलं रोदिति ) ]

ललिता—हला, किन्ति मं उवालहेसि । देव्वसंघट्टिदं क्खु । एदं किं करिस्सं ! [ सखि, किमिति मामुपालभसे । दैवसङ्घट्टितमिदं खलु । अत्र किं करिष्ये ! ]

माधवः—( राधामवेक्ष्य । सहर्षम् )

धावत्याक्रमितुं मुहुः श्रवणयोः सीमानमक्ष्णोर्द्वयी
पौष्कल्यं हरतः कुचौ वलिगुणैराबध्य मध्यं ततः ।
मुष्णीतश्चलतां भ्रुवौ चरणयोरुद्यद्धनुर्विभ्रमे
राधायास्तनुपत्तने नरपतौ बाल्याभिधे शीर्यति ॥ २७ ॥

ललिता—( संस्कृतेन )

जङ्घाधस्तटसङ्गि-दक्षिणपदं किञ्चिद्विभुग्नत्रिकं
साचिस्तम्भितकन्धरं सखि तिरस्सञ्चारि नेत्राञ्चलम् ।
वंशीं कुड्मलिते दधानमधरे लोलाङ्गुलीसङ्गतां
रिङ्गद्भ्रूभ्रमरं वराङ्गि परमानन्दं पुरः स्वीकुरु ॥ २८ ॥

---

तथा च—'शोभा स्वभावप्राकट्यं यूनोरन्योन्यमुच्यते ।' (ना० चं० का० । २५८) अत्र 'भगवन्नानन्दपर्जन्ये'त्यादि राधावाक्येन 'धावत्याक्रमितुं मुहुः' ( ल० मा० ४।२७ ) इति माधववाक्येन च परस्परभावप्राकट्यात् शोभा ।

धावत्येति । राधायास्तनुरूपपत्तने देशे बाल्याभिधे नरपतौ राज्ञि शीर्यति सति बाल्ये गते सति राज्ये च गते सति तस्य वस्तूनि लुण्ठन्ति । तदेवाह—अक्ष्णोर्द्वयी श्रवणयोः सीमानमाक्रमयितुं धावति । प्रकृतौ कैशोरारम्भे नेत्रयोश्चाञ्चल्यं दीर्घता च भवति । त्रिवलिरूपगुणैर्मध्यमाबध्य ततो मध्यात् पौष्कल्यं पुष्टत्वं कुचौ हरतः । तेन मध्यं क्षीणं जातं कुचौ पुष्टौ भवतः । चरणयोश्चञ्चलतां भ्रुवौ मुष्णीतः । मुष् स्तेये धातुः । अनेन मन्दगामित्वं भ्रुवोश्चाञ्चल्यम् ॥ २७ ॥

जङ्घेति । पुरोऽग्रे परमानन्दं स्वीकुरु । कीदृशम्—जङ्घाया अधस्तटस्य सङ्गि दक्षिणपदं यस्य तम् । किञ्चिद्विभुग्नत्रिकम् । पृष्ठवंशधरे त्रिकमित्यभिधानात् मध्यमित्यर्थः । साचि वक्रं स्तम्भितञ्च कन्धरं यस्य । तिरस्सञ्चारि वक्रगामि नेत्राञ्चलं यस्य । लोलाङ्गुलीसङ्गतां वंशीं कुड्मलितेऽधरे दधानम् । विभुग्नत्रिकादिना विशेषतः परमसुन्दरं श्रीकृष्णमेव विशेषणैरुपस्थापयति ॥ २८ ॥

जटिला—( सानन्दम् ) एसा डाहिणे वारिसहाणवी। ( इत्युपसृत्य ) अयि अहिसारमग्गोवज्झाइणि ललिदे एण्हिं पुत्तओ मे अहिमण्णु विदूरे गदो त्थि। ता सुण्णघरं मुक्किय कीस तुए आणीदा एत्थ [1]बहुडी? [ एषा दक्षिणे वार्षभानवी। ( इत्युपसृत्य ) अयि अभिसारमार्गोपाध्यायिनि ललिते, इदानीं पुत्रो मेऽभिमन्युर्दूरे गतोऽस्ति। तस्मात् शून्यगृहं त्यक्त्वा कस्मात् त्वयाऽऽनीताऽत्र वधूटी? ]

ललिता—( सशङ्कमात्मगतम् ) हद्धी हद्धी डाइणीए अदाहिणप्पइदीए [2]दिठ्ठह्मि वुड्ढिआए। ( प्रकाशम् ) अज्जे, गग्गीए [3]भणिदं। अज्ज माहवी [4]पुप्फेहिं पूइदो सूरो सुरहिक्कोडिप्पदो होदित्ति माहवीमंडवं लंहिदा [5]एसा राही। ता प्पसीद। [ हा धिक् हा धिक्। डाकिन्याऽदक्षिणप्रकृत्या दृष्टास्मि वृद्धया। ( प्रकाशम् ) [ आर्ये गार्ग्या भणितम्। अद्य माधवीपुष्पैः पूजितः सूर्यः सुरभिकोटिप्रदो भवतीति माधवीमण्डपं लम्भितैषा राधिका। तत्प्रसीद। ]

जटिला—( अपवार्य। सालीकस्नेहम् ) अइ वच्छे, सदा मं पलोहिअ ललिदा अहिसारेदित्ति मह पुत्तस्स पुरदो बहूडिआ अलिअं ज्जेअ-दूसेदि। ता किन्ति लाहवं सहेसि। [ अयि वत्से, सदा मां प्रलोभ्य ललिताभिसारयतीति मम पुत्रस्य पुरतो वधूटिका अलीकमेव त्वां दूषयति। तत् किमिति लाघवं सहसि। ]

ललिता—( स्वगतम् ) अम्महे जडिलाए कोडिल्लं। [ अहो जटिलायाः कौटिल्यम्! ]

माधवः—( स्वगतम् )

यत्रासङ्गो मनसः स्फुरति गरीयान् गरीयसोऽप्युच्चैः।

---

प्रसीदेत्यादि। अत्र पर्युपासनं नाम प्रतिमुखसन्ध्यङ्गमिदम्। तथा च—'रुष्टस्यानुनयो धीरैः पर्युपासनमीरितम्।' ( ना० चं० का०। ७३ ) अत्र रुष्टाया जटिलाया ललितयानुनयात् पर्युपासनम्। कौटिल्येन सम्बोध्याह—अयि वत्से इति। अत्र भेदो नाम सन्ध्यन्तरमिदम्। तथा च—'भेदस्तु कपटालापैः सुहृदां भेदकल्पना।' ( ना० चं० का०। १२१ ) अत्र जटिलया कपटेन ललिताया भेदः कल्पितः।

यत्रेति। गरीयसोऽपि जनस्य यत्र वस्तुनि गरीयान् मनसः सङ्गः स्फुरति

---

१. बहुदी—अ०। २. दीठह्मि—अ०। ३. वण्णिदं—व०। ४. पप्फुएहिं—अ०। ५. मए—व०।

नियतो वस्तुनि विघ्नस्तस्मिन्निति नानृतो वादः ॥ २९ ॥

( इति दृगन्तेन राधां पश्यन्नुपसर्पति )

जटिला—( नासिकाग्रे तर्जनीं विन्यस्य शिरो धुन्वन्ती साश्चर्यम् ) अले बालिआभुअंगा, कं डंसिदुं एत्थ भम्मेसि ? [ अरे बालिकाभुजङ्ग, कं दष्टु-मत्र भ्रमसि ? ]

माधवः—लम्बोष्ठि, भवतीमेव गोष्ठपिशाचीम् ।

( उद्धवः स्मितं करोति )

कृष्णः—

गोकुलकुलजरतीनां परुषा वागपि यथा [1]प्रमोदयति ।
स्तुतिरपि महामुनीनां मधुरपदा मां सखे न तथा ॥ ३० ॥

वृन्दा—वृद्धे, धर्मचकोरजीवातुचरितामृतचन्द्रिकेऽपि कृष्णचन्द्रेऽपि कथं प्रतीपं भुजङ्गभावमर्पयसि ?

जटिला—( सोल्लुण्ठं संस्कृतेन )

व्रजेश्वरसुतस्य कः परवधूविनोदक्रिया-
प्रशस्तिभरभूषितं गुणमवैति नास्य क्षितौ ।
यदेष रतितस्करः पथि निरुध्य साध्वीर्बलात्
तदीयकुचकुड्मले करजमों नमो विष्णवे ॥ ३१ ॥

राधिका—( स्वगतम् ) हा ! हा ! हददेव्व, किं दे अवराद्धा राही ! [ हा ! हा ! हतदैव, किन्तेऽपराध्या राधिका ! ]

---

तस्मिन् विघ्नो नियतः सदा भवतीति वादो नानृतः । सत्यमिति भावः ॥ २९ ॥

अरे इति । अत्र नर्म नाम प्रतिमुखसन्ध्यङ्गमिदम् । तथा च—'परिहास-प्रधानं यद्वचनं नर्म तद्विदुः ।' ( ना० चं० का०। ६९ ) अत्र प्रकटमेव नर्म ।

गोकुलेति । परुषा वाग् यथा प्रमोदयति मधुरपदा स्तुतिर्न तथेत्यनेन गोकुलसम्बन्धिवस्तुमात्रस्यैव श्रीकृष्णस्य परमप्रीतिजनकत्वं कथितं कैमुतिकन्या-येन स्वयमेव ॥ ३० ॥

धर्मरूपचकोरस्य जीवातु जीवनं चरितमेवामृतमयी चन्द्रिका यस्य तस्मिन् प्रतीपमधर्माचरणरूपं भुजङ्गभावम् । व्रजेश्वरेति । अस्य व्रजेश्वरसुतस्य गुणं को नावैति । गुणं कीदृशम्—पथीत्यादि । करजमिति । करजं नखम् । ओं नमो विष्णवे इत्यनेनार्पयतीत्यर्थः । गुणातिपातो नाम नाटकभूषणमिदम् । तथा च—'गुणातिपातो व्यत्यस्तगुणाख्यानमुदाहृतः ।' ( ना० चं० का०। १७० ) अत्र सोल्लुण्ठं जटिलया माधवस्य व्यत्यस्तगुणवर्णनेन गुणातिपातः ॥ ३१ ॥

---

१. प्रबोधयति—अ० ।

जटिला—अइ मुद्धे वहूडि, इमस्स कालकुंडलिणो तिक्खाए वंक दिट्ठिआए फंसिदा वज्जप्पडिमा वि जज्जरी होइ किं उण तुमं णोमालिआसुउमाला तवस्सिणी। ता तुरिअ घरगब्भं गच्छेह्म। [ अयि मुग्धे वधूटि, अस्य कालकुण्डलिनः तीक्ष्णया वक्रदृष्ट्या स्पृष्टा वज्रप्रतिमाऽपि जर्जरी भवति किं पुनस्त्वं नवमालिकासुकुमारा तपस्विनी। तस्मात् त्वरितं गृहगर्भं गच्छामः ] ( इति ललिताराधिकाभ्यां सह निष्क्रान्ता )

वृन्दा—नागरेन्द्र, मुञ्च वैमनस्यम्। साम्प्रतं भवदभीष्टसिद्धये शारिकामुखेन ललितां सन्दिश्य विशाखया भवन्तं निवेदयिष्यामि।

( इति निष्क्रान्ता )

माधवः—( सखेदम् )

द्रवति मनागभ्युदिताद्विधुकान्ते शिशिरभानुजालोकात्[1]।
पर्वणि पिधानमकरोदहह स्वर्भानुभीषणा जरती ॥ ३२ ॥

( निश्वस्य ) विशाखामन्वेष्टुं जटिलागृहोपान्तपाटलवाटिकायां[2] गच्छेयम्। ( इति परिक्रम्य ) कथमग्रे स्वगृहाङ्गणमभिमन्युरधितिष्ठतीति। तदहमत्रैव क्षणमन्तरितो भवेयमिति। ( इति निष्क्रान्तः )

( प्रविश्य अभिमन्युः )

अभिमन्युः—तिण्णि ओसरिआसआइं[3] मोल्लेण गेण्हिदुं गेहादो कंचणं णइस्सं। ता कहिं गदा अम्मा[4]। [ त्रीणि उपसर्याशतानि मूल्येन ग्रहीतुं गृहात् काञ्चनं नेष्यामि। तस्मात् कुत्र गताम्बा। ]

---

कालकुण्डलिनः कृष्णसर्पस्य पक्षे कुण्डलयुक्तस्य कृष्णस्य तपस्विनी वराकीत्यर्थः।

यत् कर्त्तव्यं विशाखाद्वारा तन्निवेदयिष्यामि। अत्र शमो नाम प्रतिमुखसन्ध्यङ्गमिदम्। तथा च—'अरतेः शमनं धीरैः शम इत्यभिधीयते।' (ना० चं०) अत्र जटिलया राधायां नीतायां वृन्दया माधवस्यारतिशमनात् शमः।

द्रवतीति। अभि सर्वतोभावेनोदितात् शिशिरभानुजालोकात् चन्द्रकिरणालोकनाद्विधुकान्ते चन्द्रकान्ते मणौ मनाग् द्रवति सति पर्वणि पौर्णमास्यां स्वर्भानुः भीषणो राहुः। पक्षे शिशिरा स्निग्धा भानुजा राधा तस्या आलोकनात् मयि द्रवति सति पर्वण्युत्सवे स्वर्भानुभीषणा राहुरूपा जरती पिधानमाच्छादनमकरोत्॥ ३२ ॥

---

१. लोकात्—अ०। २. वाटिकां—अ०। ३. सआंइं—ब०। ४. अम्मओ—अ०।

( प्रविश्य जटिला )

जटिला—हंत हंत दाणिं सारीए सुअस्स कहिज्जंतं णिहुदं मए सुदं जं अहिमण्णुवेसेण माहवो एण्हिं मह घरं उवसप्पिसदि। ता गदुअ पेक्खिस्सं। [ हन्त ! हन्त ! इदानीं शार्या शुकाय कथ्यमानं निभृतं मया श्रुतं यत्–'अभिमन्युवेशेन माधवः इदानीं मम गृहमुपसर्पिष्यति।' तद् गत्वा प्रेक्षिष्ये। ] ( इति परिक्रमन्ती द्वारि दूरादभिमन्युमालोक्य ) अम्मो ! सच्चं एसो धुत्तो आअदो ता गदुअ पामाणिअजणं आणिस्सं। [ अहो सत्यम्। एष धूर्त्तः आगतस्तस्माद् गत्वा प्रामाणिकजनमानेष्यामि। ] ( इति निष्क्रान्ता )

अभिमन्युः—विसाहे, कुत्थ वट्टसि ? [ विशाखे, कुत्र वर्तसे ? ]

( प्रविश्य ललिता )

ललिता—( स्वगतम् ) एत्थ कण्हं पेसिदुं सारिअवअणेण विसाहा गदा। [ अत्र कृष्णं प्रेषितुं शारीवचनेन विशाखा गता ] ( प्रकाशम्। लज्जामभिनीय नीचैः ) सुहअ, एत्थ विसाहा णत्थि। [सुभग, अत्र विशाखा नास्ति।]

( ततः प्रविशति गार्गीभारुण्डाकुन्दलताभिरावृता जटिला )

जटिला—कुंदलदे, पेक्ख अप्पणो सहीए सोसील्लं। [ कुन्दलते, पश्यात्मनः सख्याः सौशील्यम्। ]

कुन्दलता—( दृष्ट्वा। मुखं [1]नामयन्ती स्वगतम्। ) हा देव्व, रक्ख रक्ख। [ हा दैव, रक्ष रक्ष। ]

भारुण्डा—अज्जे गग्गि, पेक्ख पच्चक्खो अहिमण्णुज्जेव संवुत्तो एसो रइणाअरो तुह कण्णो। ता अलिअं ण जलइ जडिला मे सही। [ आर्ये गार्गि, पश्य प्रत्यक्षोऽभिमन्युरेव संवृत्तः एष रतिनागरः तव कृष्णः। तस्मादलीकं न ज्वलति जटिला मे सखी। ]

जटिला—अज्जे गग्गि, दिट्ठिआ दाणिं पत्तिआइदं तुए। ता अग्गदे सण्णिहिज्ज। [ आर्ये गार्गि, दिष्ट्येदानीं प्रत्यायितं त्वया। तदग्रतः सन्निधेहि। ] ( इति पृष्ठतः परिक्रम्य पुत्रस्य हस्तमाकर्षन्ती साक्षेपम् ) रे गोउलकिसोरीलपडआ अले परघरलुंठणआ कहं तुमं वि अप्पणो पुत्तं मणिस्सदि

---

'काल्योपसर्या प्रजने' इत्यमरः। प्रजनं प्रथमगर्भग्रहणे प्राप्तकाला या गौः। अभिमन्युराह—हे विशाखे इति।

रक्ष रक्षेति श्रीकृष्णज्ञानेन कुन्दलतायाः मनोगतम्। मंस्यते जटिलेत्यादि। अत्र वज्रं नाम प्रतिमुखसन्ध्यङ्गमिदम्। तथा च—'वज्रं तदिति विज्ञेयं साक्षान्निष्ठुरभाषणम्।' ( ना० चं० का० ७५ ) अत्र जटिलया कृष्णधिया पुत्रं प्रति

---

1. नमयन्ती—अ०।

जडिला ! [ रे गोकुलकिशोरीलम्पटक, अरे परगृहलुण्ठाक, कथं त्वामप्यात्मनः पुत्रं मंस्यते जटिला । ]

( अभिमन्युः सलज्जं मुखमावृत्य व्यावर्तयति )

जटिला—अले रतहिंडआ, कीस मुहं ढक्केसि। जं दे विज्जा ण [1]विक्कीदा। [ अरे रतहिण्डक, कस्मान्मुखमाच्छादयसि । यत्ते विद्या न विक्रीता । ] ( इति प्रसह्य सम्मुखयति )

अभिमन्युः—( स्वगतम् ) हद्धी ! हद्धी ! वाउलिआए अम्माए लज्जापज्जाउलो किदोह्मि। ता इदो अवक्कमिस्सं। [ हा धिक् ! हा धिक्। वातुलयाऽम्बया लज्जापर्याकुलः कृतोऽस्मि। तदितोऽपक्रमिष्यामि। ] ( इति परिक्रामति )

जटिला—( धावन्ती पटाञ्चलमाकृष्य ) रे चोर, एसो दिढ़ं गहिदोसि। कहं पलाएसि ! कहं पलाएसि !! [ रे चौर, एष दृढं गृहीतोऽसि। कथं पलायसे ! कथं पलायसे !! ]

अभिमन्युः—( सत्रपं व्याघुट्य ) अक्क भारुंडे, णूणं जणणी मे भूदाहिभूदा संवुत्ता। [ अम्ब भारुण्डे, नूनं जननी मे भूताभिभूता संवृत्ता। ]

( सर्वाः प्रत्यभिज्ञाय सशब्दं हसन्ति )

जटिला—( मुखं निभाल्य । स्वगतम् ) हद्धी ! हद्धी ! प्पमादो प्पमादो। कहं प्पवासादो पुत्तओ च्चेअ मे समाअदो। [ हा धिक् ! हा धिक् ! प्रमादः प्रमादः। कथं प्रवासात् पुत्र एव मे समागतः ] ( इति सापत्रपमुरस्ताडयन्ती निष्क्रान्ता )

भारुण्डा—वच्छ, सच्चं उम्मत्ता दे अम्मा। जं तुमं च्चेअ माहवं मण्णेदि। [ वत्स, सत्यमुन्मत्ता ते जननी। यत्त्वामेव माधवं मन्यते। ]

( अभिमन्युः स्मितं करोति )

कुन्दलता—वीराहिमण्णो, पुण्णवदी मे सही राहा जाए दक्खिणा सच्चवादिणी सिणिद्धा तुम्ह अम्मा सासू लद्धा। ता अम्हे गदुअ एदं अउरुव्वं से णच्चणं भअवदीए णिवेदेम्ह। [ वीराभिमन्यो, पुण्यवती मे

---

निष्ठुरभाषणं वज्रम्। रतहिण्डक स्त्रीचौर। 'स्त्रीचौरो रतहिण्डकः।' विद्या न विक्रीतेति। अत्र सारूप्यं नाम नाटकभूषणमिदम्। तथा च—'दृष्टश्रुतानुभूतार्थकथनादिसमुद्भवम्। सादृश्यं नाम संक्षोभात् तत् सारूप्यं निगद्यते॥" ( ना० चं० का०। १७९ ) अत्र शारिकामुखश्रुतकृष्णप्रवेशसंक्षोभात् जटिलायाः स्वपुत्रे कृष्णबुद्धेः सारूप्यम्।

---

१. विणिक्किदा— ब०।

सखी राधा यया दक्षिणा सत्यवती स्निग्धा तव माता श्वश्रूर्लब्धा । तस्माद्वयं गत्वेदमपूर्वं तस्या नर्तनं भगवत्यै निवेदयामः । ] ( इति तिस्रो निष्क्रान्ताः )

अभिमन्युः—ललिदे, आणेहि अम्मं जं तुअरिअं गंदुकामम्हि । [ ललिते, आनय मातरं यत्त्वरितं गन्तुकामोऽस्मि । ]

ललिता—( निष्क्रम्य । पुनः प्रविश्य ) वीर, तुम्ह पुरदो आअदुं लज्जेदि अज्जा । [ वीर, तव पुरत आगन्तुं लज्जते आर्या ]

अभिमन्युः—होदु । सअं ज्जेअ पेडिआदो कंचणं घेत्तूण गमिस्सं । [ भवतु । स्वयमेव पेटिकातः काञ्चनं गृहीत्वा गमिष्यामि । ] (इति निष्क्रान्तः)

कृष्णः—सखे मन्त्रिराज, परमानन्दमिदमनुभूतमेवानुभाव्यमानोऽस्मि चारणैः ।

( प्रविश्य वृन्दा )

वृन्दा—ललिते, लघु पलायस्व पलायस्व । पश्य परावर्तते मन्युमानेषोऽभिमन्युः ।

ललिता—( साशङ्कमालोक्य ) दारुणसंदिठ्ठअं महुरउदक्कं इमस्स पेक्खणं पडिभादि । ता कलिदाहिमण्णुरूवेण माहवेण होदव्वं । [ दारुणसांदृष्टिकं मधुरोदर्कमस्य प्रेक्षणं प्रतिभाति । तस्मात् कलिताभिमन्युरूपेण माधवेन भवितव्यम् ]

वृन्दा—( सानन्दम् ) किं नाम राधासखीनां धियामक्षुण्णम् । पश्य पश्य ।

[1]मन्दा सान्ध्यपयोदसोदररुचिः सैवाभिमन्योस्तनु
र्वक्त्रं हन्त तदेव खवटघटीघोणं विगाढेक्षणम् ।

---

भगवत्यै निवेदयाम इति । अत्र गर्हणं नाम नाटकभूषणमिदम् । तथा च 'यत्र सङ्कीर्तयन् दोषान् गुणमर्थेन दर्शयेत् । गुणान्वा कीर्तयन् दोषं दर्शयेद् गर्हणं हि तत् ॥' ( ना० चं० का० । १७४ ) अत्र गुणकीर्तनमप्यर्थतो दोषायेति गर्हणम् । दारुणसांदृष्टिकं सद्यःफलम् । 'सान्दृष्टिकं फलं सद्यः' इति । मधुरोदर्कम् । उदर्कः फलमुत्तरम् । अक्षुण्णमगम्यम् ।

मन्द्रेति । अभिमन्योरिव सैव तनुः सन्ध्याभ्रमिव मन्दा रुचिरङ्गकान्तिः तदेव वक्त्रम् । खर्वटघटीव घोणं नासिकं विगाढमविस्तृतमीक्षणम् । करीरः करवीरस्तत्कुसुमस्येव छाया कान्तिर्यस्य तदेवाम्बरं वस्त्रम् । तथापि कापि मुद्रा । अस्य कृष्णस्य स्वकीयरूपस्य या घटा तां पिशुनयति सूचयति । माया नाम

---

१. मन्द्रा—ब० ।

व्यस्ता सैव गतिः करीरकुसुमच्छायं[1] तदेवाम्बरं
मुद्रा कापि तथाप्यसौ पिशुनयत्यस्य स्वरूपच्छटाम् ॥ ३३ ॥

( ततः प्रविशत्यभिमन्युवेषो माधवः )

माधवः—
परितः परिवर्तितं ह्रिया कलितभ्रुकुटि कुञ्चितेक्षणम् ।
मधुरद्युति राधिकामुखं परिपास्यामि कदा बलादहम् ॥ ३४ ॥

( पुरो दृष्ट्वा ) ललिते, क सा ते सखीछद्मा जीवितौषधिः ?

ललिता—हला राहे, इदो दाव । [ सखि राधे, इतस्तावत् । ]

राधा—( प्रविश्य ) सलज्जस्मितमात्मगतम् )

अणहिट्ठो वि पअत्थो पिएण अङ्गीकिदो सुहावेइ ।
गरले वि गिरसगहिदे[2] गरुअं गोरी ण किं रमइ ॥ ३५ ॥

[ अनभीष्टोऽपि पदार्थः प्रियेणाङ्गीकृतः सुखापयति ।
गरलेऽपि गिरीशगृहीते गुरुकं गौरी न किं रमते ॥ ]

माधवः—ललिते, हस्तगता मे महानिधिसम्पत् प्रतीयताम् ।

ललिता—जइ सा जक्खिणी विग्घं ण करेदि । [ यदि सा यक्षिणी विघ्नं न कुर्यात् । ]

( प्रविश्य जटिला )

जटिला—( सहर्षम् ) वहूडिए, दिठ्ठिआ अज्ज तुमं सुबुद्धिआसि संवुत्ता । जं पुत्तस्स मे दिठ्ठिमग्गं गदासि । [ वधूटिके, दिष्टयाद्य त्वं सुबुद्धिकासि संवृत्ता । यत्पुत्रस्य मे दृष्टिमार्गं गतासि । ]

( सर्वे सम्भ्रमं नाटयन्ति )

जटिला—पुत्त अहिमण्णो, संझारंहे दिठ्ठी मे सुठ्ठु ण उम्मीलइ । [ पुत्राभिमन्यो, सन्ध्यारम्भे दृष्टिर्मे सुष्ठु नोन्मीलति । ]

---

सन्ध्यन्तरमिदम् । तथा च—'माया कैतवकल्पना' ( ना० चं० का० । १४० ) अत्र कैतवेनाभिमन्युवेशरचनान्माया ॥ ३३ ॥

अणहिट्ठो वीति । अनभीष्टोऽपि पदार्थः प्रियेणाङ्गीकृतः सन् सुखापयति । गरलेऽपि गिरीशगृहीते गुरुकं गौरवं यथा स्यात्तथा गौरी किं न रमते ॥ ३५ ॥

संवृत्ता जाता । समग्रतमा सर्वतिमिरगता दृष्टिः अन्धकारेऽपि पश्यसीत्यर्थः । पक्षे समग्रतिमिरा दृष्टिः अन्धदृष्टिः ते भवेत् । आकारितास्मि आहूतास्मि । चैत्यतरोः पूज्यवृक्षस्य । याहि गच्छ ।

---

१. कुसुमच्छायां–ब० । २. गहिए–ब० ।

माधवः—( सहर्षस्मितम् ) अक्क, तह अंजणं दाइस्सं जह समग्ग तमा दे दिठ्ठी होही। [ अम्ब, तथाञ्जनं दास्यामि यथा समग्रतमा ते दृष्टिर्भवेत्। ]

कृष्णः—( मन्दं विहस्य ) सखे मन्त्रिवर, दिष्ट्याद्य भवता गोकुल-केलिसुधासिन्धुपुलिनेऽवतीर्णम्।

जटिला—( सानन्दम् ) वच्छ, कीस तुए आआरिदह्मि ? [ वत्स, कस्मात्त्वयाऽऽकारितास्मि ? ]

वृन्दा—साम्प्रतं प्रदोषनिषेव्यां गोमङ्गलां देवीमारिराधयिषुरसौ त्वामनुज्ञापयति।

माधवः—अक्क, बहू दे मए सद्धं चेत्ततरुणो मूले गंदुं ण इच्छेदि। [ अम्ब, वधूस्ते मया सह चैत्यतरोः मूले गन्तुं नेच्छति। ]

जटिला—जादे राहि, एक्कं गुरुअणस्स मे वअणं पडिवालेहि। तुण्णं जाहि इमिणा कंतेण समं। [ पुत्रि राधे, एकं गुरुजनस्य वचनं प्रतिपालय। तूर्णं गच्छानेन कान्तेन समम्। ]

राधा—( स्वगतम् ) अम्महे ! अच्चरिओ विही। [ अहो आश्चर्यो विधिः ] ( प्रकाशम् ) ललिदे, असुत्थदेहह्मि। ता वेण्णवेहि णं। [ ललिते, अस्वस्थदेहास्मि। तद्विज्ञापयैनाम्। ]

जटिला—कुलपुत्ति, सिरेण मे साविदासि। [ कुलपुत्रि, शिरसा मे शापितासि। ]

( राधिका माधवमपाङ्गेन पश्यति )

माधवः—ललिदे, कुडंगे मंगलरंगजाअरं अज्ज अम्हे करिस्सम्ह। ता चंदणगंधोवहारं संपादिअ लभेहि तत्थ पसादिअं राहिअं। अहं किर पढमं साहेमि। [ ललिते, कुञ्जे मङ्गलोत्सवजागरमद्य वयं करिष्यामः। तस्माच्चन्दनगन्धोपहारं सम्पाद्य लम्भस्व तत्र प्रसाधिकां राधिकाम्। अहं किल प्रथमं साधयामि। ] ( इति सर्वाभिस्सह निष्क्रान्तः )

---

शापितासि मे मस्तकशपथम्। अत्र उपन्यासो नाम सन्ध्यङ्गः। केचित्त्वन्यथा वदन्ति। यथा—'उपन्यासः प्रसादनम्।' ( ना० चं० का०।७६ ) अत्र जटिलया राधाप्रसादनमुपन्यासः।

लम्भस्व प्रापय। साधयामि गच्छामि। [1]नाट्यसमाप्त्यनन्तरमाह कृष्णः

---

1. नाट्यसमा—अ०।

कृष्णः—( पौर्णमासीं प्रणम्य ) भगवति, सन्दीपितार्तिरहं न समर्थोऽस्मि धृतिमवलम्बितुम् । किं करवाणि ।

पौर्णमासी—( स्वगतम् ) प्रथमकल्पे व्यतीते चन्द्रावलिरेवात्र साम्प्रतमनुकल्पः । तदद्य सान्दीपनिमन्दिरप्रयाणकैतवेन कुण्डिनमुपयास्यामि ।

कृष्णः—भगवति, वलभीमधिरोढुमनुज्ञापयामि ।

( इति सर्वैः सह निष्क्रान्तः )

( इति निष्क्रान्ताः सर्वे )

इति राधाभिसाराख्यगर्भाङ्कगर्भश्चतुर्थोऽङ्कः ।

---

पौर्णमासीमिति । प्रथमकल्पे मुख्ये कल्पे राधास्वरूपे व्यतीते गते सति चन्द्रावलिरेवानुकल्पः अधमः कल्पः । 'मुख्यः स्यात् प्रथमः कल्पोऽनुकल्पस्तु ततोऽधमः' इत्यमरः ।

अवन्तीपुरे स्वपुत्रस्य सान्दीपनिमुनेर्मन्दिरगमनच्छलेन कुण्डिनं रुक्मिण्याः पितुर्भीष्मकस्य राजधानीम् ।

इति चतुर्थाङ्कव्याख्या ।

# पञ्चमोऽङ्कः

( ततः प्रविशति पौर्णमासी )

पौर्णमासी—शार्ङ्गिण्यलीकपरिवादशतार्पणेन

---

माथुरलीलां सङ्क्षेपेण निर्वर्ण्य द्वारवतीलीलाप्रकटनाय पञ्चमाङ्कमारभते—तत इत्यादिना । पताका-प्रकृतेः प्राप्त्याशावस्थया[1] योगः गर्भसन्धिरुच्यते । तत्र पताकालक्षणं यथा—'यत्प्रधानोपकरणं प्रसङ्गात् स्वाम्यमृच्छति । सा पताका बुधैः प्रोक्ता यादवामात्यवृत्तवत् ।' ( ना० चं० का०।३४ ) । तथा च भरतः—

व्यापि प्रासङ्गिकं वृत्तं पताकेत्यभिधीयते ।

पताका नायकस्य स्यान्न स्वकीयं फलान्तरम् ॥ ( ना० शा० )

यथात्र पञ्चम-षष्ठाङ्कयोः कल्पिते गर्भसन्धौ पौर्णमास्युद्धववृत्तान्तं पताका । अथ प्राप्त्याशावस्थालक्षणम् । यथा भरते—

उपायापायशङ्काभ्यां प्राप्त्याशा प्राप्तिसम्भवः । ( ना० शा० )

तथा नाटकचन्द्रिकायामपि—

प्राप्त्याशा तु निजार्थस्य [2]प्राप्तिसद्भावभावना । ( ना० चं० का०।४३ )

यथात्र गर्भसन्धौ राधायाः सत्राजिति समर्पणेन कृष्णस्य ललिताशङ्खचूडरत्नादि-लाभसम्भावनायोगत्वात् प्राप्त्याशा । अथ गर्भसन्धिलक्षणं यथा—

दृष्टादृष्टस्य बीजस्य गर्भो ह्रासगवेषणात् ।

द्वादशाङ्गो भवेदेष पताकांशानुसारतः ॥

तत्र—

राजेन्द्रताप्रसङ्गेन ह्रासो बन्दिजनोक्तितः ।

पुनरन्वेषणं जातं प्रसेनान्वेषणात् पुनः ॥

ह्रासोऽभूत् पुनरन्वेष्टिर्ललितादर्शनादभूत् ॥ इत्यादि ।

( ना० चं० का० ७८–८० )

अस्याङ्गानि—

अभूताहरणं मार्गो रूपोदाहरणे क्रमः ।

संग्रहश्चानुमानञ्च तोटकाधिवले तथा ।

उद्वेगः सम्भ्रमाक्षेपावेषां लक्षणमुच्यते ॥ (ना० चं० का० ८०-८२)

तत्र पञ्चमषष्ठाङ्कयोरुदाहरणानि ।

पौर्णमास्याह—शार्ङ्गिण्येति । शार्ङ्गिणि श्रीकृष्णे मिथ्यापरिवादशतस्यार्पणेन

---

१. प्राप्त्याशावस्त्वयो-अ० । २. सिद्धिसद्भावेत्यादि नाटकचन्द्रिकास्थपाठः ।

जातोरुपातकमलीमसमानसानाम् ।
सेयं गिरीशगिरिगौरवितैर्नृपाणां
दूष्यैर्विदर्भनगरी परिदूषितास्ति ॥ १ ॥

( नेपथ्ये )

ऋद्धा सिद्धिर्व्रजविजयिता सत्यधर्मा समाधि-
र्ब्रह्मानन्दो गुरुरपि चमत्कारयत्येव तावत् ।
यावत्प्रेम्णां मधुरिपुवशीकारसिद्धौषधीनां
गन्धोऽप्यन्तःकरणसरणीपान्थतां न प्रयाति ॥ २ ॥

( विलोक्य । सहर्षम् )

भुजतटविलुठज्जटाञ्चलोऽयं मधुरिपुकीर्त्युपवीणनप्रवीणः ।
उदयति शरदिन्दुरोचिरच्छः कथमिह कच्छपिकाकरः सुरर्षिः ॥ ३ ॥

( नारदः प्रविश्य ऋद्धेत्यादि पद्यं ( ल० मा० ५।२ ) पठति )

पौर्णमासी—भगवन्नभिवादये ।

नारदः—मुकुन्दस्य प्रियम्भावुकी भव ।

पौर्णमासी—भगवन् , श्रुतो मुकुन्दः मथुरातः प्रतस्थे ।

नारदः—अथ किम् ।

हुत्वा म्लेच्छाधिराजं पुरमथनवरान्माथुराणामवध्यं
स्वच्छन्दं कन्दरान्तर्नयनजदहने मौचकुन्दे मुकुन्दः ।
भूयो भूयः कदर्थीकृतकुटिलजरासन्धदुष्टाभिसन्धिः
सिन्धोस्तीरे सबन्धुर्नगवति नगरे द्वारकायामयासीत् ॥ ४ ॥

---

म्लानमनसां नृपाणां दूष्यैर्वस्त्रगृहैः सेयं विदर्भनगरी परिदूषिता सत्यस्ति । गिरीशेत्यादिनाऽत्युच्चत्वं श्वेतत्वञ्च व्यङ्ग्यम् ॥ १ ॥

ऋद्धेति । यावत् प्रेम्णां गन्धोऽप्यन्तःकरणसरण्यां पथिकानामन्तःकरणगतो न भवति तावत् ऋद्धादिश्चमत्कारयति । ऋद्धा राज्यादिसम्पत् । सिद्धिव्रजविजयिता सिद्धिसमूहानां वशीकारिता । सत्यधर्मा कपटकामनादिरहितो धर्मः । समाधिरष्टाङ्गयोगः । ब्रह्मानन्दः परमानन्दः । गुरुरपि श्रेष्ठोऽपि ॥ २ ॥

कथमिहायं सुरर्षिरुदयति । कीदृशः—भुजतटेत्यादि । उपवीणने वीणया गाने प्रवीणः । अच्छः स्वच्छः । कच्छपिका नारदवीणा ॥ ३ ॥

हुत्वेति । पुरमथनो महादेवस्तस्य वरात् माथुराणामवध्यं म्लेच्छाधिराजं मौचकुन्दे नयनदहने वह्नौ हुत्वा भूयो भूयः कदर्थीकृतः नाशितः कुटिलजरासन्धस्य दुष्टाभिसन्धिर्येन । कदर्थीत्यादिना जरासन्धानीताः त्रयोविंशत्यक्षौहिणीः सेनाः सप्तदशवारं येन क्षयं नीताः स मुकुन्दः द्वारकायामयासीत् ॥ ४ ॥

पौर्णमासी—भगवन्, बलीयसा स्नेहानलेनास्यास्तनोरन्तिमेष्टौ सम्प्रवृत्तायां दिष्टयाद्य दृष्टोऽसि।

नारदः—वत्से, स्फुटमेकेनापि चन्द्रमसा पौर्णमासी सुसमृद्धयति किमुत पूर्णकलया चन्द्रावल्या।

पौर्णमासी—( सास्रम् ) भगवन्नसाधारणदर्शं [1]चन्द्रावलेः प्रतिपक्ष-पक्षपरार्द्धमुपान्तसीमनि वर्तते। ततः कथं पौर्णमास्याः समृद्धिवार्तापि।

नारदः—पुत्रि, नवराकात्मपक्षासि। कुतस्ते बहुलविपक्षतो भयम्!

पौर्णमासी—नितान्तमियं हरिणोज्झिता संवृत्ता महाकान्तिश्चास्याः स्वसा राधिका व्यतीता। कुतो न भीतिः।

नारदः—किमद्याप्येनां राधिकाशोको बाधते?

पौर्णमासी—अथ किम्। यदियं बन्धुवत्सला रुक्मिणी।

नारदः—केनेयं रुक्मिणीति विश्राविता।

पौर्णमासी—रुक्मिणस्तातेन।

नारदः—( क्षणं प्रणिधाय। स्वगतम् ) नन्वेताः पुरव्रजरमण्यः समा-

---

स्नेहानलेनास्याः मम तनोरन्तिमेष्टौ मरणदशायाम्। चन्द्रमसा चन्द्रेण। चन्द्रावल्या चन्द्रश्रेण्या। पक्षे तन्नाम्न्या कृष्णप्रेयस्या। असाधारणं दारुणम्। दर्शममावस्या। चन्द्रावलेः चन्द्रश्रेण्याः प्रतिपक्षपक्षः विरोधिपक्षः कृष्णपक्षः तस्य परार्द्धमुत्तरार्द्धमुपान्तसीमनि चतुर्दश्यां वर्तते। अनेन चतुर्दश्यां यद्यमावस्या भवति तदा चन्द्रदर्शनस्य सम्भावनाभावात् कुतः पौर्णमास्यास्तिथेः समृद्धिवार्ता। पक्षेऽसाधारणं दारुणं दर्शं दर्शनं यस्य तादृशं चन्द्रावलेः श्रीकृष्णप्रेयस्याः प्रतिपक्ष-पक्षपरार्द्धं शत्रुपक्षपरार्द्धं निकटे वर्तते तदा कथं पौर्णमास्या मम समृद्धिवार्ता।

नवराकाः पूर्णचन्द्राः पौर्णमास्या आत्मरूपाः पक्षाः यस्यास्तस्यास्तिथेः बहुलं कृष्णपक्षः स एव विपक्षस्तस्माद् विपक्षतः कुतो भयम्। पक्षे—वराकः क्षुद्रः आत्मपक्षो यथा स्यात्तथाभूता नासि। कुतस्ते तव बहुलविपक्षतो बहुविपक्षतो भयम्। हरिणः मृगस्तेनोज्झिता त्यक्ता। इयं चन्द्रश्रेणी पक्षे कृष्णेनोज्झिता त्यक्तेयं चन्द्रावलिः नितान्तं सर्वथा संवृत्ता। अस्याः महाकान्तिश्च व्यतीता। कीदृशी कान्तिः—निजसारेणाधिका। पक्षे अस्याः स्वसा भगिनी राधिका। सा कीदृशी—महाकान्तिः। साऽपि व्यतीताऽन्तर्हिता। अतः कुतो न भीतिः।

एतां चन्द्रावलीं राधिकाशोको बाधते। इयं रुक्मिणी वत्सला। केन जनेनेयं चन्द्रावली रुक्मिणीत्याख्यया विश्राविता विख्याता कृता। रुक्मिणस्तातेन भीष्म-केण। प्रणिधाय सार्वज्ञ्यशक्त्या भक्तिबलेन च निश्चित्य। विग्रहादिभिरित्यत्रादि-

---

१. चन्द्रावल्यप्रति–अ०।

न्त्वादपि विग्रहादिभिर्भिन्ना एव। यद्यापि व्रज एव ता व्रजरमण्यः प्रेममूर्च्छिता वर्तन्ते किन्तु योगमाययैव विप्रयोगेऽपि प्रियसङ्गसुखसङ्गमनाय तत्रैवाच्छाद्य पुररमणीषु स्वाभेदाभिमानेनावेशिता दीर्घ-स्वप्न इव यास्तूद्धवयानकुरुक्षेत्रयात्रयोर्वृत्तवत्स्र्यमानचरित्रास्ताः खल्वष्टोत्तरैकशतषोडशसहस्रतस्तस्मादन्या एव। तदलं तद्रहस्योद्घाटनेन। (प्रकाशम्) किमध्यवसितं भीष्मकस्य?

पौर्णमासी—यादवेन्द्रे चन्द्रावलीसमर्पणम्।

नारदः—ततः किमित्याकुलासि?

पौर्णमासी—प्रतिकूले रुक्मिणि कोऽयं भीष्मकस्तपस्वी।

नारदः—विदर्भकुमारस्य किमारिप्सितम्?

पौर्णमासी—चेदिपतेरभ्यर्थनपूरणम्।

नारदः—कथमेतद्भवत्यावधारितम्?

पौर्णमासी—रुक्मिण्यां पद्यस्य प्रेषणेन।

नारदः—पठ्यतामिदम्।

पौर्णमासी—

प्रणयो दमघोषनन्दने शिशुपाले तव यौवनाङ्किते।
नरदेववरे श्रुतश्रवो हृदयानन्दिगुणे विजृम्भताम्॥ ५॥

नारदः—ततः [2]किमध्यवसितं तया?

---

शब्देन भावादिभिश्च भिन्नत्वमेवाह—यद्यापीत्यादिना। प्रेममूर्च्छितानामपि सुखावाप्तिमाह—किन्त्विति। अत्र दृष्टान्तमाह—दीर्घस्वप्ने इव स्वप्ने यथा यथास्थितदेहे निद्रा स्वाप्निकदेहेन सुखभोगादिस्तथात्रापि। अत एव या उद्धवयाने वृत्तचरित्राः कुरुक्षेत्रे वर्त्स्यमानचरित्रास्ताः व्रजरमण्यस्तस्मात् व्रजादानीतात् पूर्वोक्तात् अष्टोत्तरशतैकषोडशसहस्रादन्याः भिन्नाः। सात्वतमते योगमायाकार्यस्य नित्यत्वादुभयत्र लीला तासां स्थितिश्च नित्या। अस्य भीष्मकस्य किमध्यवसितं चेष्टितम्। निश्चितमित्यर्थः। यादवेन्द्रे कृष्णे। तस्या भ्रातरि रुक्मिणि प्रतिकूले सति भीष्मकः तपस्वी वराकः कः। न कोऽपीत्यर्थः।

विदर्भकुमारस्य रुक्मिणः। किमारिप्सितमारब्धुमिष्टम्। चेदिपतेः शिशुपालस्य। पद्यमेवाह पौर्णमासी। 'प्रणय' इत्यादि रुक्मिणः पद्यम्। शिशुपाले तव प्रणयो विजृम्भतां वर्द्धताम्। श्रुतश्रवाः शिशुपालमाता॥ ५॥

---

१. यात्रयोर्वर्त्स्यमान–व०। २. किमित्यध्यवसितम्–अ०।

पौर्णमासी—तदेव परिवर्तितपञ्चाक्षरं सञ्चारितम्। यथा—

'प्रणयो मम घोषनन्दने पशुपाले तव यौवनाञ्चिते।
परदेववरेऽद्भुतश्रवो हृदयानन्दिगुणे विजृम्भते[1]॥ ६॥

नारदः—(विहस्य) ततस्ततः।

पौर्णमासी—ततस्तदालोक्य शङ्कितकृष्णोपसत्तिना युवराजेन दुष्ट-राजन्यके निमन्त्र्य कुण्डिनमानेष्यमाणे पर्याकुलया वत्सया मामनुमन्त्र्य सुनन्दनाम्ना भूसुरेण मुकुन्दाय पत्रिका हारिता।

नारदः—सा किंविधा ?

पौर्णमासी—

अचिरं निरस्य रसितैः प्रतिपक्षं राजहंसनिकुरम्बम्[2]।
कृष्णघनस्त्वाममृतैस्तृषितां चन्द्रावलीं सिञ्च॥ ७॥

नारदः—नूनमस्य भूसुरस्य पुनरावृत्तिर्न वृत्तास्ति।

पौर्णमासी—अथ किम्। यदत्र दैवं रुक्मिण्यनुकूलम्।

नारदः—जगदाश्चर्यचातुर्यया किमित्यनुलोमितस्त्वया न रुक्मी।

पौर्णमासी—मम चातुर्यमाध्वीकेनैव द्विगुणीकृतदुर्मदेन रुक्मिणा

---

अत्र पद्ये परिवर्तनं पञ्चाक्षरस्य। यथा दमघोषनन्दने इत्यत्र दकारस्य स्थाने मकारं परिवर्तितं, शिशुपाले इत्यत्र शिकारस्य स्थाने पकारं, तव इत्यत्र तस्य नकारं, नरदेववरे इत्यत्र नस्य पकारं, श्रुतश्रवो इति श्रोः हकारं हृतम्। शीघ्रं श्रवसोः कर्णयोः हृदयस्य चानन्दिनो गुणा यस्य तस्मिन्॥ ६॥

ततः रुक्मिण्यास्तत् पद्यमालोक्य। रुक्मिण्याः शङ्किता कृष्णे उपसत्तिरासत्ति-र्येन तेन युवराजेन। दुष्टराजन्यके आनेष्यमाणे सति। वत्सया रुक्मिण्या। भूसुरेण ब्राह्मणेन।

अचिरमिति। हे कृष्ण घनरसैः स्वादुभिरमृतैः प्रतिपक्षं राजसमूहं निरस्य चन्द्रकवतीं चन्द्रावलीं सिञ्च। पक्षे—जलैः राजहंसं निरस्य मयूरीं सिञ्च। मेघागमे राजहंसानामेतद्देशं त्यक्त्वा मानसरोवरे गमनस्य श्रवणात्। लेखो नाम सन्ध्यङ्गमिदम्। तथा च—'विवक्षितार्थकलिता पत्रिका लेख ईरितः।' (ना० चं० का०। १४६) अत्र चन्द्रावलीपत्रिका लेखः॥ ७॥

भूसुरस्य सुनन्दनाम्नः। जगति आश्चर्यमद्भुतं चातुर्यं यस्यास्तादृश्या। त्वया रुक्मी किं नानुलोमितः नानुकूलितः। चेदिपतेरावुत्तभावाय भगिनीपतिभावाय तथा कुलदेवी आराधिता। यथेति। इदं प्रत्यादेशम्।

---

१. विजृम्भताम्—ब०। २. निकुरम्ब—अ०।

चेदिपतेरावुत्तभावाय कुलदेवी चन्द्रभागा यागाद्युपचारैस्तथाऽऽराधिता यथा तदभीष्टमेव प्रत्यादिदेश ।

नारदः—कीदृशमिदम् ?

पौर्णमासी—

विरचयन् जननीमतिविस्मितां भुजचतुष्टयवानजनिष्ट यः ।

स भगिनीं तव शूरसुतात्मजो गुणवतीं परिणेष्यति रुक्मिणीम् ॥८॥

नारदः—( सस्मितम् ) प्रतारितमेव तारकारिजनन्या । दुर्जनं जानीहि ।

पौर्णमासी—भगवन् , कुतः प्रतारणम् ! यतः—

दूरे द्वारवतीन्द्रो मलिनीकुरुतेऽद्य कुण्डिनं खलिनी ।

पारेवारिधि गरुडो दिदङ्क्षत्रः पार्श्वतो भुजङ्गाः ॥ ९ ॥

( प्रविश्य सुनन्दः )

सुनन्दः—भगवति, निर्भरमदूर एव विदर्भपुरे द्वारवतीन्द्रः ।

पौर्णमासी—( सानन्दम् ) सुनन्द, वाढमभिनन्दनीयोऽसि सन्देशहरः ।

सुनन्दः—कृतमभिनन्दनेन दिष्टान्धस्य मे वन्ध्या बभूव सन्देशहरता ।

---

विरचयन्निति । यः जननीमतिविस्मितां विरचयन् भुजचतुष्टयवानजनिष्ट । अत्र महाभारते कथा—शिशुपालश्चतुर्भुजो जातस्तं दृष्ट्वा तस्य मात्रादयो विस्मिता बभूवुः । तत आकाशवाणी अभूत्—'यस्य क्रोडे गतः सन्नस्य भुजद्वयं नश्यति सोऽस्य हन्ता भविष्यतीति । ततः श्रीकृष्णक्रोडगतस्य तस्य भुजद्वयादर्शनं जातं नत्वन्यस्य क्रोडगतस्येति । पक्षे—श्रीकृष्णः । कीदृशः—शूरसुता शिशुपालमाता श्रुतश्रवा । पक्षे वासुदेवः । अभूताहरणं नाम गर्भसन्ध्यङ्गमिदम् । तथा च—'अभूताहरणं तत् स्याद्वाक्यं यत् कपटाश्रयम् ।' (ना० चं० का० ८२) अत्र प्रकटमेव कपटं वाक्यमभूताहरणम् ॥ ८ ॥

तारकारिः कार्तिकेयस्तस्य जनन्या पार्वत्या ।

कुतः केन प्रकारेण । दूरे इति । द्वारवतीन्द्रः कृष्णः । खलिनी खलसमूहः । पारेवारिधि समुद्रस्य पारे । भुजङ्गाः सर्पाः । पार्श्वतः पार्श्वे ॥ ९ ॥

सुनन्दः श्रीकृष्णनिकटे रुक्मिण्याः [1]पत्रहारी । अभिनन्दनीयः श्लाघनीयः । दिष्टान्धस्य भाग्यान्धस्य । सन्देशहरता वन्ध्या निष्फला । पत्रिराजो गरुडः तं पातीति पत्रिराजपस्तस्य श्रीकृष्णस्य पत्रिका ।

---

१. पत्रवाही—ब० ।

पौर्णमासी—( साशङ्कम् ) कथमिव ।

सुनन्दः—पठ्यतामियं पत्रिका [1]पत्रिराजपस्य ।

नारदः—( वाचयति )

निखिलाः शिखिनि नयन्नपि सुखानि [2]जात्यासितापाङ्गीः ।
रमयति कृष्णः सुघनो वृन्दावनगन्धिनीरेव ॥ १० ॥

पौर्णमासी—हन्त ! चन्द्रावलीति नाधिगतं माधवेन ।

नारदः—सुनन्द, कुतस्त्वया नाभिव्यक्तमावेदितम् ?

सुनन्दः—का खलु चन्द्रावली ?

पौर्णमासी—दुष्टनृपेभ्यस्त्रपमाणेन रुक्मिणा स्वसुर्गोकुले निवासमत्र निह्नुत्य चन्द्रावलीत्यभिधा संवृता ।

सुनन्दः—नूनं सुहृदामप्यगोचरोऽयमर्थस्तत्र मद्विधस्य का कथा ।

पौर्णमासी— तर्हि कथमसौ दर्वीकरारिकेतुर्विदर्भानलञ्चकार ।

सुनन्दः—भक्तयोः क्रथकैशिकयोः सन्देशेन ।

पौर्णमासी—नृपाभ्यां किमत्र प्रवृत्तम् ?

सुनन्दः—भगवतो हिरण्यगर्भस्य शासनेन । तथा हि—

स्वस्ति श्रीक्रथकैशिकौ स्वभवनादम्भोजगर्भोद्भवः
सर्वक्ष्मापतिदुर्व्यतिक्रमगिरावित्यादिशत्येष वाम् ।

---

निखिला इति । शिखिनि चूडायुक्ते मयूरे च । शिखी कृष्णः । सुघनो जात्या जन्मनैव निखिला असितापाङ्गीः सुन्दरीः पक्षे सितापाङ्गीः मयूरीः सुखानि नयन्नपि । द्विकर्मको नी धातुः । वृन्दावनगन्धिनीः वृन्दावनसम्बन्धिनीरेव रमयति । रुक्मिणी वृन्दावनसम्बन्धिनी नास्ति इति न रमयति । मार्गो नाम गर्भसन्ध्यङ्गमिदम् । तथा च 'मार्गस्तत्त्वार्थकथनं' ( ना० चं० का० ८३ ) । अत्र हरिणा हृदयतत्त्वप्रकटनान्मार्गः ॥ १० ॥

चन्द्रावल्येव रुक्मिणीति नाधिगतं न ज्ञातम् । अभिव्यक्तं चन्द्रावल्येव रुक्मिणीति । तत्र सुनन्द आह—केति । त्रपमानेन लज्जितेन रुक्मिणा स्वसुर्गोकुले निवासं निह्नुत्यात्र कुण्डिने चन्द्रावलीत्याख्या संवृतावृता । श्रुत्वा सुनन्द आह—नूनमित्यादि । दर्वीकराः सर्पास्तेषामरिः गरुडः केतौ यस्य स कृष्णो विदर्भान् तर्हि कथमलञ्चकार । क्रथकैशिकनाम्नोर्भक्तयोः सन्देशेन । अत्र सन्देशलिखने किं कथं प्रवृत्तम् । हिरण्यगर्भस्य ब्रह्मणः ।

पत्रमेवाह—स्वस्तीति । अम्भोजगर्भोद्भवः ब्रह्मा स्वभवनाद्वां युवामित्या-

---

१. पत्रिराजपत्रस्य—ब० । २. जात्यासितापाङ्गी—अ० ।

शुद्धैरध्यवसीयतां नृपतिभिः सार्द्धं युवाभ्यां मुदा
श्रीराजेन्द्रतया क्षितौ यदुपतेः पुण्याभिषेकक्रिया ॥ ११ ॥

पौर्णमासी—दिष्टया द्रष्टव्योऽयं [1]मया महोत्सवः ।

सुनन्दः—भगवति, निर्व्यूढोऽयम् ।

पौर्णमासी—कीदृगेषः ?

सुनन्दः—

बंहिष्ठे रत्नसिंहासनशिरसि वरे सन्निविष्टस्य तुष्टै-
र्गीर्वाणैः पार्वतीशप्रभृतिभिरभितः स्तूयमानस्य भूयः ।
सद्यः सम्पाद्यमाना नृपतिभिरखिलैर्दिव्यकुम्भावलीभि-
स्तत्रापूर्वस्तदासीद्दनुजविजयिनो राजराज्याभिषेकः ॥ १२ ॥

नारदः—सिद्धं विन्ध्याय वेधसो वरदानम् ।

पौर्णमासी—भगवन्ननुशाधि । साधयामि माधवं साधिष्ठार्थबोधनाय ।

( प्रविश्यापटीक्षेपेण कञ्चुकी )

कञ्चुकी—भगवति, विदर्भेन्द्रो निवेदयति—मदभ्यर्थिताभ्यां पार्थिवाभ्यां रुक्मिणीहरणाय राजेन्द्रमावेदयितुं प्रस्थितम् । तदद्य भवत्या तीर्थेन तीर्थपादं द्रष्टुमिच्छामीति ।

पौर्णमासी—भगवन्, मम साध्यं सिद्धमिवाभूत् । तदनुजानीहि माम् । ( इति द्वाभ्यां सह निष्क्रान्ता )

---

दिशति । युवाभ्यां क्षितौ राजेन्द्रतया यदुपतेः श्रीकृष्णस्य पुण्याभिषेकक्रिया अध्यवसीयतां क्रियताम् ॥ ११ ॥

अयमुत्सवो निर्व्यूढः निर्वाहितो बभूवेत्यर्थः ।

बंहिष्ठे इति । बंहिष्ठे स्थूले रत्नसिंहासनशिरसि सन्निविष्टस्य दनुजविजयिनो राजराज्याभिषेकः आसीत् । 'राजराजाभिषेकः' इत्यपि पाठः ॥ १२ ॥

वेधसो ब्रह्मणः । वरदानन्तु—तव जामाता ईश्वरो भविष्यतीति । अनुशाधि अनुज्ञां देहि । साधिष्ठार्थबोधनाय रुक्मिण्या ब्रजसम्बन्धित्वं तेन साधिष्ठोऽङ्गीकृतो योऽर्थस्तस्य ज्ञापनाय । माधवं साधयामि गच्छामि । विदर्भेन्द्रो भीष्मकः । कञ्चुकीति अस्य नाट्ये खोजेत्याख्या । अपटीक्षेपेणेति पदं श्रीकृष्णदर्शनार्थमुद्यतः सन् स निवेदयतीति सूचनार्थम् । ताभ्यां पार्थिवाभ्यां रुक्मिणीहरणाय राजेन्द्रं श्रीकृष्णमावेदयितुमादौ प्रस्थितम् । भवत्या तीर्थेन द्वारेण । तीर्थपादं श्रीकृष्णं साध्यं कर्तव्यम् ।

---

1. मह्ना—अ० ।

( नेपथ्ये )

विश्रान्ते विषयाकृतिं परिणतिं हित्वा मुनीनामपि
स्वान्तेनाक्रमते यदंघ्रिनखरोपान्तप्रभाप्यलिपका ।
चित्रं मद्विधपाणिकुड्मलतटीसंवाह्यपादाम्बुजो
देवः सोऽयमलङ्करोति करुणः कल्याणपल्यङ्किकाम् ॥ १३ ॥

नारदः—क्रथकैशिकयोः सूक्तिरियम् ।

( पुनर्नेपथ्ये शंखध्वनिः )

( विलोक्य । सहर्षम् ) अहह !

करयुगलेन गृहीतं निधाय वदनाम्बुजे धमन् [1]कम्बुम् ।
व्रजराज्ञीस्तनपानस्मरणस्तिमितो हरिर्जयति ॥ १४ ॥

( पुनर्निरूप्य ) कथं क्रथकैशिकाभ्यामनुगम्यमानोऽयं पुरस्तात् परिक्रामति । यः खलु—

चञ्चत्कौस्तुभकौमुदीसमुदयः कौमोदकीचक्रयोः
सख्येनोज्ज्वलितैस्तथा जलजयोराढ्यश्चतुर्भिर्भुजैः ।
दिव्यालङ्करणेन सङ्कटतनुः सङ्गी विहङ्गेशितु-
र्मां व्यस्मारयदेष कंसविजयी वैकुण्ठगोष्ठीश्रियम् ॥ १५ ॥

तदम्बरमारूढः कौतुकमालोकयामीति । ( इति निष्क्रान्तः )

---

विश्रान्ते इति । विषयाकृतिं परिणतिं प्राकृतविषयमात्रं हित्वा विश्रान्ते आवरणविक्षेपादिरहिते मुनीनां स्वान्ते मनस्यलिपकापि यस्यांघ्रिनखरोपान्तप्रभा नाक्रमते । आङो ज्योतिरुद्गमे इत्यात्मनेपदम् । चित्रमाश्चर्यम् । सोऽयं देवः करुणः मद्विधानामपि पाणिकुड्मलतटीभिः संवाह्यपादाम्बुजः सन् कल्याणपल्यङ्किकामलङ्करोति ॥ १३ ॥

करेति । करयुगलेन [2]पाणितलेन गृहीतं कम्बु शंखं धमन् वादयन् यशोदास्तनपानस्मरणेन स्तिमितः स्निग्धो हरिर्जयति । शंखवादनसमये हस्तद्वयेन शंखं धृत्वा शंखे मुखाधानसमये श्रीयशोदायाः स्तनं हस्तद्वयेन स्तन्यपानं स्मृतिपथमारूढम् । अहो ! यशोदाया भाग्याधिक्यं यस्याः स्तनपानस्मरणेऽपि स्निग्धो भवति मुनिमनसोऽप्यगम्यनखकणच्छटोऽयं श्रीकृष्णः ॥ १४ ॥

चञ्चदिति । विहङ्गेशितुः गरुडस्य सङ्गी कंसविजयी वैकुण्ठगोष्ठीश्रियं व्यस्मारयत् । कीदृशः—चञ्चत्कौस्तुभस्य ज्योत्स्नानामुदयो यत्र सः गदापद्मशंखचक्रयुतैश्चतुर्भिर्भुजैराढ्यः ॥ १५ ॥

---

१. कम्बु—अ० । २. पाणियुगलेन—अ० ।

( ततः प्रविशति यथानिर्दिष्टः कृष्णः )

कृष्णः—हन्त ! नृपेन्द्रौ,

हितैरमृतशालिभिर्मदभिषेकवारां झरैः
समृद्धिमुपलभ्य वां विमलकीर्तिवल्ली भुवि ।
व्यतीतसुरकाननापरममूर्द्धमारुन्धती
रमाश्रवणभूषणस्तवकराशिरासीदसौ ॥ १६ ॥

नृपौ—( सप्रश्रयम् )

एकस्मिन्निह रोमकूपकुहरे ब्रह्माण्डभाण्डावली
यस्य प्रेक्ष्यते गवाक्षपदवीघूर्णत्पराणूपमा[1] ।
केयं तस्य समृद्धये तव विभो राजेन्द्रताग्रामटी-
शौटीर्येण चमत्कृतिं तदपि नः कामप्यसौ पुष्यति ॥ १७ ॥

कृष्णः—नृपेन्द्रौ, प्रसन्नोऽस्मि । निजाभीष्टमभ्यर्थयेथाम् ।

नृपौ—देव, रुक्मिणी सा तपस्विनी तपस्तथा न चकार येन ते दास्यसौभाग्यभागधेयभाजनं भवेदिति सुपर्णादाकर्णितम् । किन्तु तथा देवेनानुगृह्यतां यथा कथावशेषा भीरुरेषा न स्यात् ।

कृष्णः—कीदृगनुग्रहः ?

नृपौ—दुर्मदमागधादीनां पराभवेनास्याः कुण्डिनादाकृष्टिः । यदद्य चन्द्रागभाराधनाय बहिः साधयत्येषा ।

---

हितैरिति । हे नृपेन्द्रौ युवयोर्विमलकीर्तिवल्ली मदभिषेकवारां झरैः भुवि सम्यग् ऋद्धिमुपलभ्य स्वर्गमुल्लङ्घ्य लक्ष्म्याः कर्णभूषणस्तवकसमूहोऽभूत् ॥१६॥

एकस्मिन्निति । यस्यैकस्मिन् रोमकूपे गवाक्षरन्ध्रे घूर्णन् परमाणुवत् ब्रह्माण्डावली कर्त्री प्रेक्ष्यते दर्शयति । तस्य तव समृद्धये केयं राजेन्द्रतारूपग्रामटी क्षुद्रग्रामः । तदपि नोऽस्माकं कामपि चमत्कृतिं शौटीर्येण पुष्यति । मधुरभाषणं नाम नाटकभूषणमिदम् । तथा च—'यत् प्रसन्नेन मनसा पूज्यं पूजयितुर्वचः । स्तुतिप्रकाशनं तत्तु ज्ञेयं मधुरभाषणम् ॥' ( ना० चं० का० । १८१ ) अत्र प्रकटमेव मधुरभाषणम् ॥ १७ ॥

व्रजसम्बन्धाभावादयोग्यापि सा तथाऽनुगृह्यतां यथा कथावशेषा रुक्मिणी । भीरुरियमित्यनेन कयापि कुलवत्या स्वविवाहार्थं स्वस्वामित्वेनाङ्गीकृत्य कमपि पत्रं न लिखति । पत्रप्रेषणादिरूपकथामात्रं स्थास्यति न तु तेन स्वप्रयोजनसिद्धिरित्यादिभीः तस्या न स्यादिति भावः । कुण्डिनपुरादाकृष्टिराकर्षणं हरणमित्यर्थः । यदद्य चन्द्रभागा पार्वती तस्या आराधनाय साधयति गच्छति ।

---

१. ०पराणूपमाम्–व० ।

कृष्णः—क्षितीन्द्रौ, बाढमाहरिष्यामि । तदभीष्टमनुष्ठीयताम् ।

( नृपौ कृष्णं प्रणम्य निष्क्रान्तौ )

( नेपथ्ये )

भीता रुद्रं त्यजति गिरिजा [1]श्यामममप्रेक्ष्य कण्ठं
शुभ्रं दृष्ट्वा क्षिपति वसनं विस्मितो नीलवासाः ।
क्षीरं मत्वा श्रपयति यमी नीरमाभीरिकोत्का
गीते दामोदर यशसि ते वीणया नारदेन ॥ १८ ॥

सुपर्णः—सोऽयमम्बरे तुम्बुरुस्तवीति ।

कृष्णः—सखे खगेन्द्र, खे पश्य पश्य ।

शुभ्रातपत्रपटली खलभूपतीना-
मभ्राणि तक्षकफणाकृतिरावृणोति ।
यामाकलय्य पृथुवेपथुदोलितानि
दूरे जगन्ति भयजर्जरतां भजन्ति ॥ १९ ॥

सुपर्णः—देव, बाढमातपत्रफणापटलीलघीयसः किङ्करस्यास्य गरुत्मतः सकृत्पक्षविक्षेपकेलयेऽपि न पर्याप्तिमेष्यति । दूरे विश्राम्यतु सखा मे सुदर्शनः कल्पान्तकृशानुः ।

---

भीतेति । भो दामोदर ते यशसि नारदेन वीणया गीते सति त्रिलोकस्थितानां शुक्लवर्णत्वेन हेतुना गिरिजा रुद्रस्य कण्ठं श्यामवर्णमुत्प्रेक्ष्य भीता सती रुद्रं त्यजति । नीलवासाः शुभ्रं वसनं दृष्ट्वा क्षिपति । आभीरिका गोपी उत्का उत्कण्ठिता सती यमीनीरं जमुनाजलं क्षीरं दुग्धं मत्वा श्रपयति पचति ॥ १८ ॥

शुभ्रेति । तक्षकफणानामिवाकृतिर्यस्यां[2] सा शुभ्रछत्रश्रेणी अभ्राणि मेघानावृणोति । यामातपश्रेणीमाकलय्य दृष्ट्वा जगन्ति कर्तृभूतानि भयजर्जरतां भजन्ति ॥ १९ ॥

सुदर्शनरूपप्रलयवह्निर्मे सखा दूरे विश्राम्यतु । ममैवैकपक्षाघातेन नाशमेष्यतीत्याह—देवेति । ओजो नाम सन्ध्यन्तरमिदम् । तथा च—'ओजश्च वागुपन्यासो निजशक्तिप्रकाशकः ।' ( ना० चं० का० १३६ ) अत्र गरुडेन स्वशक्तिप्रकाशनादोजः ।

---

१. श्याम मे प्रेक्ष्य–अ० ।

२. यासां–ब० ।

( नेपथ्ये )

कुण्डिणणरवइपुत्ती अणुरूवा [1]पुंडरीअणअणस्स ।
तह एसो सहि तिस्सा हा हददेव्वं विलोमेइ ॥ २० ॥
[ कुण्डिननरपतिपुत्री अनुरूपा पुण्डरीकनयनस्य ।
तदा एष सखि तस्या हा हतदैवः विलोमयति ॥ ]

सुपर्णः—पुरस्त्रीणां विषादोक्तिरियम् ।

( पुनर्नेपथ्ये )

कह रुप्पिणी सुरूवा कह दमहोसस्स णंदणो मंदो ।
ण घडइ [2]गद्दहकंठे विमला णोमालिआ माला ॥ २१ ॥
[ कुत्र रुक्मिणी सुरूपा कुत्र दमघोषनन्दनो मन्दः ।
न घटते[3] गर्दभकण्ठे विमला नवमालिकामाला ॥ ]

सुपर्णः—वन्यया मालया खलु सुलभोऽयं कौस्तुभीकण्ठो नान्यया ।

( नेपथ्ये )

जीयादुच्चैरखिलतरुणीमण्डलाकृष्टिविद्या-
वैदग्धीनां निधिरनवधिर्यादवाम्भोधिचन्द्रः ।
सङ्ग्रामान्तःपुरभुवि परो हन्त यं प्रेक्ष्य दूरा-
दस्त्रीलोकोऽप्यतनु चकितः स्त्रीस्वरूपं बिभर्त्ति ॥ २२ ॥

कृष्णः—( सव्यतो विलोक्य ) कथमयं मौक्तिकचूडो नाम माथुरो बन्दी भोगावलीं पठति ।

( पुनस्तत्रैव )

स्फुरन्मणि-सराधिकं नवतमालनीलं हरे-

---

कुण्डिनेति । हे सखि तस्याः हतदैवः[4] विलोमयति प्रतिकूलो भवति ॥ २० ॥

कहेति ॥ २१ ॥

कौस्तुभी श्रीकृष्णस्य कण्ठो वनमालयैव सुलभो नान्यया ।

जीयादिति । यं श्रीकृष्णं पुरोऽग्रे दूरादेव प्रेक्ष्य अस्त्री अस्त्रयुक्तः पक्षे अस्त्री स्त्रीभिन्नः पुरुषः अतनुचकितः अतिसम्भ्रान्तः सन् स्त्रीस्वरूपं नारीवेषं पक्षे अतनुः कन्दर्पस्तेन चकितः सन् स्त्रीभावं मनसैव बिभर्त्ति स जीयात् ॥ २२ ॥

विरुदावलीप्रभृतीनामन्यतमा नायकगुणोत्कर्षिणी कलितोत्कलिका पद्ययुक्ता भोगावली । तां पठति माथुरो बन्दी । स्फुरन्निति । हरेर्वक्षःस्थलमभ्रं मेवमिवा-

---

१. पुंडरीणअणअ—अ० । २. गड्डहकंठे—व० । ३. घटति—व० ।
४. हतदैवं विलोमयति प्रतिकूलं भवति—व० ।

रुदूढघनकुङ्कुमं जयति हारि वक्षःस्थलम् ।
उडुस्तवकितं सदा तडिदुदीर्णलक्ष्मीभरं
यदभ्रमिव लीलया स्फुटमदभ्रमुद्भासते ॥ २३ ॥

कृष्णः—( सव्यामोहम् ) हा प्रेयसि राधिके, हा वृन्दावनकल्पवल्लि, हा विशाखासखि, कुत्रासि ! ( इति सोत्कम्पं खगेन्द्रमालम्बते )।

सुपर्णः—( स्वगतम् ) दुरूहायां गम्भीरलीलाम्बुधेरस्य केलिवेलायां मादृशोऽपि निमज्जति कस्तत्राप्यन्यो वराकः । ( प्रकाशम् ) देव, समाश्वसिहि समाश्वसिहि ।

( कृष्णः समाश्वस्य निश्वसिति )

( नेपथ्ये )

धात्रेयी करपुटसम्भृताग्रहस्ता पर्यस्ता कुलजरतीद्विजाङ्गनाभिः ।
दूरेण प्रचुरभटैः परीयमाणा वैदर्भी प्रसरति पार्वतीग्रहाय ॥ २४ ॥

कृष्णः—सखे सुपर्ण, हताशेन रुक्मिणा दुर्गमं कृतमेतद्दुर्गामन्दिरम् । तदेहि नटवेषेणावामन्तः प्रविशावः । ( इति निष्क्रान्तौ )

( ततः प्रविशति यथानिर्दिष्टा चन्द्रावली )

चन्द्रावली—हला माहवि, सुदं मए भादरेण से भद्दआली समाराहणस्स कोडिहोमं आरद्धं । [ सखि माधवि, श्रुतं मया भ्रात्रा मे भद्रकाली-समाराधनाय[1] कोटिहोममारब्धम् । ]

---

दभ्रमनल्पमुद्भासते । वक्षःस्थलं कीदृशम् ? स्फुरता मणिसरेण हारेणाधिकम् । पक्षे—स्फुरन्मणि राधिकासहितम् । सराधिकमित्यनेन राधिकास्फूर्तिः ॥ २३ ॥

सव्यामोहं हा प्रेयसीत्यादिना फूत्कारं कृत्वा । पतनशङ्कया सोत्कम्पं यथा स्यात्तथा गरुडमालम्बते । अस्य केलिवेलायां केलिरूपसमुद्रस्य विकारजन्यतरङ्गातिशये । 'अध्यम्बुविकृतौ वेला कालमर्यादयोरपि ।' अनेन व्रजपरिकरनिष्ठप्रेमकेल्यादौ अन्यथा······स्थितान्तरङ्गपरिकरस्यापि सचमत्कारविस्मय एव भवति न तु प्रवेशः । ऐश्वर्यज्ञानस्यैव प्राधान्यात्तादृशप्रेम्णोरनुभवाभावाच्च । समाश्वसिहि इत्यारभ्य समाश्वस्य निश्वसितीत्यन्तेन श्रीराधिकाविरहजन्यदुःखस्यापारत्वमेव ध्वन्यते ।

धात्रेयीति । धात्र्याः पुत्री धात्रेयी तस्याः करपुटेन सम्यग्धृतोऽग्रहस्तो हस्तस्याग्रो यस्याः सा । पर्यस्ता व्याप्ता । वैदर्भी रुक्मिणी ॥ २४ ॥

यदि स्वकीयवेशेन प्रविशावस्तदाऽधुनैव विपक्षाणां सम्भ्रमो भविष्यति तस्मान्नटवेशेनेत्यादि । हे भर्तृदारिके राजपुत्रि । गभीरेति—कृष्णो यदि मां नाङ्गीकरिष्यति तदात्रैव प्रवेक्ष्यामीति मनोगतम् ।

---

१. समाराधनस्य—अ० ।

माधवी—भट्टदारिए, बह्मणाओ क्खु एव्वं कधेंति। [भर्तृदारिके, ब्राह्मणाः खल्वेवं कथयन्ति।]

चन्द्रावली—(स्वगतम्) गहिरं णं होमकुंडं सुणिअ ऋचेअ पत्थिदह्मि। [गभीरमेतद्धोमकुण्डं श्रुत्वैव प्रस्थितास्मि।]

माधवी—भट्टदारिए, तधा सिणिद्धेणा वि पुरिसुत्तमेण किंत्ति तुमं ण उद्दिसीअसि। [भर्तृदारिके, तथा स्निग्धेनापि पुरुषोत्तमेन किमिति त्वं नोद्देश्यसे?]

चन्द्रावली—(संस्कृतेन)

शरणमिह यो भ्रातुस्तस्य प्रतीपविधायिता
हितकृदपि या देव्यास्तस्याः समग्रमुपेक्षणम्।
गतिरविकला यो मे तस्य प्रियस्य च विस्मृति-
र्बत हतविधौ वामे सर्वं प्रयाति विपर्ययम्॥ २५॥

माधवी—एदं पासादं पविसिअ चंदभाअं णिवेदेह्म। [एतं प्रासादं प्रविश्य चन्द्रभागां निवेदयावः।]

चन्द्रावली—अज्जे [1]भग्गइ, वंदावेहि चंदभाअं। [आर्ये भार्गवि, वन्दावहे चन्द्रभागाम्।]

भार्गवी—देवि चन्द्रभागे, नन्दय विदर्भनन्दिनीं परमाभीष्टवरेण। (इति वन्दनं कारयति)

चन्द्रावली—(सोपालम्भं संस्कृतेन)

आकौमारं भगवति मया हन्त कृष्णस्य हेतो-
र्विस्रम्भेण प्रवणमनसा यत्त्वमाराधितासि।

---

शरणमिति। हतविधौ वामे सति सर्वं विपर्ययं याति। विपर्ययमेवाह—यो भ्राता शरणं रचिता तस्य भ्रातुः प्रतिकूलता। या हितकृद् देवी। तस्याः देव्याः। मे यः प्रियस्तस्य गतिः गमनमविकला वैकल्यादिरहिता। तस्य प्रियस्य च विस्मृतिः। गुणातिपातं नाम नाटकभूषणमिदं द्विप्रकारं तस्य द्वितीयं प्रकारमिदम्। तथा च—'कश्चित्तु—'गुणातिपातं कार्यं यद्विपरीतं गुणान् प्रति' इत्याह (ना० चं० का० १७०)। अत्र गुणवैपरीत्येन गुणातिपातः॥ २५॥

प्रासादं देवीमन्दिरम्। चन्द्रभागां चण्डिकाम्। परमाभीष्टवरेण श्रीकृष्णदर्शनेन।

आकौमारमिति। तस्याराधनस्य प्रथीयान् पाकः प्रत्यासन्नः। दाक्षिण्या-

---

१. भग्गावि- अ०।

प्रत्यासन्नः सरभसमसौ तस्य पाकः प्रथीयान्
मां दाक्षिण्याद्यदिह भवती कृष्णवर्त्मन्यनैषीत् ॥ २६ ॥

माधवी—पेक्ख पेक्ख। प्पसादाहिमुहीव्व संवुत्ता रुद्दाणी। [ पश्य पश्य। प्रसादाभिमुखीव संवृत्ता रुद्राणी। ]

चन्द्रावली—अज्जे भग्गवि, तुम्हें एत्थ सव्वाणीं अब्भत्थेध। अहं गदुअ कुंडत्थिदं भअवंतं पावअं परिक्कमिस्सं। [ आर्ये भार्गवि, त्वमत्र शर्वाणीमभ्यर्थय। अहं गत्वा कुण्डस्थितं भगवन्तं पावकं परिक्रमिष्यामि। ]

( ततः प्रविशतो नर्तकवेषौ कृष्णसुपर्णौ )

कृष्णः—

पर्यशीलि पशुपालघटायां केलिरङ्गघटनाय मया यः।
सुष्ठु सोऽयमकरोत्परदुर्गे वेशयन्सचिवतां नटवेषः ॥ २७ ॥

सुपर्णः—देव, गाढं जितानि नटवेषेणारीणां नेत्राणि नारीणान्तु रञ्जितानि।

कृष्णः—सखे विहङ्गपुङ्गव, पश्य प्रादुर्भवन्ति भव्यानि शकुनानि।

सुपर्णः—

नभसि रभसवद्भिः श्लाघ्यमाना मुनीन्द्रै-
र्महितकुवलयाक्षी कीर्तिशुभ्रांशुवक्त्रा।
नृपकुलमिह हित्वा चेदिराजप्रधानं
मुरदमन गमिष्यत्युत्सुका त्वां जयश्रीः ॥ २८ ॥

---

दानुकूल्यात् कृष्णवर्त्मन्यग्नावनैषीत्। पक्षे कृष्णस्य वर्त्मनि पथि ॥ २६ ॥

पर्यशीलीति। यो नटवेषो मया गोपघटायां पर्यशीलि सोऽयं नटवेषः शत्रुसैन्ये प्रवेशयन् सचिवतामकरोत्। अधिबलं नाम गर्भसन्ध्यङ्गमिदम्। तथा च—'बुधैरधिबलं प्रोक्तं कपटेनाधिवञ्चनम्।' ( ना० चं० का० ८८ ) अत्र नटवेषकपटेन परवञ्चनमधिबलम् ॥ २७ ॥

नभसीति। मुनीन्द्रैः श्लाघ्यमाना। महितानि सम्मानितानि कुवलयस्य भूमण्डलस्याक्षीणि यया सा जयश्रीः। पक्षे—महिता श्रेष्ठा चासौ कुवलयाक्षी चेति। जयश्रीरूपा चन्द्रावली उत्सुका सती त्वां गमिष्यति। पताकास्थानकमिदम्। तथा च—

अर्थस्य तु प्रधानस्य भाव्यवस्थस्य सूचकम्।
यदागन्तुकभावेन पताकास्थानकं हि तत् ॥
एतद् द्विधा तुल्यसंविधानं तुल्यविशेषणम्।
तत्राद्यं त्रिप्रकारं स्यात् द्वितीयन्त्वेकमेव हि ॥

( ना० चं० का० १८६–१८८ )

कृष्णः—सखे, पश्य पश्य ।

> क्ष्वेडामखण्डसमराः कलयन्ति शूराः
> सङ्गीतिनः स्वरघटामनुघट्टयन्ति ।
> उच्चैः पठन्ति शुभसूक्तकुलं द्विजेन्द्रा
> राष्ट्राणि कुण्डिनपुरी बधिरीकरोति ॥ २९ ॥

सुपर्णः—( पुरो दृष्ट्वा ) मृडानीमन्दिरादेषा कुण्डिनेन्द्रपुत्री बहिर्निष्क्रामति ।

कृष्णः—काममितः पराङ्गनाविलोकनदुर्विलासान्निवृत्तिरेव श्रेयसीति ( मुखं व्यावर्त्य ) सखे, भवतैव पक्षाञ्चलेनाकृष्य नृपाभ्यामियं समर्प्यताम् ।

सुपर्णः—( निर्वर्ण्य सविस्मयम् )

> सौन्दर्याम्बुनिधेर्विधाय मथनं दम्भेन दुग्धाम्बुधे-
> र्गीर्वाणैरुदहारि [१]हारिचरिता या सारसम्पन्मयी ।
> सा लक्ष्मीरपि चक्षुषां चिरचमत्कारक्रियाचातुरीं[२]
> धत्ते हन्त तथा न कान्तिभिरियं राज्ञः कुमारी यथा ॥ ३० ॥

---

इदन्तु द्वितीयं तुल्यविशेषणम् । यथा तत्रैव—

> द्वयोर्वचनविन्यासः सुश्लिष्टः काव्ययोजितः ।
> उपन्यासेन युक्तस्तु चतुर्थं परिकीर्तितम् ॥ ( ना० चं० का० १९२ ) इति ।

अत्र सुपर्णस्य द्व्यर्थवचनेन चन्द्रावलीप्राप्तिसूचनात्तुल्यविशेषणम् ॥ २८ ॥

क्ष्वेडामिति । शूराः क्ष्वेडां सिंहनादं कुर्वन्ति । सङ्गीतिनः स्वरघटामनुघट्टयन्ति सञ्चारयन्ति । द्विजेन्द्राः शुभवेदकुलं पठन्ति । एषां ध्वनिना युक्ता कुण्डिनपुरी राष्ट्राणि देशान् बधिरीकरोति ॥ २९ ॥

परस्त्रीदर्शनदुर्विलासान्निवृत्तिः श्रेयसीति मुखं व्यावर्त्याह—नृपाभ्यां क्रथकैशिकाभ्यामियं रुक्मिणी समर्प्यतामिति नित्यसिद्धसाधनसिद्धस्वप्रेयसीभिन्नस्त्रीषु श्रीकृष्णस्य स्वाभाविक्येव तादृशी प्रकृतिः । अत एवाग्रे रुक्मिण्याः सौन्दर्यकथनानन्तरं स्वयमेव वक्ष्यति—यदेष रूपमात्रेण न हार्यो हरिरिति ।

सौन्दर्येति । इयं राज्ञः कुमारी यथा चक्षुषां चिरचमत्कारक्रियाचातुरीं धत्ते तथा सा प्रसिद्धा लक्ष्मीर्न धत्ते । कीदृशी—सौन्दर्याम्बुनिधेः मथनं विधाय गीर्वाणैर्या लक्ष्मीरुदहारि उद्धृता । उदाहरणं नाम गर्भसन्ध्यङ्गमिदम् । तथा च—

> 'सोत्कर्षवचनं यत्तु तदुदाहरणं मतम् ।' ( ना० चं० का० ८४ )

अत्र चन्द्रावलीरूपोत्कर्षकथनादुदाहरणम् । ननु सर्वज्ञस्य भगवतः एतादृश-

---

१. हारि परितो इति नाटकचन्द्रिकास्थपाठः । २. चातुरी-अ० ।

कृष्णः—सखे, भवतु। किमेतेन। यद्येष रूपमात्रेण न हार्यो हरिः।

चन्द्रावली—हला माहवि, सा वुंदावण-बीअ-संभूदो मे उलपोदो तुए पालणिज्जो। [सखि माधवि, स वृन्दावनबीजसम्भूतो मे कुलपोतस्त्वया पालनीयः।]

माधवी—(सास्रम्) भट्टिदारिए, प्पसीद प्पसीद। पडिवालेहि सुनंदं जं एत्थ मज्झवट्टिणी भअवदी विहाअरी। [भर्तृदारिके, प्रसीद प्रसीद। प्रतिपालय सुनन्दं यदत्र मध्यवर्तिनी भगवती विभावरी।]

चन्द्रावली—मुद्धे, अंतेउरे ण क्खु सुलहं एदं मंगलं मे अमिअकुंडं। [मुग्धे, अन्तःपुरे न खलु सुलभमिदं मङ्गलं मेऽमृतकुण्डम्।]

(इति संस्कृतेन)

त्वद्दिग्बोध्येऽप्यकुशलमतिः सङ्गमय्य स्वगोष्ठे
दूराद्दूरं किमिति कृपया पूर्वमङ्गीकृताहम्।
नीत्वा देशान्तरमिदमपक्षिप्य सङ्गादिदानीं
किं वा दामोदर गुणनिधे हा त्वया विस्मृतास्मि ॥ ३१ ॥

---

वाक्यचेष्टादिकं कथं सङ्गतं स्यात्? उच्यते—लीलाशक्त्यैव परस्परविरहादिकृत-परमोत्कण्ठादिकमुत्पाद्य कस्मान्मिलनादिजनितसुखस्य परमकाष्ठानुभवार्थं लीला-सौष्ठवार्थञ्च ज्ञानशक्तेरावरणं भगवदिच्छयैव कृतम्। लीलाक्रान्तान्तःकरणे का कुत्र वर्तते, किं करोतीत्याद्याकारकानुसन्धानमेव न भवतीति सिद्धान्तः।

भवतु। एतादृशसौन्दर्यमस्या एतेन रूपमात्रेण हरिरहं हार्यो न। प्रेमाधीन एवाहं न तु रूपाद्यधीनः। स तु प्रेमा व्रजसुन्दरीष्वेव नान्यत्र। अत एव पराङ्गना-विलोकनान्निवृत्तिरेव श्रेयसीत्युक्त्वा पश्चाच्छलेनाकृष्येयं रुक्मिणी नृपाभ्यां क्रथकै-शिकाभ्यां समर्प्यतामित्युक्तं पुरेति दिक्॥ ३० ॥

सखीति। मम त्वधुनाग्निप्रवेश एव श्रेयान् कृष्णकृपाराहित्यादिति ध्वनिः। प्रतिपालय प्रतीक्षां कुरु। विभावरी रात्रिः। तव पत्रहारी सुनन्दनामा ब्राह्मणो नागतः। विवाहस्य एकरात्रिर्मध्ये विलम्बोऽप्यस्ति। कथमेवमाकुलासीति भावः। सुलभमिति। श्रीकृष्णस्य प्राप्त्यभावात् स्वस्य मरणमेव मङ्गलमिति निश्चयादग्निकुण्डमेवामृतकुण्डमिवाऽभूत्॥

त्वदिति। त्वद्दिग्बोधेऽप्यकुशलमतिरहं दूराद्दूरदेशात् स्वगोष्ठे सङ्गमय्य प्रापयित्वा पूर्वमङ्गीकृता। इदानीं सङ्गादपक्षिप्येदं देशान्तरं नीत्वा प्रापयित्वा किं वा कथं वा विस्मृतास्मि॥ ३१ ॥

( नेपथ्ये कलकलः )

कृष्णः—पौरस्त्रीणामौत्सुक्यमिदम् ।

सुपर्णः—देव, पश्य पश्य ।

वक्त्राणि भान्ति परितो हरिणेक्षणाना-
मारूढहर्म्यशिरसां भवदीक्षणाय ।
यैर्निर्मितानि तरसा सरसीरुहाक्ष
चन्द्रावलीपरिचितानि नभस्तलानि ॥ ३२ ॥

कृष्णः—( सोत्कण्ठम् ) हा प्रिये चन्द्रावलि, हा पद्मासखि, कथं कठोरेण मया विस्मृतासि । तदद्यैव द्वारवतीमासाद्य चरानाचरिष्यामि ।

चन्द्रावली—णं समिद्धं पुरदो कुंडं पेक्खंती णिव्वुदह्मि । [ ननु समिद्धं पुरतः कुण्डं पश्यन्ती निर्वृतास्मि ]

कृष्णः—( साशङ्कम् ) सखे, कथमनुभूतपूर्वेव कापि सिञ्जितसारणी प्रसह्य मामार्द्रीकरोति ।

सुपर्णः—निवेदितमेव देवस्य यदत्र जगत्त्रयेऽप्यस्य वाढमनर्घ[1]-कुमारीरत्नस्य पश्यामि नान्यमर्घहरम् ।

कृष्णः—तर्हि दृशा परीक्षणीयम् । ( इत्यपाङ्गं सञ्चारयन् ) अये ! कथं गोकुलविलासिनी साधारणमाधुर्यमुद्रामण्डिता कुमारी हृदयं ममोन्मादयति ! ( पुनः सानुरागं निरूप्य ) हन्त ! कथं सैवेयं मे प्राणवल्लभा । ( इति ससम्भ्रममभिनीय )

---

वक्त्राणीति । हरिणेक्षणानां वक्त्राणि भान्ति यैर्वक्त्रैश्चन्द्रावलीभिः परिचितानि नभस्तलानि निर्मितानि । अक्षरसंघातं नाम नाटकभूषणमिदम् । तथा च—'वाक्यमक्षरसंघातो भिन्नार्थं श्लिष्टशब्दकम् ।' ( ना० चं० का० १५५ ) इति । अत्र चन्द्रावलीपरिचितानीत्यत्र चन्द्रावलीनामप्रतिभानादक्षरसंघातः ॥३२॥

इङ्गितवद्वाक्यं श्रुत्वा स्वत एव सोत्कण्ठं यथा स्यात्तथाऽऽह—हा प्रियेत्यादि । चरानाचरिष्यामि प्रेरयिष्यामि । अनेन भक्तानां श्रीकृष्णसन्दर्शनेऽप्युत्कण्ठान्तरं श्रीकृष्णस्यापि भक्तान् स्वनिकटे आनेतुमुत्कण्ठा भवतीति विज्ञापितम् ।

समिद्धं प्रज्वलितम् । अनुभूतपूर्वा कापि सिञ्जितसारणी क्षुद्रकुल्या प्रसह्य हठान्मामार्द्रीकरोति । 'कुल्याल्पा कृत्रिमा सरित्' इत्यमरः । कुमारीरत्नस्यार्घ्यहरं त्वां विना नान्यं पश्यामि । अर्घो मूल्यम् । रूपं नाम गर्भसन्ध्यङ्गमिदम् । तथा च 'रूपं वाक्यं वितर्कवत्' ( ना० चं० का० ८३ ) इति । अत्र चन्द्रावलीनूपुरादिसिञ्जितश्रवणात् कृष्णस्य वितर्को रूपम् ।

---

1. मनर्घस्य कुमारी—अ० ।

चेतश्चन्द्रमणेर्द्रवं विरचयन्नुच्चैः स्मराम्भोनिधेः
संरम्भं वितनोति नेत्रकुमुदस्यामोदमध्यस्यति ।
उल्लासं परितः प्रपञ्चयति मे रोमौषधीनां च या
सेयं चन्दनपङ्कशीतलकरा लब्धाऽद्य चन्द्रावली ॥ ३३ ॥

तदभ्याशमभ्युपेत्य माधुर्यमस्याः पर्यालोचयामीति । ( इति परिक्रामति )

माधवी—( कृष्णं विलोक्य । स्वगतम् ) कुदो आअदो एसो तिल्लोअसुंदरो णट्टराओ ! [ कुत आगत एष त्रैलोक्यसुन्दरो नटराजः ! ]

चन्द्रावली—भअवं हव्ववाह, तस्सकं दप्पकोडिसुंदरस्स पआरविंदजुअलस्स पास्से इमं वहेहि तदेक्कसरणं जणं । [ भगवन् हव्यवाह, तस्य कन्दर्पकोटिसुन्दरस्य पदारविन्दयुगलस्य पार्श्वे इमं वह तदेकशरणं जनम् । ] ( इति पावकं प्रणम्य ) हा ! भअवदि पोण्णमासि एत्थ ओसरे कहिं गदासि ? [ हा ! भगवति पौर्णमासि, अस्मिन्नवसरे कुत्र गतासि ? ]

कृष्णः—( सखेदमात्मगतम् ) हन्त ! सत्यमेव महासाहसे कृताध्यवसाया सेयमाशुशुक्षणिं प्रदक्षिणीकरोति । तदहमुपेत्य भुजाभ्यामावृणोमि ।

चन्द्रावली—( बाष्पधारामभिनयन्ती सवैक्लव्यम् ) हा वहिणि राहे ण जादु मिलिदासि । हा पिअसहि पउमे कहिं वट्टसि । हा अम्म गोउलेसरि ण दिट्ठासि । हा पराणणाध सिअंड···[ हा भगिनि राधे, न जातु मिलितासि । हा प्रियसखि पद्मे, कुत्र वर्तसे । हा मातः गोकुलेश्वरि, न दृष्टासि । हा प्राणनाथ शिखण्ड··· । ( इत्यर्द्धोक्ते वाक्स्तम्भं नाटयन्ती सव्यामोहम् )

मंदम्हिदमअरंदे पअरमअरकण्णिआसिरी सरणे ।
तस्सिं विअ मुहपदुमे भमरउ मह पडिभअं णअणं ॥ ३४ ॥

---

चेत इति । येयं चेतश्चन्द्रकान्तमणेर्द्रवं विरचयति । संरम्भं स्मरक्षोभं वितनोति सैव चन्द्रावली लब्धा ॥ ३३ ॥

तत् तस्मादस्या अभ्याशं निकटम् । आशुशुक्षणिमग्निम् । जातु कदापि न मिलितासीत्यनेन विन्ध्यकन्यास्वरूपायां राधायां विन्ध्यकन्यास्वरूपायास्तस्याः भगिनीत्वेनाभिमानं भवेत् तत्तु वृषभानुकन्यायां तथैव राधायाश्चन्द्रावल्यामित्यग्रे व्यक्तो भविष्यति । तस्यां तु परकीयायां द्वेष एव लीलासौष्ठवार्थं योगमायाकृत इति बोध्यम् । शिखण्डचूड इति वक्तव्ये शिखण्ड इत्यर्धोक्ते वाक्स्तम्भं नाटयन्ती सव्यामोहमाह ।

[ मन्दस्मितमकरन्दे प्रवरमकरकणिकाश्रियः शरणे ।
तस्मिन्नेव मुखपद्मे भ्रमरतु मम प्रतिभवं नयनम् ॥ ]

कृष्णः—( ससम्भ्रमं कण्ठे परिष्वज्य ) कुरङ्गाक्षि, मा ज्वालय जगन्ति ।

माधवी—( सरोषम् ) रे महासाहसिअ धिठ्ठ, णच्चणजुअराअ, मुंच णं महाराअपुत्तिअं । [ रे महासाहसिक धृष्ट नर्तकयुवराज, मुञ्चैनां महाराजपुत्रिकाम् ] ।

कृष्णः—( सास्रम् ) ।

अयं कण्ठे लग्नः शशिमुखि जनस्ते प्रणयवान्
यदप्राप्त्या धन्यां तनुमतनुरूपां तृणयसि ।
प्रसीदाद्य प्राणेश्वरि विरम मास्मिन्ननुगते
कृथाः पत्यावत्याहितमिदमुरो मे विदलति ॥ ३५ ॥

चन्द्रावली—( अश्रुतिमभिनीय ) माहवि, मुंच मुंच । मा दुक्खावेहि । जं सभाइदबहुपच्चूहो एसो मुहूत्तो । [ माधवि, मुञ्च मुञ्च । मा दुःखापय । यत्सम्भावितबहुप्रत्यूहो एष मुहूर्त्तः । ] ( इति निजाङ्गुलेराभरणमाकृष्य ) हला, एसा रअणमुद्दिआ तस्स पुरिसत्तमस्स दिठ्ठिमग्गं जधा लहेहि तधा तुए कादुव्वं । [ सखि, एषा रत्नमुद्रिका तस्य पुरुषोत्तमस्य दृष्टिमार्गं यथा लभते तथा त्वया कर्त्तव्यम् । ] ( इति हरिहस्ताङ्गुलौ मुद्रां निवेशयन्ती सशङ्कमात्मगतम् ) कधं कडिणो हत्थस्स फंसो ! ( कथं कठिनः हस्तस्य स्पर्शः ) ( इत्यश्रुधारामुन्मृज्य पश्यन्ती सोत्क्रोशम् ) कधं सो ज्जेव्व मे जीविदेसरो मं परिरंभिअ वाहाएदि । [ कथं स एव मे जीवितेश्वरो मां परिरभ्य बाष्पायते । ] ( इत्यानन्दमूर्च्छां नाटयन्ती भूतटे पतति ) ।

माधवी—( सानन्दम् ) अम्महे अच्चरिआ विहिणो चरिआ । [ अहो आश्चर्या विधातुश्चर्या । ]

( ततः प्रविशति भीष्मकेणानुपज्यमाना पौर्णमासी )

---

अयमिति । यदप्राप्त्या यस्य ममाप्राप्त्या अतनुरूपां कन्दर्परूपामतिरूपवतीञ्च धन्यां तनुं शरीरं तृणयसि तृणमिवाचरसि । सोऽयं जनस्ते कण्ठे लग्नः । अद्याधुना प्रसीद । अस्मिन्पत्यावत्याहितं मा कृथाः । मे ममेदमुरो विदलति विदीर्णं भवति । अनुनयो नाम नाटकभूषणमिदम् । तथा च—'अभ्यर्थनापरं वाक्यं विज्ञेयोऽनुनयो बुधैः ।' ( ना० चं० का० १७५ ) अत्र कृष्णेन चन्द्रावलीप्रार्थनमनुनयः ॥ ३५ ॥

अहो आश्चर्या विधातुश्चर्या । उदञ्चन्निति । मोहान्धा वरतनुः रुक्मिणी हरिमनुसरन्ती अजीवत् हरिम् । वारां पूरञ्च कीदृशम् ? उदञ्चन्माधुर्यमित्यादि ।

पौर्णमासी—

> उदञ्चन्माधुर्यं विकसितनवाम्भोरुहपदं
> नुदन्तं सन्तापानविहतरथाङ्गप्रणयिनम् ।
> अजीवन्मोहान्धा हरिमनुसरन्ती वरतनु-
> र्यथा वारां पूरं स्थलविलुठदङ्गी शफरिका ॥ ३६ ॥

( इत्युपसृत्य ) वत्से चन्द्रावलि, माधवादवाप्तप्रसादया त्वया सन्दीपितेयं सान्दीपनिजननी क्षणदा । तदुत्थीयताम् ( इति भुजाभ्यामुत्थापयति ) ।

चन्द्रावली—( पुरो दृष्ट्वा स्वगतम् ) कधं एत्थ तादो मे विदब्भणाधो । [ कथमत्र तातो मे विदर्भनाथः । ] ( इति लज्जामभिनीय पौर्णमासीमन्तरा करोति । )

कृष्णः—( सविस्मयम् ) भगवति, कथं त्वमत्रागतासि ?

पौर्णमासी—हन्त गोकुलचन्द्र, चन्द्रावलीस्नेहेन ।

भीष्मः—( सादरम् )

> अविदितस्तनयामनयान्नय-
> न्नुपकृतिं कृतवान् मम जाम्बवान् ।
> मुनिमनःप्रणिधेयपदाम्बुज-
> स्त्वमसि येन वरो दुहितुर्वरः ॥ ३७ ॥

पौर्णमासी—कुण्डिनेन्द्र, सत्यं पुण्यवतां शिखामणिरसि । तदियं समर्प्यतां निजकुलकैरवचन्द्रिका चन्द्रावली राजेन्द्राय ।

---

का इव ? शफरिका वारां पूरं जलसमूहमनुसरन्ती जीवति यथा ॥ ३६ ॥

हे चन्द्रावलि सान्दीपनिजननी पौर्णमासी तिथिरूपा । स्वयञ्च कीदृशी—क्षणदा रात्रिरूपा । पक्षे उत्सवदा । माधवात् प्राप्तप्रसादया त्वया सन्दीपिता प्रकाशिताऽभूत् । यथा पौर्णिमाया रात्रेः प्रकाशकश्चन्द्रस्तथा मम त्वमित्यर्थः । माधवाद्वसन्तात् । पक्षे कृष्णात् ।

अविदित इति । अविदितो जाम्बवाननयादनीत्या तनयां रुक्मिणीं नयन् ममोपकृतिं कृतवान् । येन हेतुना दुहितुर्वरः कन्यास्वामी वरः श्रेष्ठस्त्वमसि । कीदृशस्त्वम्—मुनिरित्यादि । संग्रहो नाम गर्भसन्ध्यङ्गमिदम् । तथा च 'संग्रहः सामदानार्थसंयोगः परिकीर्तितः ।' ( ना० चं० का० ८६ ) अत्र साम कन्यासमर्पणादिना संग्रहः ॥ ३७ ॥

इयं चन्द्रावली राजेन्द्रावली राजेन्द्राय श्रीकृष्णाय समर्प्यताम् । तां जीवित-

कृष्णः—( स्वगतम् ) तां जीवितवल्लभामन्तरेण चन्द्रावलीमङ्गीकर्त्तु[१] प्रवर्तमानमपि मानसं मे नापराध्यति । यदियं तस्याः सोदरा ।

भीष्मः—( सविनयम् )

अयमिह किल कन्याबान्धवानां निबन्धः
समुचित इति लक्ष्मीकान्त विज्ञापयामि ।
मम दुहितुरनुज्ञोल्लङ्घनादङ्गनायाः
कथमपि न परस्याः पाणिसङ्गो विधेयः ॥ ३८ ॥

( कृष्णः पौर्णमासीमुखमीक्षते )

पौर्णमासी—मुकुन्द, गोकुलकुमारीकुलानि चन्द्रावलीमात्रशेषाणि दुर्विदग्धेन विधिना कृतानि । तदत्र का क्षतिः !

सुपर्णः—राजन्नवधीयताम् ।

श्रीनाथे विनयभरेण नाथितेऽस्मिन्
वैदर्भ्या निजसुहृदङ्गसङ्गमाय ।
तत्रायं भजति भयङ्करः प्रकामं
विश्रामं क्षितिपतिचन्द्र ते निबन्धः ॥ ३९ ॥

भीष्मः—तथाऽस्तु । ( इति सादरमभ्युपेत्य ) देव, कृपया परिगृह्यतामियं परिचर्योचिता किङ्करी । ( इति चन्द्रावलीमर्पयति ) ।

---

वल्लभां राधिकामन्तरेण विनापि मम मानसं चन्द्रावलीमङ्गीकर्त्तुं प्रवर्तमानं नापराध्यति । यद्यस्मादियं चन्द्रावली तस्या राधायाः सोदरा भगिनी ।

अयमिति । मम कन्याया अनुमतिं विना अन्याया अङ्गनाया पाणिसङ्गो विवाहस्त्वया न विधेयः न कर्त्तव्यः ॥ ३८ ॥

पौर्णमास्याः मुखात् स्वाभिप्रायं वक्तुं तस्या मुखमीक्षते । चन्द्रावलीमात्रशेषाणि गोकुलकुमारीकुलानीत्यनेन गोकुलकुमारीं विनाऽन्या तत्र ग्राह्या न । तत्तस्मादत्र का क्षतिः । लेशो नाम नाटकभूषणमिदम् । तथा च—'लेशः स्यादिङ्गितज्ञानकृद्विशेषणवद् वचः ।' ( ना० चं० का० । १७६ ) इति । अत्र चन्द्रावलीमात्रावशेषाणीति विशेषणवद्वचः कृष्णेङ्गितज्ञापकतया संवृत्तत्वाद् लेशः ।

श्रीनाथे इति । निजसुहृदामङ्गसङ्गमाय वैदर्भ्या रुक्मिण्या श्रीनाथेऽस्मिन् कृष्णे नाथिते प्रार्थिते सति तव भयङ्करोऽयं निबन्धः विश्रामं भजति ॥ ३९ ॥

परिचर्योचिता किङ्करी परिगृह्यतामित्युक्त्वेति । एतद् ग्रन्थानुसारेण समर्पणमात्रं[१] न तु विप्राग्न्यादिसाक्षिपूर्वको विवाहः । सत्यभामादिरूपराधिका-

---

१. समर्पणं–अ० ।

कृष्णः—( सादरमङ्गीकृत्य ) राजन्ननुजानीहि । द्वारकां प्रयामि ।

( इति सपरिवारो निष्क्रान्तः )

( नेपथ्ये )

सप्तिः सप्ती रथ इह रथः कुञ्जरः कुञ्जरो मे
तूणस्तूणो धनुरुत धनुर्भोः कृपाणी कृपाणी ।
का भीः का भीरयमयमहं हा त्वरध्वं त्वरध्वं
राज्ञः पुत्री बत बत हृता कामिना वल्लवेन ॥ ४० ॥

भीष्मः—कथमुपात्तसम्भ्रमाणां राज्ञां कोलाहलः प्रथीयानभूत् । ( नेपथ्याभिमुखमवलोक्य ) कथं यदुसैन्यमाकर्षन्[1] सङ्कर्षणः समगंस्त । ( पुनरवधाय[2] । सस्मितम् )

बिले क नु विलिल्यिरे नृपपिपीडिकाः पीडिताः
पिनष्मि जगदण्डकं न न हरिः क्रुधं धास्यति ।

---

प्रभृतीनामपि पित्रादिना समर्पणम् । ततो [3]नववृन्दावने मिलनादिरेव न तु विवाहः । अतो द्वारकायामपि रागेणैव लोकधर्माद्युल्लंघनपूर्वकं कयापि परिपाट्या मिलनमेव । क्वापि शास्त्रे लोके वा नायिकायाः स्वविवाहार्थं पत्रलिखनादिपूर्वकं नायके दूतप्रेषणं तदलाभसम्भावनायां स्वप्राणत्यागचेष्टादिकं न दृष्टं न श्रुतञ्च । यत्तु व्रजराजादेरागमनानन्तरं विवाहादिकं तत्तु सर्वथा परिपूर्णस्य श्रीकृष्णस्योत्सवमिवाह्लादयुक्तैः मात्रादिभिः कृतम् ।

सप्तिरिति । कामिना वल्लवेन राज्ञः पुत्री हृता इत्यर्थे हृता हृता । 'आवाधे लोपः पुंवच्च'···। सप्तिः सप्तीत्यादि विपक्षराज्ञां सम्भ्रमजन्यवाक्यम् । सप्तिमेंऽश्वमानय इति वक्तव्ये सम्भ्रमात् सप्तिः सप्तीत्यादिरेवाह । सप्तिरश्वः । अथ रथः । कुञ्जरः हस्ती तूणो धनुः । कृपाणीत्यादि सम्भ्रमजन्यवाक्यं श्रीकृष्णेन सह युद्धार्थम् । सम्भ्रमो नाम गर्भसन्ध्यङ्गमिदम् । तथा च—'शत्रुव्याघ्रादिसम्भूता शङ्का स्यादिह सम्भ्रमः ।' ( ना० चं० का० ९० ) । अत्र शत्रुजन्यसम्भ्रमः स्पष्ट एव ॥ ४० ॥

सङ्कर्षणः श्रीकृष्णेन सह युद्धे समगंस्त सङ्गतोऽभूत् । तच्छ्रुत्वा तत्क्षण एव युद्धे जयशीलश्रीवलरामवाक्यं भीष्मको श्रुत्वा पुनरवधार्य सस्मितमाह—बिलेति । मदडम्बरस्खलितचूडं[4] यथा स्यात्तथा हली उन्नदन् सन्नुदेति । नृपपिपीलिकाः डलयोरेकत्वात् नृपपिपीडकाः इत्यपि।। क्व बिले गर्ते । विलिल्यिरे लीना

---

१. सैन्यमाकर्षणः-अ० । २. रवधार्य-अ० ।
३. नववृन्दामिलना-अ० । ४. स्खलितचूडो-अ० ।

शचीगृहकुरङ्ग रे हससि किं त्वमित्युन्नद-
न्नुदेति मदडम्बरस्खलितचूडमग्रे हली ॥ ४१ ॥

( पुनर्नेपथ्ये )

विक्रोशं दन्तवक्त्रः कलितभयवरो हन्त वक्रः किलासीत्
पिण्डीशूरः शृगाली स्खलितरथगतिर्मागधो वागधोऽभूत् ।
दूरादौज्झन्नृपाणां कुलमधिसमरं निष्कृपाणां कृपाणान्
धुन्वाने शार्ङ्गधन्वन्यरिनिधनधरं हास्यरङ्गेण शार्ङ्गम् ॥ ४२ ॥

भीष्मकः—( सानन्दम् ) निवृत्तचिन्तोऽस्मि संवृत्तः ।

( नेपथ्ये )

खण्डितेन विनिबध्य वाससा पण्डितेन रणरङ्गकर्मणि ।
केशवेन रचितार्द्धमुण्डनः कुण्डिनेश्वरसुतो विडम्बितः ॥ ४३ ॥

भीष्मकः—( साशङ्कम् ) सान्त्वयितुमुचितोऽयं कुलकालिमाकुमारः । कदाचित् व्रीडयासौ मनस्वी प्राणानपि जह्यात् । ( इति निष्क्रान्तः )

( इति निष्क्रान्ताः सर्वे )

इति चन्द्रावलीलाभो नाम पञ्चमोऽङ्कः ।

---

बभूवुः । जगदण्डकं पिनष्मि न न इति निषेधे । अत्र कारणमाह—ब्रह्माण्डनाशे हरिः कृष्णः क्रोधं करिष्यति । रे शचीगृहकुरङ्गक अधीनमृग त्वं किं हससीति बलदेवस्य मदावेशेन वाक्यस्याद्भुतत्वं श्रुत्वा इन्द्रस्य यद्धास्यं तद् दृष्ट्वा यद्वा श्रीरामस्य मदावेशेन तथा स्फूर्त्याह—किं हससीति । मदः नाम सन्ध्यन्तर-मिदम् । तथा च—'मदस्तु मद्यजः' ( ना० चं० का० १४७ ) इति । अत्र बलदेवस्य मदः ॥ ४१ ॥

विक्रोशमिति । शार्ङ्गधन्वनि श्रीकृष्णे शार्ङ्गं धनुः धुन्वाने सति दन्तवक्त्रः कलितो जातो भयस्यातिशयो यत्र तादृशो वक्रः आसीत् । पिण्डीशूरः भोजने वीरः । शृगाली रणात्पलायनपरः स्खलितगतिरास । मागधो जरासन्धः वागधोऽ-भूत् तूष्णीमभूत् । निष्कृपाणां नृपाणां कुलमधिसमरं समरमध्ये कृपाणान् खड्गान् दूरादौज्झत् अत्यजत् ॥ ४२ ॥

खण्डितेनेति । केशवेन कर्त्रा खण्डितेन वाससा विनिबद्ध्य रचित-रचित-मर्द्धं मस्तकस्य मुण्डनं यस्य स रुक्मी विडम्बितः तिरस्कृतः ॥ ४३ ॥

इति पञ्चमाङ्कव्याख्या ।

## षष्ठोऽङ्कः

( ततः प्रविशत्युद्धवः )

उद्धवः—

याचन्ते दनुजव्रजादभयतां यं वज्रहस्तादयः
सोऽयं हन्त वराकमागधभयाद्दुर्गं भजत्यम्बुधौ ।
बुद्धिं यस्य किलोपजीवति जगन्मन्त्रे स गृह्णाति मां
कः प्रत्येतु जनः सुदुर्गमगतेः कृष्णस्य लीलायितम् ॥ १ ॥

( विमृश्य ) सम्प्रति सचित्तेन[1] चेतसा देवर्षिं द्रष्टुमिच्छामि । ( आकाशे ) किं ब्रवीषि । सुधर्मासीमनि स भगवान् वर्तते इति । भवतु । तत्रैवायं प्रतिष्ठमानोऽस्मीति । ( परिक्रम्य ) अये, सत्यमेव पुरस्तादेष [2]देवर्षिः ।

( नारदः प्रविश्य )

नारदः—

उरीकर्त्तुं दामोदरहृदि नवामोदलहरीं
वरीयस्यः प्रेम्णां जगति विविधाः सन्तु गतयः ।
स्तुमस्तं यस्तासां स्फुरति हृदि भावस्य गरिमा
हृषीकाणां हन्त प्रभुरपि न यत्र प्रभवति ॥ २ ॥

---

चन्द्रावल्या लाभमुक्त्वा ललितादीनां मिलनं वक्तुं षष्ठाङ्कमारभते—तत इति ।

याचन्ते इति । कृष्णस्य लीलायितं को जनः प्रत्येतु । तदेवाह—याचन्ते इत्यादि । वज्रहस्तादयः इन्द्रादयः दनुजसमूहादभयतां यं याचन्ते सोऽयं श्रीकृष्णः । यस्य बुद्धिं बुद्ध्वा जगदुपजीवतीति स श्रीकृष्णः । मन्त्रे मन्त्रणायां मां गृह्णाति भो उद्धव किं कर्त्तव्यं ब्रूहीत्यादिकं पृच्छति ॥ १ ॥

तत्रैव सुधर्मसभायां प्रतिष्ठमानः प्रस्थानं कुर्वन् अस्मीति । उरीकर्तुमिति—दामोदरस्य हृदये नवामोदलहरीमुरीकर्तुं जनयितुम् । प्रेम्णां विविधाः गतयः सन्तु । तासां प्रसिद्धानां राधादीनां हृदि यो भावस्य गरिमा स्फुरति तं प्रेमाणं वयं स्तुमः । यत्र प्रेमणि हृषीकाणां प्रभुः श्रीकृष्णः न प्रभवति । अधीन एव भवतीति भावः ॥ २ ॥

---

१. सचितेन—अ० । २. सुरर्षिः—ब० ।

( पुरो विलोक्य । सानन्दम् )

अयं चक्राद्यङ्कस्फुरितभुजमूलस्तिलकवान्
दधत्कण्ठे मालामतुलतुलसीकाष्ठमणिजाम् ।
हरेः शेषामङ्के शिरसि च वहन्नुद्धवतया
गतः ख्यातिं भक्तिप्रसर इह मूर्तो विहरति ॥ ३ ॥

उद्धवः—भगवन्नभिवादये ।

नारदः—( शुभाशिषा सभाजयन् ) मन्त्रिराज, कथं विषण्ण इव [1]लक्ष्यमाणोऽसि ?

उद्धवः—भगवन् , देवपादेषु कृतेनापराधेन ।

नारदः—

ऊषरभूमिरसि त्वं सन्ततमपराधबीजस्य ।
दैवाद्विरूढमपि तद्विन्दति सत्तां न गोविन्दे ॥ ४ ॥

उद्धवः—भगवन् , मदीया रभसकारितैव देवस्य भीमारण्यसीमाया-मवगाहनहेतुरभूत् ।

नारदः—कीदृशी सा ?

उद्धवः—क्षुद्रे सत्राजिति [2]देवाभ्यर्थना ।

नारदः—किं तदभ्यर्थितम् ?

उद्धवः—लोकोत्तरं कन्यारत्नं चिन्तारत्नञ्च ।

---

अयमिति । अयमुद्धवतया ख्यातिं गतः भक्तेः प्रसरः स्वतः प्रवृत्तिर्यतः स मूर्त्तः भक्तिरेव शरीरधार्य्ययम् । कीदृशः—चक्राद्यङ्कितभुजः तिलकयुक्तः, तुलसीकाष्ठमालां मणिमालाञ्च दधत् हरेः शेषां प्रसादपुष्पादिमालामङ्के शिरसि च वहन् सन्निह विहरति । 'शेषाः प्रसादमाल्ये च स्त्रियां शेषो हलायुधे' इति धरणिः ॥ ३ ॥

ऊषरेति । ऊषरभूमिरसि त्वय्यपराधो न जायते । कदापि दैवात् श्रीकृष्ण-हितादिचेष्टया विरूढमपि उत्पन्नमपि गोविन्दे सत्तां विद्यमानतां न विन्दति । सेवापराधस्तु सेवयैव सर्वेषां नश्यति त्वन्तु तत्तत्तुल्यनित्यपार्षदोऽसि ॥ ४ ॥

मदीया रभसकारिता पूर्वापरपर्यालोचनं विनैव य आरम्भस्तत्र रभसो वेगस्य कारिता । 'अपर्य्यालोचितारम्भे रभसो भरसाऽव्ययम्' । देवस्य स्यमन्तक-मणेरन्वेषणार्थं भयानकारण्यसीमायामवगाहने प्रवेशे हेतुरभूत् । कन्यारत्नं सत्य-भामां चिन्तारत्नं स्यमन्तकम् । शिष्टानामसमीक्ष्यकारितापीष्टारम्भपर्यवसायितां

---

१. वीक्ष्यमाणो—ब० । २. देवाभ्यर्थनया—अ० ।

नारदः—( स्वगतम् ) चित्रं चित्रमसमीक्ष्यकारिताऽपि शिष्टाना-मिष्टारम्भपर्यवसायितामेव धत्ते। ( प्रकाशम् ) स्फुटमभ्यर्थितं ते सार्थकं नाभूत्।

उद्धवः—अथ किम्। प्रत्युत कष्टदमेव वृत्तम्।

नारदः—नायमगृहीतशासनोऽपि वाच्यतामर्हति सत्राजितः। यतः—

> विमलहृदयः ख्यातो लोके सतामुपदेशतो
> गुणयति गुणश्रेणीं नाल्पो मलीमसमानसः।
> मुकुलपटलीं सारङ्गाक्षीमुखार्पितशीधुभि-
> र्बकुल इव किं धत्ते मूर्ध्ना हठादढरूपकः ॥ ५ ॥

उद्धवः—

> अनर्पितेन रत्नेन कन्यारत्नेन चाच्युते।
> भ्रातरं साधुवादञ्च स स्वकीयमघातयत् ॥ ६ ॥

नारदः—श्रुतमाखेटके स दिष्टान्तमवाप।

उद्धवः—अथ किम्।

नारदः—स्फुटं प्रसेनमन्वेष्टुं प्रस्थितो रथाङ्गी।

उद्धवः—अथ किम्। यदेष जगत्तमःप्रमाथिचरित्रविरोचने चाणूर-द्विषि काञ्चित्तमःकलामुदीरयति तेनाद्यखिन्नो भवत्तः क्षेममाशंसे।

नारदः—हन्त ! पुण्डरीकाक्षभक्तिमञ्जरीचञ्चरीक रभसारब्धोऽपि

---

परिणामे इष्टवस्तुन एव लाभं धत्ते। वाच्यतां वाचा [1]आक्षेपपात्रताम्। अयं [2]सत्राजित् नार्हति।

विमलेति। यस्मात् सतामुपदेशतः विमलहृदयो जनः गुणश्रेणीं गुणयति परिशीलयति। नाल्पो ग्लानमानसः। अत्र दृष्टान्तः—बकुलोऽशोको यथा सार-ङ्गाक्षीमुखार्पितशीधुभिर्मुकुलपटलीं मूर्ध्ना हठाद् धत्ते तथा किमढरूपको वासकः मुकुलपदवीं धत्ते। नेत्यर्थः। उत्तमनायिकास्पर्शादिनाऽशोकपुष्पाणि फुल्लानि भवन्तीति प्रसिद्धिः ॥ ५ ॥

अनर्पितेनेति। स्वकीयं भ्रातरं साधुवादञ्चाघातयत् ॥ ६ ॥

आखेटके पर्वतनिकटवर्तिभूमौ। स प्रसेनः। दिष्टान्तं मरणमवाप। जगतां तमांसि प्रकर्षेण मथितुं शीलं यस्य तथाभूतं चरित्रं विलोचनं दर्शनञ्च यस्य तस्मिन् श्रीकृष्णे कांचित्तमःकालिकामेष सत्राजित उदीरयति तेन खिन्नोऽहं भवत्तः सकाशात् क्षेमं पृच्छामि। हे कृष्णभक्तिमञ्जर्याः चञ्चरीक भ्रमर। भक्ति-

---

१. आक्षेपमात्रताम्—अ०। २. सत्राजितः नार्हति—ब०।

भक्तिमद्भिरर्थः कंसहरस्य हर्षहेतुतामेव प्रपद्यते। किमुत प्रेष्ठेन भवादृशा। तदद्य महोत्सवः क्रियताम्। तेषां लोकोत्तरचमत्कृतीनां वृन्दाटवीविलासानां विलोकनाय रमणीयस्ते समयोऽयमुपस्थितः[1]।

उद्धवः—भगवन्, जानन्नपि किं मां मुधा प्रलोभयसि। [2]यदद्य केनापि शोकशङ्कुना सङ्कुलस्य देवस्य कुतो नववृन्दावनगाहनेऽपि सम्भावना।

नारदः—कः शोकशङ्कोरुपाधिः ?

उद्धवः—कनिष्ठा ( इत्यर्द्धोक्ते [3]वाक्स्तम्भं नाटयति )

नारदः—( विहस्य )

अपि लब्धाङ्गुलीसङ्गा यदि नष्टेति दृष्टिमान्।
मुद्रां शोचति रोचिष्णुं तत्र किं करवामहे ॥ ७ ॥

उद्धवः—( सविस्मयानन्दम् ) भगवन्, किञ्चिदुच्छ्वसिता ते वाग्वल्लरी व्याकुलयति ते मनोमधुपम्। तदभिव्यक्तीक्रियतां सत्यमेव किमायुष्मती कनिष्ठा देवी ?

नारदः—आयुष्मतीति किमुच्यते। सा द्वारवतीमेवालङ्कुर्वती वर्तते।

उद्धवः—( सरोमाञ्चम् ) कथमियमत्रागता !

नारदः—

अक्षीणं विभवं प्रजाञ्च परमामभ्यर्च्य सर्वात्मना
कुर्वाणाय निषेवणं विरहितापत्याय सत्यार्चनः।

---

मद्भिः रभसारब्धः अपर्यालोचनेनारब्धोऽप्यर्थः। कृष्णस्य हर्षतामेव हेतु···। तेषां प्रसिद्धानां वृन्दाटवीविलासानां शोक एव शङ्कुः कीलस्तेन संकुलस्य व्याकुलस्य कृष्णस्य।

कनिष्ठा श्रीराधा इत्यर्द्धोक्ते श्रीराधामन्तरेण वृन्दाटवीविलासः कुतः। अपीति। लब्धः अङ्गुल्यां[4] सङ्गो यया तां मुद्रिकां रोचिष्णुं प्रकाशबहुलं दृष्टिमान् जनः मे सा अङ्गुलिस्थिता मुद्रा नष्टेति मत्वा शोचति तत्र वयं किं करवामहे ॥७॥

उच्छ्वसितोद्गता वाक्यरूपी( पिणी ? )लता। कनिष्ठा राधिका किं सत्यमेवायुष्मती जीवितास्ति।

अक्षीणमिति। विभवं प्रजाञ्चाभ्यर्थ्य निषेवणं कुर्वाणाय सत्राजिते दिनमणिः

---

१. यमुपस्थितवान्—अ०; यमुपतस्थिवान्—ब०।
२. तदद्य—अ०। ३. वाक् स्तम्भयति—अ०।
४. अङ्गुल्याः सङ्गो—अ०।

साद्धं दुर्द्धरशङ्खचूडमणिना तां सत्यभामाख्यया
विख्यातां प्रणयन् ददौ दिनमणिर्मित्राय सत्राजिते ॥ ८ ॥

सस्नेहमब्रवीच्चैनम्—

प्रणेष्यति यशः परं जगति नारदानुज्ञया
वराय वरकीर्तये सुतनुरर्पितेयं तव ।
स्यमन्तकमणिश्च ते महितमूर्तिरष्टौ महान्
प्रसोष्यति दिनं दिनं ननु हिरण्यभारानयम् ॥ ९ ॥

उद्धवः—कथमम्बरमणिर्मणीन्द्रेऽस्मिन्नधिकारी संवृत्तः ?

नारदः—रविलोकं लब्धया राधिकयैव तस्मै पुष्पाञ्जलितया कल्पितः ।

उद्धवः—कथमस्यास्तरणिलोकस्याधिरोहणमासीत् ?

नारदः—

मोदयत्यद्य तनूमनीक्षितहरिः सन्ध्यामुखे ते सखी
तूर्णं पुत्रि ततः समानय ममाभ्यर्णे विशीर्णामिमाम् ।
इत्याज्ञां पितुराकलय्य चतुरा सा चण्डधाम्नः सुता
सौरं बिम्बमलम्भयद्विलपितोद्गाराधिकां राधिकाम् ॥१०॥

उद्धवः—विशाखायाः का वार्त्ता ?

नारदः—गोविन्देन सम्बन्धादात्मानं पूर्णकामं कर्त्तुकामस्य तामरसबन्धोरिच्छया धर्मराजानुजैव गोकुले विशाखाख्यामवाप ।

---

सूर्यः तेन मणिना सह तां राधां सत्यभामाख्यया विख्यातां प्रणयन् कुर्वन् ददौ ॥ ८ ॥

सस्नेहं यथा स्यात्तथा सूर्य एनं सत्राजितमब्रवीत् । किमाह—

प्रणेष्यतीति । नारदस्यानुज्ञया इयं सुतनुः कन्या वरायार्पिता सती तव परं यशः प्रणेष्यति । महानयं स्यमन्तकमणिश्च ते त्वया महितमूर्तिः पूजितः सन्नष्टौ हिरण्यभारान् दिनं दिनं प्रति प्रसोष्यति । षूङ् प्रसवे धातुः ॥ ९ ॥

अम्बरमणिः सूर्यः । मणीन्द्रे स्यमन्तके । कथं केन प्रकारेणाधिकारी संवृत्तः अस्याः राधायाः ।

मोदयतीति । हे पुत्रि यमुने अनीक्षितहरिस्ते सखी सन्ध्यामुखेऽद्य तनुं मोचयति ततो हेतोर्विशीर्णामिमां राधां मन्निकटे समानय । सा यमुना राधिकां सौरं बिम्बमलम्भयत् । कीदृशीम्—विलापोद्गारस्याधिक्यं यत्र तां कृष्णविच्छेदेन कृतविलापाम् ॥ १० ॥

तामरसबन्धोः सूर्यस्येच्छया धर्मराजानुजा यमुना विशाखाख्यामवाप

उद्धवः—नूनं विशाखायाः सख्येन राधिकायामाधिकमन्वरज्यत यम-
राजमाता ।

नारदः—अथ किम् । संज्ञाया विज्ञापनादेव तत्पित्रा शिल्पाचार्येण
नववृन्दावनं द्वारवत्यामाविष्कृतम् । तथाहि—

कालिन्दीकलितोपकण्ठमभितः शैलश्रियालङ्कृतं
भाण्डीरोज्ज्वलमावृतं व्रततिभिस्ताभिर्द्रुमैस्तैरपि ।
साङ्गं द्वारवतीपुरे जगदलङ्कर्मीण निर्मीयतां
राधामाधवमाधुरीसरिदुपस्यन्दाय वृन्दावनम् ॥ ११ ॥

उद्धवः—शिल्पीन्द्रनन्दिनी कथमत्र प्रवृत्ता ?

नारदः—राधिकानिवेदनेन ।

उद्धवः—कीदृशमिदम् ?

नारदः—

पश्यन्ती पशुपालमण्डलशिरोमाल्यस्य लीलास्थली-
र्यत्राहं [1]निरवाहयिष्यमभितः स्वान्तस्य सन्तर्पणम् ।
सद्यःपामरकर्मणो हतविधेरुद्दामविस्फूर्जितै-
र्निर्धूतास्मि ततोऽपि दूरमधुना हा ! हन्त ! वृन्दावनात् ॥१२॥

उद्धवः—देव, दिष्ट्या रक्षिता स्मा वयं त्रिलोकीचक्षुषा मित्रेण ।
यतः—

कथमपि निवसन्त्यास्तत्र वृन्दावनाङ्के
विस्मरहरिलीलापूरगाम्भीर्यभाजि ।

---

वैष्णवसिद्धान्तमते तु प्रद्युम्नानिरुद्धादीनामंशभूता ये कन्दर्पकार्तिकेयादयः तेषां यथा प्रद्युम्नानिरुद्धादिषु प्रवेशस्तथात्रापि ज्ञेयमिति । यमराजमाता संज्ञा सूर्यपत्नी च संज्ञा तस्या विज्ञापनादेव । तत्पित्रा संज्ञायाः पित्रा शिल्पाचार्येण विश्वकर्मणा ।

संज्ञाया विज्ञप्तिमाह—कालिन्दीति । हे जगदलङ्कर्मीण । 'कर्मक्षमोऽलङ्कर्मीणः' । ताभिर्लताभिस्तैः वृक्षैश्चावृतं वृन्दावनं साङ्गं द्वारवतीपुरे राधामाधवयोर्माधुर्यं एव सरिन्नदी तस्या उपस्यन्दनाय अधिकविस्ताराय निर्मीयतामिति ॥११॥

पश्यन्तीति । यत्र वृन्दावने श्रीकृष्णस्य लीलास्थलीः पश्यन्ती सत्यहं स्वान्तस्य सम्यक् तर्पणं निरवाहयिष्यम् । हतविधेरुद्दामविस्फूर्जितैरुत्कृष्टदाम्ना विक्षेपैः ततो वृन्दावनाद् दूरं निर्धूतास्मि ॥ १२ ॥

मित्रेण सूर्येण । कथमपीति । वृन्दावननिर्माणादेव विस्मरो विसरणशीलो हरिलीलापूरः तस्य गाम्भीर्यभाजि श्रीकृष्णलीलासमूहयुक्ते तत्र वृन्दावनस्यास्याङ्के

---

१. निर्वाहयिष्य—अ० ।

अपि तव [1]निबिडाशासेतुवृन्दानुबन्धै
रलघुभिरभविष्यज्जीवनं दुर्निबद्धम् ॥ १३ ॥

ततस्ततः ।

नारदः—ततः शनैश्चरजननीशनैरवादीत् ।

न व्याकुलीभव जगत्त्रयसौख्यसारे
नव्यारविन्दवदने सदने सदात्र ।
ध्येयः सतां सवितृमण्डलमध्यवर्ती
देवः स एव यदयं दयितस्तवास्ति ॥ १४ ॥

उद्धवः—किमत्र विशाखया नोत्तरितम् ।

नारदः—कथं नोत्तरयितव्यम् । यदेतया विहस्योक्तम्—मातः, सवर्णे वर्णयामि । समाकर्णय—

गोपीनां पशुपेन्द्रनन्दनजुषो भावस्य कस्तां कृती
विज्ञातुं क्षमते दुरूहपदवीसञ्चारिणः प्रक्रियाम् ।
आविष्कुर्वति वैष्णवीमपि तनुं तस्मिन् भुजैर्जिष्णुभि-
र्यासां हन्त चतुर्भिरद्भुतरुचिं रागोदयः कुञ्चति ॥ १५ ॥

उद्धवः—किं नाम भगवता सत्राजिदनुशिष्टोऽस्ति ।

नारदः—अथ किम् । तथाहि—

मणीन्द्रं [2]पारीन्द्रः प्रवरमहरन्निघ्नतनयं
विनिघ्नन्नेतञ्च प्रबलमथ भल्लूकनृपतिः ।

---

क्रोडे कथमपि कष्टेन निवसन्त्यास्तवालघुभिः निबिडा कृष्णप्राप्तौ या आशा सैव सेतुः वृन्दारूपा तस्या अनुबन्धैर्दुर्निबद्धं जीवनमभविष्यत् । कृष्णाशया कष्टेनैव जीवनधारणमभविष्यदित्यर्थः ॥ १३ ॥

शनैश्चरजननी छाया ॥ न व्याकुलीति । सवितृमण्डलमध्यवर्ती नारायणो देवः स एवायं तव दयितः सतां ध्येयः अत्र सदने सदाऽस्ति ॥ १४ ॥

अस्मिन्नारायणेऽस्याः प्रीतिर्दूरे आस्ताम् । गोपीनां पशुपेन्द्रनन्दनजुषो दुरूहसञ्चारिणो भावस्य तां प्रक्रियां कः कृती विज्ञातुं क्षमते । न कोऽपीत्यर्थः । रासे निलीय पलायितुमसमर्थे तस्मिन्नन्दनन्दने वैष्णवीं तनुमाविष्कुर्वति सति तां तनुं वीक्ष्य यासां गोपीनां रागोदयः कुञ्चति । तथा च द्विभुजे नन्दनन्दने एवासामनुरागः न तु कृतचतुर्भुजाविष्कारे नन्दनन्दनेऽपि ॥ १५ ॥

मणीन्द्रमिति । पारीन्द्रः सिंहः मणीन्द्रं स्यमन्तकमणिं निघ्नः सत्राजितः

---

१. निबिडा सा सेतु—अ० ।

२. पारीन्द्रप्रवरमित्यादिर्नाटकचन्द्रिकास्थपाठः ।

परामूय स्वैरी तमपि मुरवैरी तव धनं
तदाहर्ता पापस्त्वमसि पतितस्तापजलधौ ॥ १६ ॥

उद्धवः—ततस्ततः ।

नारदः—ततस्तेनोक्तम्—

ज्वलितो जनः कृशानौ शाम्यति तप्तः कृशानुनैवायम् ।
भगवति कृतागसो मे भगवानेवाधुना शरणम् ॥ १७ ॥

उद्धवः—ततः किमुक्तं भगवता ।

नारदः—

न यावदुपसर्पति प्रतिभटेभकण्ठीरवः
पिनाकिमुखनाकिभिर्मुकुटितानुशिष्टिर्विभुः ।
मुदा तदवरोधने कुटिलभाव तावद्द्रुतं
त्वयाद्य कुलनन्दिनी चिरधृताधिराधीयताम् ॥ १८ ॥

ततश्चावरोधेन राधायाः प्रवेशाय तेन जननी नियुक्ता ।

उद्धवः—( सानन्दम् ) त्वया कारुण्यसिन्धुना सन्धुक्षितोऽयं पवन-व्याधिरनेन महारसायनेन ।

नारदः—हन्त ! सम्भृतगम्भीरशोकशूलया गोकुलं व्रजन्त्या नेदमास्वादितं पौर्णमास्या ।

---

पिता तस्य तनयं प्रसेनं विनिघ्नन्नहरत् । अथ भल्लूकनृपतिर्जाम्बवान् एतं सिंहं विनिघ्नन् मणीन्द्रमहरत् स्वैरी श्रीकृष्णस्तं जाम्बवन्तं पराभूय तव तद्धनं स्यमन्तकमाहर्ता आहरिष्यति । पापस्त्वं तापजलधौ पतितोऽसि । तोटकं नाम गर्भसन्ध्यङ्गमिदम् । तथा च—'वचः संरम्भि तोटकम्' ( ना० चं० का० ८७ ) अत्र संरम्भेण तोटकं प्रकटमेव ॥ १६ ॥

ज्वलित इति । कृशानौ वह्नौ ज्वलितो जनः यथा वह्निना शाम्यति तथैव भगवान् मे शरणम् । उदाहरणं नाम नाटकभूषणं द्विप्रकारं तस्य द्वितीयं प्रकार-मेतत् । यथा—'यत्र तुल्यार्थयुक्तेन वाक्येनाभिप्रदर्शनात् । साध्यतेऽभिमतश्चार्थ-स्तदुदाहरणं मतम् ॥' इति ( सा० दर्प० ६।११७ ) कश्चित् । अत्र कृष्णे कृतापराधस्य सत्राजितः कृष्ण एव शरणमिति स्वार्थप्रकटनादुदाहरणम् ॥ १७ ॥

न यावदिति । प्रतिभटः प्रतियोद्धा स एवेभो हस्ती तस्य सम्बन्धे कण्ठीरवः सिंहः । पिनाकी महादेवः तदादिदेवैर्मुकुटितानुशिष्टिर्वन्धः । प्रभुः कर्त्तुमकर्तुमन्यथाकर्त्तुं समर्थः यावन्नागच्छति तावत् हे कुटिलभाव त्वयाद्य तदव-रोधने कृष्णान्तःपुरे कुलनन्दिनी सत्यभामा आधीयताम् ॥ १८ ॥

उद्धवः—तामन्तरेण का खल्वत्र लालयिष्यति देवीं यवीयसीम्।

नारदः—त्वष्टुरन्तेवासिनीमेवात्राभिरूपां निरूपयामि।

उद्धवः—केयं पुण्यवती?

नारदः—

कुसुमरचनचञ्चुर्निष्कुटानामकाले
परिणतमतिरायुर्वेदतन्त्रे तरूणाम्।
कलयितुमपि भावं स्थावराणां समर्था
निवसति नववृन्दा द्वारवत्यां प्रसिद्धा॥ १९॥

उद्धवः—किं नाम तत्त्वमस्याः काननदेवीयं जानाति?

नारदः—अथ किम्। यदियं नववृन्देति यथार्थसंज्ञा तत्रापि संज्ञाया निदेशेनानुगृहीता।

उद्धवः—कीदृगेष निदेशः।

नारदः—

प्रेयस्यः पशुपालिका विहरतो यास्तत्र वृन्दावने
लक्ष्मीदुर्लभचित्रकेलिकणिकाकाण्डस्य कंसद्विपः।
राधा तत्र वरीयसीति नगरीं तामाश्रितायाः क्षितौ
सेवां देवि समस्तमङ्गलकरीमस्यास्त्वमङ्गीकुरु॥ २०॥

---

त्वयानेन महारसायनेन पवनव्याधिरयं मल्लक्षणो जनः सन्धुक्षितः। यवीयसीं कनिष्ठां राधाम्। त्वष्टुः विश्वकर्मणः अन्तेवासिनीम्। अत्रानुरूपां योग्यां समर्थां निरूपयामि।

कुसुमेति। निष्कुटानां [1]गृहारामाणां तरूणामायुर्वेदतन्त्रे परिणतमतिः वृक्षाणां रोगादिनाशपूर्वकमकाले प्रफुल्लादिकरणे कुसुमरचनायां चञ्चुर्निपुणा विज्ञा। स्थावराणामपि भावं पुष्पाङ्कुरादिरूपपुलकादिकं कलयितुं समर्था किमुत जङ्गमानाम्॥ १९॥

अस्या राधाया तत्त्वमियं जानाति। यथार्थसंज्ञा वृन्दा। संज्ञायाः सूर्यपत्न्याः। प्रेयस्य इति। लक्ष्म्याः दुर्लभः चित्रकेलिकणिकायाः काण्डोऽवसरो यया तस्य कंसद्विपस्तत्र वृन्दावने विहरतः पशुपालिकाः याः प्रेयस्यस्तत्र तासु मध्ये वरीयसीं श्रेष्ठां राधाम्। हे देवि तस्याः सेवां त्वमङ्गीकुरु। उपदिष्टं नाम नाटकभूषणमिदम्। यथा—'शास्त्रानुसारि यद्वाक्यमुपदिष्टं तदुच्यते।' ( ना० चं० का० १८२ ) अत्र हरिप्रियजनसेवा समस्तमङ्गलकरीति शास्त्रानुसारित्वम्॥ २०॥

---

१. निष्कुटानां गृहाणां—ब०।

उद्धवः—( सास्रम् ) भगवन्, ताः पशुपालिकाकिशोरिकाः स्मृतिमारूढाः स्वान्तमस्माकं सन्तापयन्ति ।

नारदः—मा भज सन्तापम् । यतः—

दृष्ट्वा काममपि कंसवैरिविरहादायासयन्तीर्दशां
कामाख्या नरकासुरेण ललनाराजीः किलाजीहरत् ।
एताभिर्मधुरैर्गिरां परिमलैराश्वासिताभिस्तया
तुङ्गाराधनतुष्टया मणिगिरिद्रोणीषु तत्रोष्यते ।। २१ ।।

उद्धवः—( सानन्दम् ) भगवन्, पश्य पश्य । मुद्रितां पल्यङ्किकामनुसरन्ती सत्राजितः सवित्री पुरान्तरकक्षामवगाहते ।

नारदः—तदेहि सुधर्मामध्यमध्यास्य माधवेन्द्रं प्रतिपालयावः ।

( इति निष्क्रान्तौ )

विष्कम्भकः ।

( ततः प्रविशति सत्राजिन्मातरमनुसरन्ती राधा )

राधा—( सव्यथमाकाशे संस्कृतेन )

विचित्रायां क्षोण्यामजनिषत कन्याः कति न वा
कठोराङ्गी नान्या निवसति मया कापि सदृशी ।
मुकुन्दं यन्मुक्त्वा समयमहमद्यापि गमये
धिगस्तु प्रत्याशामहह धिगसून् धिङ् मम धियम् ।। २२ ।।

---

दृष्ट्वेति । कामाख्या देवी पशुपालकिशोरीः कंसवैरिविरहात् कामप्यनिर्वचनीयां दशामासादयन्तीर्दृष्ट्वा नरकासुरमाह—व्रजे ललनाश्रेणी वर्तते तामानय मत्प्रीत्यर्थमित्युक्त्वा नरकासुरेण द्वारभूतेन ताः ललनाराजीरजीहरत् । ततस्तया कामाख्यया मधुरैर्गिरां परिमलैर्मा चिन्तां कुरु पुनरपि श्रीकृष्णसङ्गो भविष्यति भवतीनामित्याकारैराश्वासिताभिरेताभिस्तत्र स्थले मणिगिरिद्रोणीषु उष्यते । वस् निवासे धातुः ।। २१ ।।

सत्राजितः सवित्री माता मुद्रितां वस्त्रगुप्तां पल्यङ्किकां वाहनमनुसरन्ती पश्चाद्गच्छन्ती पुरान्तःकक्षामन्तःपुरमध्येऽवगाहते प्रविशति । तदाज्ञया सत्यभामाऽऽगतेति भावः ।

विचित्रायामिति । क्षोण्यां कति कन्याः न अजनिषत न जाताः । मम सदृशी कठोराङ्गी अन्या कापि न यन्मुकुन्दं मुक्त्वाहमद्यापि समयं गमये जीवामीत्यर्थः । जीवने श्रीकृष्णप्राप्त्याशादिकं धिक् । अत्र अविचारो नाम नाटकभूषणमिदम् । तथा च—'विचारस्यान्यथाभावो विज्ञेयस्तद्विपर्ययः ।' ( ना० चं० का० १६९ ) इति । अत्रोद्वेगातिशयेन प्रत्याशाधिक्करणाद् विपर्ययः ।। २२ ।।

(परिवृत्य) अज्जे, कीस एसो जणो एत्थ अंतेउरे णीअदि ?
[ आर्ये, कस्मादेष जनोऽत्रान्तःपुरे नीयते ? ]

वृद्धा—णत्तिणि, तस्स महातबोधणस्स देएस्सिणो णिदेसेण ।
[ नप्त्रि, तस्य महातपोधनस्य देवर्षेर्निर्देशेन । ]

राधा—( स्वगतम् ) सो भअवदीए आचारिओ अम्ह सिणिद्धो त्ति सुणीअदि । तदो ज्जेव भअवंदेण भाणुणा तादो सत्ताजिदो तस्स वअणे त्थाविदो । [ स भगवत्याः आचार्यो मम स्निग्धोऽस्तीति श्रूयते । तत एव भगवता भानुना तातः तस्य वचने स्थापितः । ]

वृद्धा—णत्तिणि, एहि । देइए रुप्पिणीए हत्थे तुमं समप्पइस्सं ।
[ नप्त्रि, एहि । देव्या रुक्मिण्या हस्ते त्वां समर्पयिष्यामि । ]

( ततः प्रविशति सपरिजना चन्द्रावली )

चन्द्रावली—सहि माहवि, समंतअं मणिं मग्गिदुं पत्थिदो अज्जउत्तो कीस विलंबेदि [ सखि माधवि, स्यमन्तकं मणिं मार्गितुं प्रस्थित आर्यपुत्रः कस्माद्विलम्बते ]

माधवी—भट्टदारिए, परं पि तत्थ किं पि कज्जंतरं हुविस्सदि ।
[ भर्तृदारिके, परमपि तत्र किमपि कार्यान्तरं भविष्यति । ]

राधा—(स्वगतम्) भणिदह्मि भाणुणा—वच्छे, जाव समंतओ माहवेण तुए मणिबंधे ण बंधीअदि ताव सरहस्सं दे पढमं [1]णाम संवरणिज्जं त्ति । [ भणितास्मि भानुना—वत्से, यावत्स्यमन्तको माधवेन तव मणिबन्धे न बध्यते तावत् सरहस्यं ते प्रथमं नाम संवरणीयमिति । ]

चन्द्रावली—( विलोक्य ) हला, का एसा जरदी मुत्तिमदीए अउरुव्वरूवलच्छीए समं एत्थ आअच्छदि । [ सखि, कैषा जरती मूर्तिमत्या अपूर्वरूपलक्ष्म्या सममत्रागच्छति । ]

राधा—( चन्द्रावलीमालोक्य । स्वगतम् ) साहु माहुरीपूरभरिदा एसा राइंदमहिसी गोउलकिसोरीसोरब्भं विअ धरेदि । [ साधु माधुरीपूरभ-

---

एषो मल्लक्षणो जनः । स देवर्षिः भगवत्याः पौर्णमास्या आचार्यो गुरुः । मम सम्बन्धे स्निग्धः । भगवता भानुना सूर्येण । तातः सत्राजित् । तस्य देवर्षेः । नारदाज्ञया एषा कन्या देयेति इत्याकारः ।

एहि आगच्छ । मार्गितुमन्वेष्टुम् । ते त्वया प्रथमं नाम राधिकेति नाम संवरणीयमिति ।

---

1. णामं–ब० ।

रितैषा राजेन्द्रमहिषी गोकुलकिशोरीसौरभमिव धारयति । ]

वृद्धा—( उपसृत्य ) देइ रुप्पिणि, समंतअप्पसंगे [1]किदावराहेण मह पुत्तेण सत्ताजिदेण अप्पणो पुत्ती एसा सच्चभामा राइन्दस्स उवहारी-किदा । ता पिअसहीसाहारणसिणेहमाहुरीसोहग्गाहिआरिणी तुए करणिज्जा । [ देवि रुक्मिणि, स्यमन्तकप्रसङ्गे कृतापराधेन मम पुत्रेण सत्राजितेनात्मनः पुत्र्येषा सत्यभामा राजेन्द्रस्योपहारीकृता । तस्मान्निजसखीस्नेहमाधुरीसौभाग्याधिकारिणी त्वया करणीया । ]

राधा—( स्वगतम् ) कामं वुड्ढी पलवेदु । केअलं दिणेसस्स णिदेसवीसंमभेण एत्थ [2]पइट्ठह्मि । [ कामं वृद्धा प्रलपतु । केवलं दिनेशस्य निदेशविस्रम्भेणात्र प्रविष्टाऽस्मि । ]

चन्द्रावली—अज्जे, धण्णह्मि । जाए ईदिसो सहीजणो उवत्थिदो । ताओ तुमं अप्पणो घरं जाहि । अहं क्खु सच्चभामं पडिवालइस्सं । ( आर्ये, धन्यास्मि । यस्या ईदृशः सखीजन उपस्थितः । तस्मात्त्वमात्मनो गृहं याहि । अहं खलु सत्यभामां प्रतिपालयिष्यामि । ]

वृद्धा—जह भणइ देइ । [ यथा भणति देवी । ] ( इति निष्क्रान्ता )

चन्द्रावली—( जनान्तिकम् ) सहि माहवि, [3]पेक्ख । एसो अज्जउत्तस्स सच्चसंकप्पसेदुविमद्दणो सच्चभामाए सोन्देरपूरो धीरं वि मं आंदोलेदि । [ सखि माधवि, पश्य । एष आर्यपुत्रस्य सत्यसङ्कल्पतासेतुविमर्दनः सत्यभामायाः सौन्दर्यपूरः धीरामपि मामान्दोलयति । ]

माधवी—भट्टिदारिए, सच्चं भणासि । एसा तुह्म विब्भमं उप्पादेदि । [ भर्तृदारिके, सत्यं भणसि । एषा तव विभ्रममुत्पादयति । ]

चन्द्रावली—हला, मुंच मे सलाहणं । णं क्खु असारुप्पं रूवं एदं । [ सखि, मुञ्च मे श्लाघनम् । ननु खल्वसारूप्यं रूपमेतत् । ] ( पुनर्निभाल्य । संस्कृतेन )

---

गोकुलकिशोरीसौरभमिव सारूप्यमिव । मम पुत्रेण सत्राजितेन । पश्येति । धीरामपि मामिति । अत्र उद्वेगो नाम गर्भसन्ध्यङ्गमिदम् । तथा च—'शत्रुचौरादिसम्भूतं भयमुद्वेग उच्यते ।' ( ना० चं० का० ८९ ) इति । अत्राद्भुतरूपसपत्नीदर्शनाच्चन्द्रावल्या उद्वेगः । विभ्रममुत्पादयति न तु तव तुल्येति भावार्थः । असारूप्यं सादृश्यरहितं रूपमेतत् ।

---

१. कआवसाहेण—अ०, कआवराहेण—व. । २. पइठ्ठह्मि—व० ।
३. पेक्खु—अ० ।

दृष्टिर्वहत्युपरतिं श्वसितानुपूर्वी
नम्रां करोत्यधरपल्लवताम्रताञ्च ।
गण्डद्वयी च परिचुम्बति कम्बुकान्ति
मद्विस्मयं स्थितिरियं सुतनोस्तनोति ॥ २३ ॥

माधवी—णूणं [1]कासिराअकण्णआ अंवा विअ एसा कस्सिं वि पुरिसे बद्धराआ हुविस्सदि । [ नूनं काशिराजकन्यकाम्बा इवैषा कस्मिन्नपि पुरुषे बद्धरागा भविष्यति । ]

चन्द्रावली—( संस्कृतेन )

साधर्म्यं मधुरिपुविप्रयोगभाजां
तन्वङ्गी मुहुरियमङ्गकैस्तनोति ।
[2]प्राकृत्यः प्रियसखी माधुरीं किमेतां
दैन्येऽपि प्रथयितुमार्तयः क्षमन्ते ॥ २४ ॥

ता एहि । परिक्खम्ह से चिद्दवुत्तिं । [ तस्मादेहि । परीक्षावः अस्याश्चित्तवृत्तिम् । ] ( इत्युपसृत्य ) सहि सच्चभामे, एसा अप्पणो [3]सवामि । एदं तुज्झ सिणिज्झदि मे हिअअं । [ सखि सत्यभामे, एषा आत्मनो सपा-( शपा ) मि । इदं तव स्निह्यति मे हृदयम् । ]

राधा—( स्वगतम् ) णासच्चं भणादि जं मह वि चित्तं तहा । [ नासत्यं भणति यन्ममापि चित्तं तथा । ] ( प्रकाशम् ) देइ, तदो धण्णंह्मि [ देवि, तदा धन्यास्मि । ]

---

दृष्टिरिति । सुतनोरस्याः स्थितिर्मम विस्मयं तनोति । विस्मयमेवाह—दृष्टिरुपरतिं शान्तिं वहति । विषयादिग्रहणाभावात् चाञ्चल्यकटाक्षाद्यभावाद्वा । श्वसितानुपूर्वी श्वासपरिपाटी अधरपल्लवताम्रतां नम्रां ग्लानाञ्च करोति गण्डद्वयी च कम्बुः शङ्खस्तस्य कान्तिं शुक्लां परिचुम्बति । एतत्सर्वं विरहिणीचिह्नं दृष्टेरुपरत्यादिकं श्रीराधायाः ॥ २३ ॥

साधर्म्यमिति । मधुरिपुविप्रयोगभाजां साधर्म्यमियं तन्वङ्गी अङ्गकैस्तनोति । दैन्येऽपि प्राकृत्यः आर्तयः मायिक्यः पीडाः एतां माधुरीं किं प्रथयितुं क्षमन्ते । नेत्यर्थः । अनुमानं नाम गर्भसन्ध्यङ्गमिदम् । तथा च—'लिङ्गाऽभ्यूहोऽनुमानता' ( ना० चं० का० ८७ ) । अत्र दैन्येऽपि माधुरीदर्शनेन लिङ्गेन कृष्णवियोगस्याभ्यूहोऽनुमानं राधाचन्द्रावल्योः परस्परयथास्वरूपाज्ञानं लीलासौष्ठवार्थं योगमायाकल्पितं श्रीकृष्णेच्छयैव ज्ञेयम् ॥ २४ ॥

---

1. कासिअराअ–अ० । 2. प्राकृत्यं–ब० । 3. सयामि–अ० ।

चन्द्रावली—वहिणी, कीस तुमं दुम्मणा लक्खीअसि ? [ भगिनि, कस्मात्त्वं दुर्मनाः लक्ष्यसे ? ]

राधा—देइ, एत्थ अहं तादेण पसहं पेसिदह्मि त्ति मे दोम्मणस्सं। [ देवि, अत्राहं तातेन प्रसभं प्रेषितास्मीति मे दौर्मनस्यम् । ]

चन्द्रावली—हला, मा उत्तम्म । अज्जउत्तस्स हत्थे तुमं समप्पइस्सं। [ सखि, मोत्ताम्य । आर्यपुत्रस्य हस्ते त्वां समर्पयिष्यामि । ]

राधा—( सदैन्यम् ) देइ, सच्चं जेव्व जइ सिणिद्धासि तदा एव्वं सव्वधा पुणो ण खु वाहरिस्ससि । [ देवि, सत्यमेव यदि स्निग्धासि तदा एवं सर्वथा पुनः न खलु व्याहरिष्यसि । ] ( इति काकुभिर्नमति ) ।

चन्द्रावली—सहि, तदो भणाहि । कधं एत्थ णिवसिदुं इच्छेसि ? [ सखि, ततो भण । कथमत्र निवसितुमिच्छसि ? ]

राधा—देइ, जत्थ पुरिसणामो वि ण सुणीअदि तत्थ ज्जेव्व एसो जणो रक्खीअदु जधा तहिं अप्पणो व्वदसेसं समावेदि । [ देवि, यत्र पुरुषनामापि न श्रूयते तत्रैवैष जनः रक्ष्यतां यथा तत्रात्मनो व्रतशेषं समाप्यते । ]

चन्द्रावली—( सानन्दमपवार्य ) माहवि, अह्म कादव्वं इमाए च्चेअ दिट्ठिआ अब्भत्थिदं । ता गदुअ दिण्णप्पसादं णअवुंदं एत्थ आणेहि । [ माधवि, मम कर्त्तव्यमनयैव दिष्ट्याऽभ्यर्थितम् । तस्माद् गत्वा दत्तप्रसादां नववृन्दामत्रानय । ]

माधवी—( स्वगतम् ) साहु मंतिदं जं तत्थ णअवुंदावणे राइंदस्सप्पवेससंहावणा वि णत्थि । ता जधा रहस्सभेदो ण होदि तधा भट्टिदारिआणिदेसमिसेण दिव्वं सोहं कराविअ णअवुंदं आणिस्सं। [ साधु मन्त्रितं यत्तत्र नववृन्दावने राजेन्द्रस्य प्रवेशसम्भावनापि नास्ति । तस्माद्यथा रहस्यभेदो न भवति तथा भर्तृदारिकानिदेशमिषेण दिव्यं शपथं कारयित्वा नववृन्दामानेष्यामि । ] ( इति निष्क्रान्ता )

राधा—( स्वगतम् ) वहिणी चंदावलीव्व इअं देइ से पडिभादि । [ भगिनी चन्द्रावलीवेयं देवी मे प्रतिभाति । ]

( प्रविश्य नववृन्दया सह माधवी )

---

मा उत्ताम्य मा विकला भव । कथं केन प्रकारेण । व्रतशेषं समापयतीति । रहस्यभेदो कृष्णेन सहास्या मिलने गुप्तवार्ताया भेदो न भवति । देवी मे प्रतिभातीति । श्रीराधाचन्द्रावल्योर्विन्ध्याचलकन्यात्वेन परस्परभगिनीत्वेन च ज्ञानसत्त्वेऽपि राधिकाया रुक्मिण्यां चन्द्रावलीत्वेन रुक्मिण्याः राधिकात्वेन च ज्ञानाभावादिकन्तु दुर्घटघटनापटीयस्या लीलाशक्तेरेव कार्यं वक्ष्यमाणाकस्मिकं सर्वेषां मिलनपरिचयादिजनितसचमत्कारापारानन्दवारिधेरनुभवार्थमेव । श्रीराधा-

माधवी—आअदा एसा णअवुंदा। [ आगतैषा नववृन्दा। ]

चन्द्रावली—णअवुंदे, पेक्खीअदु एसा मे सही सच्चभामा। [ नववृन्दे, प्रेक्ष्यतामेषा मे सखी सत्यभामा। ]

नववृन्दा—( विलोक्य सखेदमात्मगतम् )

प्रसादीकृत्य देवस्य मयि निर्माल्यमम्बरम्।
देव्याकारितदिव्यायां राधैव कथमर्प्यते॥ २५॥

राधा—( स्वगतम् ) कधं सा एसा णअवुंदा। [ कथमेषा सा नववृन्दा। ] ( इत्युपसर्पति )

नववृन्दा—( स्वगतम् ) हा धिक्। कष्टम्। रभसेनाद्य कृतशपथा हतास्मि।

राधा—( सास्रमात्मगतम् ) अम्मो, इदं तं च्चेअ किं पि पीदंबरं। [ अहो! इदं तदेव किमपि पीताम्बरम्। ] ( इति सवैक्लव्यं विलोकयति )

नववृन्दा—( स्वगतम् )

जनितकमललक्ष्मीविभ्रमे दृष्टिमस्मिन्
गतवति चिरकालादंशुके कंसहन्तुः।
अलघुभिरपि यत्नैर्दुस्तरां संवरीतुं
विकृतिमतुलबाधां हन्त राधा दधाति॥ २६॥

चन्द्रावली ( साशङ्कम् ) णअवुंदे, पुच्छीअदु। कीस सच्चा दुगूलं पेक्खंती भिम्हलेदि। [ नववृन्दे, पृच्छ्यताम्। कस्मात् सत्या दुकूलं पश्यन्ती विह्वला भवति। ]

---

कृष्णयोस्तु वृषभानुपुत्र्यां नन्दनन्दने च प्रविश्य व्रजे विहारं कृतयोर्विन्ध्याचलकन्यावसुदेवपुत्रयोरत्र मिलनादौ पूर्वानुभूतयोस्तयोर्यथार्थज्ञानमेवाभूदित्यनवद्यम्।

प्रसादीति। देव्याकारितदिव्यायामपि देवस्य श्रीकृष्णस्य निर्माल्यमम्बरं प्रसादीकृत्य राधिकैव किमर्प्यते॥ २५॥

रभसेनालोचनेन।

जनितेति। मत्साङ्के कंसहन्तुः पीताम्बरं वीक्ष्यैषा राधा यत्नातिशयैर्दुस्तरां विकृतिं संवरीतुमतुलबाधां दधाति। क्रमो नाम गर्भसन्ध्यङ्गमिदम्।

तथा च—'भावज्ञानं क्रमो यद्वा चिन्त्यमानार्थसङ्गतिः।' ( ना० चं० का० ८५ ) अत्र नववृन्दया राधाया भावज्ञानाच्चिन्त्यमानहरिचिह्नस्य राधाया दर्शनाद् वा क्रमः॥ २६॥

नववृन्दा—दुकूलेऽस्मिन् कार्तस्वरमहसि विस्तारितदृशो
वपुः किन्ते फुल्लैर्वहति तुलनां नीपकुसुमैः ।
त्रुटन्तीभिः किं वा स्फटिकमणिमालाभिरुपमां
भजन्तेऽमी क्षामोदरि नयनयोस्तोयपृषतः ॥ २७ ॥

राधा—( सावहित्थम् ) णअवुंदे, मह वहिणी विअ तुमं दीससि तदो पज्जुत्सुअह्मि । [ नववृन्दे, मम भगिनीव त्वं दृश्यसे ततः पर्युत्सुकाऽस्मि । ]

नववृन्दा—( स्वगतम् ) वन्ध्योऽयं राधिकासङ्गोपने देव्याः प्रयासभारः । न हि कौस्तुभमणीन्द्रमरीचिमण्डली पुण्डरीकाक्षवक्षस्तटीमन्तरेणान्यतस्तिष्ठति ।

चन्द्रावली—( राधाहस्तमादाय ) णअवुंदे, एसा अप्पणो वहिणी तुम्ह हत्थे समप्पिदा । [ नववृन्दे, एषात्मनो भगिनी तव हस्ते समर्पिता । ]

नववृन्दा—देवि, वाढमनुकम्पिताऽस्मि ।

चन्द्रावली—वहिणि सच्चे, जाहि णअवुन्दाए समं अप्पणो अहिरुइदं वासंद्दीचउस्सालं । तत्थ पुप्फोवहारिणी मे बउला तुमं परिचरिस्सदि । [ भगिनि सत्ये, याहि नववृन्दया सममात्मनोऽभिरुचितम् । तत्र पुष्पोपहारिणी मे बकुला त्वां परिचरिष्यति । ]

राधा—देई, मंदभाइणी एसा राहिआ समए सुमरिदव्वा । [ देवि, मन्दभागिन्येषा राधिका समये स्मर्तव्या । ]

चन्द्रावली—( साशङ्कम् ) हला, किं भणिदं तुए ? [ सखि, किं भणितं त्वया ? ]

राधा—( सातङ्कमात्मगतम् ) हद्धी ! हद्धी ! गुरुअरो प्पमादो । [ हा धिक् ! हा धिक् ! गुरुतरः प्रमादः ] ( प्रकाशम् ) देइ, आराहिआ एसा त्ति । [ देवि, आराधिका एषा इति । ]

---

दुकूले इति । कार्तस्वरः स्वर्णस्तत्तुल्ये महसि कान्तौ दुकूले विस्तारितदृशस्ते वपुः फुल्लैः नीपः कदम्बस्तस्य कुसुमैस्तुलनां किं वहति । अमी नयनयोस्तोयपृषतः अश्रुविन्दवः स्फटिकमालाभिरुपमां किं वा भजन्ते ॥ २७ ॥

सङ्गोपने मयि यः प्रयासपूर्वको भावः सम्बन्धो व्यर्थः । तदेवोपमाद्वारेणाह—न हीति । कौस्तुभमणिकिरणमण्डली कृष्णवक्षस्तटीं विना नान्यत्र तिष्ठति । राधा नाम श्रुत्वाह—सखि किं भणितमिति । प्रमादोऽनवधानता । राधिकाशब्दस्यार्थान्तरोपन्यासेन स्वस्य गोपनं कुर्वन्त्याह—हे देवि, आराधिका एषा इति । ग्रन्थकर्त्रा यल्लिखितं श्रीराधादीनां रूपभेदेन द्वारकागमनं तत्तु अत्र

नववृन्दा—( राधया सह परिक्रामन्ती । स्वगतम् )

वसन्ती शुद्धान्ते मधुरिमपरीता मधुरिपो-
रियं तन्वी सद्यः स्वयमिह भवित्री करगता ।
वृताङ्गीमुत्तुङ्गैरविकलमधूलीपरिमलैः
प्रफुल्लां रोलम्बे नवकमलिनीं कः कथयति ॥ २८ ॥

( इति राधया सह निष्क्रान्ता )

माधवी—भट्टदारिए, का क्खु अम्हाणं संका जं सो किल णिव्वंधो उद्दीप्पदि । [ भर्तृदारिके, का खल्वस्माकं शङ्का यत् स किल निर्बन्धः उद्दीप्यते । ]

चन्द्रावली—सहि, का क्खु कुलवदीभत्तुणो अरदिं पि जाणंती [1]काठिण्णं रक्खिदुं प्पहवेदि । [ सखि, का खलु कुलवती भर्तुररतिमपि जानन्ती काठिन्यं रचितुं प्रभवति । ]

( नेपथ्ये )

रम्भास्तम्भावलीनां रचयत पदवीं सीम्नि विन्यासबन्धं
गन्धाम्भःसीकराणां विकिरत निकरं सत्वरं चत्वरेषु ।
देवीभिर्दिव्यपुष्पावलिभिरवलितस्थैर्यमाकीर्यमाणो
विश्वेषां नेत्रवीथीमुदमयमुदगादुद्गिरन् वृष्णिचन्द्रः ॥ २९ ॥

---

स्फुटमेव दृश्यते यत् श्रीराधाचन्द्रावल्योः साक्षाद्दर्शनेऽपि श्रीराधादिरूपेण यथार्थज्ञानं नाभूत् । नववृन्दा…रागवशात् तस्मादश्ये तद्रूपज्ञानमुचितमेव ।

वसन्तीति । इह शुद्धान्तेऽन्तःपुरे वसन्तीयं तन्वी मधुरिपोः करगता भवित्री । उत्तुङ्गैरविकलमधूलीपरिमलैर्बाधारहितमधूनां दूरगामिसुगन्धैर्वृताङ्गीं नवकमलिनीं रोलम्बे भ्रमरे कः कथयति । स्वयमेवागच्छति । 'इदिन्दिरो चञ्चरीको रोलम्बो मधुसूदनः' इति त्रिकाण्डशेषः । मधूली माध्वीकम् । प्रसिद्धिर्नाम नाट्यभूषणमिदम् । तथा हि—'प्रसिद्धिर्लोकविख्यातैरर्थैः स्वार्थस्य साधनम् ।' ( ना० चं० का० १६२ ) अत्र लोकविख्यातस्य प्रफुल्लकमलिनीरोलम्बसङ्गस्य कथनेन स्वार्थस्य राधामाधवसङ्गस्य साधनं प्रसिद्धिः ॥ २८ ॥

स श्रीकृष्णस्य निर्बन्धः उद्दीप्यते । निर्बन्धस्तवानुमतिं विना नान्यायाः करग्रहणमिति । रम्भेति । स्यमन्तकं नीत्वाऽऽगतस्य कृष्णस्य मङ्गलार्थं पदव्याः सीम्नि कदलीस्तम्भरम्भावलीनां विन्यासबन्धं रचयत । चत्वरेषु गन्धाम्भः-सीकराणां निकरं समूहं विकिरत । अवलितस्थैर्यं यथा स्यात्तथा देवीभिर्दिव्यपुष्पावलीभिराकीर्यमाणः वृष्णिचन्द्रः विश्वेषां नेत्रश्रेण्या मुदमुद्गिरन्नुदगात् ॥ २९ ॥

---

1. कट्ठिण्णं—अ० ।

माधवी—भट्टदारिए, दिट्ठिआ विजएदि दुआरवदीणाधो ता णेवच्छ घरं [1]प्पविसेहि। [ भर्तृदारिके, दिष्टया विजयते द्वारवतीनाथः तस्मान्नेपथ्यगृहं प्रविश। ] ( इति निष्क्रान्ते )

( ततः प्रविशति मधुमङ्गलेनानुगम्यमानः कृष्णः )

कृष्णः—( सखेदम् )

विद्योतिन्यकलङ्ककुङ्कुममयी चर्चा ममाङ्गस्य या
माला कण्ठतटस्य चम्पककृता या सौरभोद्गारिणी।
या सिद्धाञ्जनचूर्णशीतलतरा हैमी शलाका दृशा-
स्तां राधां कथमन्तरेण धिगमूस्त्रुट्यन्ति मे रात्रयः॥ ३०॥

मधुमङ्गलः—( कृष्णस्य करे मणिं पश्यन् ) पिअवअस्स, राहिआकंठालंआरो मणिंदो कहं दिआअरेण लद्धो ? [ प्रियवयस्य, राधिकाकण्ठालङ्कारो मणीन्द्रः कथं दिवाकरेण लब्धः ? ]

कृष्णः—सखे,

अनुदिनमतिनम्रा कुर्वती पूर्वमासीत्
पितृपतिपितुरर्घं गर्गवाक्येन राधा।
इति बहलरुचीनां वीचिभिस्सा परीतं
मणिवरमुपहारं नूनमस्मै चकार॥ ३१॥

मधुमङ्गलः—पेख्ख, एसो, किरणकंदलीहिं किं पि [2]वेलख्खण्णं धारेइ मणिंदो। [ पश्य, एष किरणकन्दलीभिः किमपि वैलक्षण्यं धारयति मणीन्द्रः। ]

कृष्णः—सखे, घनचैतन्यविवर्तोऽयं न प्राकृतरत्नसाधारणीं धुरमुद्वोढुमर्हति। ( इति स्यमन्तकं वक्षस्तटे निधाय। सबाष्पम् )

---

नेपथ्यगृहं प्रविश वेषभूषार्थमिति।

विद्योतिनीति। तां राधामन्तरेण विनापि धिगमूः रात्रयस्त्रुट्यन्ति। कीदृशी सा—या ममाङ्गस्य निर्मलकुङ्कुमचर्चा कण्ठस्य चम्पकमाला दृशोः हैमी शलाका। कीदृशी—सिद्धाञ्जनेत्यादि॥ ३०॥

अनुदिनेति। राधा गर्गवाक्येन पितृपतिर्यमस्तस्य पितुः सूर्यस्यार्घ्यं पूर्वमनुदिनं कुर्वती आसीत्। सूर्यलोकं गता सा बहलरुचीनां वीचिभिः परीतं मणिवरमस्मै उपहारं चकार॥ ३१॥

घनचैतन्यविवर्त्तः घनानन्दस्वरूपोऽयं मणीन्द्रः प्राकृतरत्नसाधारणीं। धुरं

---

१. प्पसेहि—च०। २. वेलख्खण्णं—अ०।

धन्यः सोऽयं मणिरविरलध्वान्तपुञ्जे निकुञ्जे
स्मित्वा स्मित्वा मयि कुचपटीं कृष्टवत्युन्मदेन ।
गाढं गूढाकृतिरपि तया मन्मुखाकूतवेदी
निष्ठीवन् यः किरणलहरीं ह्लेपयामास राधाम् ॥ ३२ ॥

मधुमङ्गलः—पिअवअस्स, सुदं जांववंदस्स सआसादो एसो मणि तुए लद्धो । [ प्रियवयस्य, श्रुतं जाम्बवतस्सकाशादेष मणिस्त्वया लब्धः । ]

कृष्णः—अथ किम् ।

मधुमङ्गलः—कहं लद्धो ? [ कथं लब्धः ? ]

कृष्णः—सखे, स भल्लूकमल्लः स्वबिलान्तरे मां विलोमचेष्टं विलोक्य शङ्कितरत्नापहारस्संप्रहारमारेभे ।

मधुमङ्गलः—तदो तदो । [ ततस्ततः ]

कृष्णः—ततश्चिराय मद्विज्ञानतः समाप्ते तु तस्मिन् महासंग्रामतन्त्रे यन्त्रितः स मन्त्री मां सामोदमवादीत् ।

कच्चिद् भीमे स्मरसि जलधौ सेतुबन्धानुबन्धं
कच्चित्तां वा दशमुखशिरःकन्दुकोत्क्षेपकेलिम् ।
तद्विस्मर्त्तुं चरितमथवा नासि शक्तो यदेष
प्राञ्चं रत्नाहरणमिषतः किङ्करं संस्करोषि ॥ ३३ ॥

मधुमङ्गलः—तदो तदो । [ ततस्ततः ]

कृष्णः—ततो हेमकुट्टिमार्पितायां रत्नखट्वायां मां निवेश्य मणीन्द्रमानेतुं प्रकोष्ठान्तरं प्रविष्टे भल्लूकचक्रवर्तिनि मुहूर्त्ततः कापि जरती सदभ्यर्णमासाद्य निवेदितवती—तात, तस्मिन् हठादाकृष्यमाणे मणीन्द्रे जाम्ब-

---

कचाबुद्वोढुं नार्हति । उद्वोढुमित्यत्रारोढुमित्यपि पाठः । धन्य इति सोऽयं मणिर्धन्यः यो मणिस्तया राधया गूढाकृतिरपि आवृतोऽपि मन्मुखेनैवाकूतस्य मदभिप्रायस्य वेत्ता स्मित्वा स्मित्वा निविडान्धकारपुञ्जे निकुञ्जे कुचपटीं मयि कृष्टवति सति किरणलहरीं निष्ठीवन् क्षिपन् राधां ह्लेपयामास लज्जयामास ॥३२॥

मां विलोमचेष्टं प्रतिकूलचेष्टं विलोक्य शङ्कितः मत्कर्तृकः रत्नापहारो येन स भल्लूकमल्लः सम्प्रहारं युद्धमारेभे । ततो मम विज्ञानतः मत्साक्षाज्ज्ञानानन्तरं सङ्ग्रामे समाप्ते निवृत्ते सति मामवादीत् ।

कच्चिदिति । कच्चित् प्रश्ने । जलधौ सेतुबन्धानुबन्धं स्मरसि । तं दशाननशिरःकन्दुकोत्क्षेपकेलिं स्मरसि । अथवा तदेव चरितं विस्मर्त्तुं शक्तो नासि । यद्यस्मात् प्राञ्चं प्राचीनं किङ्करं मां संस्करोषि शुद्धं करोषि ॥ ३३ ॥

मदभ्यर्णं निकटमासाद्याह—विपद्यते विगता भवति नश्यतीत्यर्थः । इष्ट-

वतः कुमारो विपद्यते। अनाकृष्यमाणे खल्विष्टदैवतस्य ते विप्रलम्भः सम्भवतीति महासङ्कटजम्बालमग्नस्य जाम्बवतः करावलम्बं भवन्तमन्तरेण नान्यं पश्यामि। ततस्तामवोचम्—वृद्धे, तस्मिन्नवष्टम्भकदम्बोद्गारिणि मणौ धृततृष्णोपाधिः किमस्याः गौरवोन्नाहः। धात्री—तात न हि—

रत्नं यदा दिनकरप्रतिमल्लरोचि-
भल्लूकमण्डलपतिः स्वयमाजहार।
एतत्तदा क्षणमवेक्ष्य सरोरुहाक्षी
सा क्षीणधैर्यनिकरा विकला बभूव ॥ ३४ ॥

साम्प्रतमपि वत्सा—

स्विद्यन्ती घटिकां क्रमेण घटयत्यक्षामवक्षोजयो-
र्जिघ्रन्ती च मुहुर्मुहूर्तमुपरि घ्राणस्य विन्यस्यती।
धत्ते निश्वसिनी च नीरकणिकाकीर्णं तयोर्नेत्रयो-
रित्थं बन्धुमिव स्यमन्तकमसौ धूताङ्गमालिङ्गति ॥ ३५ ॥

मधुमङ्गलः—तदो तदो [ ततस्ततः ]

कृष्णः—ततश्च कौतुकेनाहमाक्रान्तमनास्तामवादिषम्—धात्रिके, किमत्र कारणं यदेषा तत्र रत्ने प्राज्यं [1]रज्यति। धात्री—तात, कस्तद्विज्ञातुमीष्टे यतः—

रत्ने रतिस्ते महती किमत्र सा भङ्गुरभ्रूरिति पृच्छ्यमाना।
निश्वस्य निश्वस्य तनोति बाष्पं मुखेन्दुमावृत्य पटाञ्चलेन ॥३६॥

---

देवस्य विप्रलम्भो विसंवादः विरोधः सम्भवतीति हेतोर्जाम्बवतः करावलम्बमाश्रयं भवन्तं विना नान्यं पश्यामि। ततस्तां वृद्धामहमवोचम्। अवष्टम्भः सुवर्णस्तस्योद्गारिणि प्रसवकारिणि मणौ धृततृष्णोपाधिः धृतः तृष्णारूप उपाधिः कारणं यत्र तत्र तादृशः गौरवोन्नाहः किमस्याः।

रत्नमिति। सूर्यतुल्यरोचिः कान्तिर्यस्य तद् रत्नं भल्लूकनृपतिर्यदा स्वयमाजहार तदा स्वयमवेक्ष्य सा विकला व्याकुला बभूव ॥ ३४ ॥

साम्प्रतमप्यधुनापि। स्विद्यन्तीति। स्यमन्तकं बन्धुमिव। अक्षामवक्षोजयोः स्थूलस्तनयोरुपरि घटयति। घ्राणस्योपरि विन्यस्यति। नेत्रयोर्धत्ते ॥३५॥

प्राज्यमतिशयम्।

रत्ने इति। अत्र रत्ने किं महती रतिरिति पृष्टा सा भङ्गुरभ्रूः सती निश्वस्य निश्वस्य बाष्पमश्रु तनोति ॥ ३६ ॥

---

1. रतिः–अ०।

ततस्तामभ्यधाम्—धात्रि, किमेषा व्यवहरन्ती तिष्ठति ।

धात्री—

कल्याणीभिर्द्युतिभिरधिकं राधिकामाधवाख्यं
यत्पाञ्चालीमिथुनमतुलं निर्ममे निर्मलाङ्गी ।
तस्यान्योन्यप्रणयमधुरैः सङ्गमालापरङ्गैः[1]
खेलन्ती सा क्षपयति गलद्बाष्पधारं दिनानि ॥ ४७ ॥

ततस्तदाकर्ण्य गम्भीरविस्मयारम्भसंवीतचित्तस्तामेवाहं ससान्त्वमवादिषम्—

धात्रिके, कीदृशं पाञ्चालिकाद्वन्द्वं, तदवलोकने कौतूहलवानस्मि ।

धात्री—तात, यदद्भुतं जगन्मङ्गलोत्तंसयोः स्त्रीपुंसयोर्युग्मम् । तयोर्हि—

त्वदालोके सद्यः स खलु तव तुल्याकृतिधरः
पुमान् मे स्मेरास्यः स्मरणपदवीमभ्युपगतः ।
न जाने सा धन्या क्व नु वसति पुण्ये जनपदे
यदीक्षारम्भे सा स्मृतिमुपजिहीते वरतनुः ॥ ३८ ॥

मधुमङ्गलः—तदो तदो । [ ततस्ततः ]

कृष्णः—ततः सा कक्षान्तरमासाद्य जाम्बवतीचित्तमुत्तम्भयामास । वत्से, तवायं पाञ्चालिकयोर्यः श्यामः पुमान् स कौतुकी विग्रहान्तरेण

---

व्यवहृतिमाह—कल्याणीति । शोभनकान्तिभिरधिकं राधामाधवाख्यं पाञ्चालीमिथुनं प्रतिमाद्वयं निर्ममे । तस्य प्रतिमामिथुनस्य सङ्गमालापमधुरैः सा दिनानि क्षपयति ॥ ३७ ॥

संवीतचित्त आक्रान्तचित्तोऽहमवादिषम् । जगन्मङ्गलोत्तंसयोः जगतां शिरोभूषणरूपयोः तयोः प्रतिमयोर्मध्ये ।

त्वदालोके इति । तवालोके सति स पुमान् तव तुल्याकृतिधरो मे स्मरणपदवीमभ्युपगतः । सा धन्या राधा पुण्ये जनपदे वसतीत्यहं न जाने यदीक्षारम्भे यस्याः प्रेक्षणारम्भे सा वरतनुः सुन्दराङ्गी स्मृतिमुपजिहीते स्मृत्यारूढा भवति ॥ ३८ ॥

उत्तम्भयामास उल्लासयामास । पाञ्चालिकयोर्मध्ये यः पुमान् स जङ्गमीभावमङ्गीकृत्य जङ्गमो भूत्वा पर्यङ्किकामध्यं पर्यङ्केऽध्यास्ते । तदद्भुतं साक्षान्नेत्राभ्यां पश्य ।

---

1. रङ्गे—अ० ।

जङ्गमीभावमङ्गीकृत्य पर्यङ्किकामध्यमध्यास्ते । तदद्भुतं दृष्टेरपरोक्षीक्रियताम् । इत्याकर्ण्य च—

राधायाः प्रतिमां मणिप्रणयिनीं विन्यस्य धात्री करे
सा सद्यस्तरुणा तिरोहिततनुर्मां वीक्ष्य पर्युत्सुका ।
क्रोशन्ती शिथिलीकृतत्रपमपध्वस्ताङ्गवर्णोन्नतिः
सातङ्कं निपपात मच्चरणयोरङ्के कुरङ्गेक्षणा ।। ३६ ।।

( इति वैवश्यं नाटयति )

मधुमङ्गलः—( ससम्भ्रमं पाणिं प्रसार्य ) पिअवअस्स, मह हत्थं ओलंबेहि । ( प्रियवयस्य, मम हस्तमवलम्बय । )

कृष्णः—( तथा कृत्वा सगद्गदम् )

उपतरु ललितां तां प्रत्यभिज्ञाय सद्यः
प्रकृतिमधुररूपां वीक्ष्य राधाकृतिञ्च ।
मणिमपि परिचिन्वन् शङ्खचूडावतंसं
मुहुरहमुदघूर्णं भूरिणा सम्भ्रमेण ।। ४० ।।

मधुमङ्गलः—ही ही पिअवअस्स, एसो कंजिअं पत्थअंत्तस्स सिहरिणीलाहो । [ ही ही प्रियवयस्य, एषः कञ्जिकं प्रार्थयमानस्य शिखरिणीलाभः । ] ( इत्युत्कूजन् ) भो एदं महासोक्खविक्खोहेण पप्फुडइ मे हिअअं ता धारेहि णं । [ भोः इदं महासौख्यविक्षोभेण प्रस्फुटति मे हृदयं तस्माद्धर एतत् । ]

कृष्णः—सखे, क्षणमव्यग्रः समाकर्णय ।

मधुमङ्गलः ( सधैर्यम् ) तदो तदो । [ ततस्ततः ]

कृष्णः—तस्य शान्तिहेतुभिः कोमलालापमाधुरीभिः शान्तिता ( सान्त्विता ) पि सा सुकण्ठी मुक्तकण्ठं क्रन्दती मामवादीत्—

---

राधाया इति । तरुणा वृक्षेण तिरोहिततनुः सा जाम्बवती शिथिलीकृता त्रपा लज्जा यया तथाभूतं यथा स्यात् तथा मच्चरणयोरङ्के निपपात ।। ३९ ।।

इत्युक्त्वा स कृष्णः विवशोऽभूत् ।

उपेति । उपतरु तरुमूले तां ललितां राधाकृतिं राधाप्रतिमाञ्च मणिमपि स्यमन्तकमपि वीक्ष्याहमुदघूर्णम् । सिद्धिर्नाम नाटकभूषणमिदम् । तथा च—'अतर्कितोपपन्नः स्यात् सिद्धिरिष्टार्थसङ्गमः ।' ( ना० चं० का० १६३ ) अत्रेष्टस्य ललितादर्शनस्यातर्कितोपपन्नत्वात् सिद्धिः ।। ४० ।।

ही ही हास्ये । कान्तीति प्रसिद्धं कञ्जिअं । सा सुकण्ठी ललिता मामवा-

अलिन्दे कालिन्दीकमलसुरभौ कुञ्जवसते-
[1]र्वसन्ती वासन्ती नवपरिमलोद्गारिचिकुराम्।
त्वदुत्सङ्गे निद्रासुखमुकुलिताक्षीं पुनरिमां
कदाहं सेविष्ये किसलयकलापव्यजनिनी ॥ ४१ ॥

ततः प्रगाढतरोत्कण्ठापरीतेन हृद्वाष्पमुद्रा मयापि चिरात्तस्यामुद्-घाटिता। हन्त! ललिते,—

सविधमनृतनिद्रामुद्रिताक्षस्य यान्ती
मुहुरियमधुना मे वक्त्रविम्बं चुचुम्ब।
इति सखि! पुरतस्ते ह्रेपिताया मयोच्चै-
र्भ्रुकुटिमधुरमास्यं राधिकायाः स्मरामि ॥ ४२ ॥

मधुमङ्गलः—तदो तदो। (ततस्ततः)

कृष्णः—ततश्च विज्ञाताखिलवृत्तान्तः स जाम्बवान् सानन्दं तत्रागत्य मामब्रवीत्—

सुग्रीवप्रणयितया मुहुः समग्रं
कारुण्यं मयि कुरुते सरोजबन्धुः।
तस्याहं त्वरितमधारयं निदेशान्
निश्शङ्कं गिरिशिखरादिमां पतन्तीम् ॥ ४३ ॥

ततश्च जाम्बूनदालङ्कृता जाम्बवती तेन भल्लूकशिरोमाल्येन शिरोमणिना सह मम पाणौ विन्यस्ता। मयापि विदर्भेन्द्रकृतमर्यादाभङ्गभीरुणा रैवतककन्दरायां सा सुन्दरी रक्षिता। तदिदं रहस्यकथारत्नं यत्नतश्चित्तकोशान्तरे धारणीयं यथा कस्यापि वितर्कपदवीमपि नाधिरोहति।

मधुमङ्गलः—एव्वं एदं। [एवमेतत्।]

कृष्णः—(सवैक्लव्यम्)

---

दीत्। अलिन्दे इति। कुञ्जवसतेरलिन्देऽङ्गणे त्वदुत्सङ्गे निद्रितामिमां राधां सेविष्ये ॥ ४१ ॥

सविधमिति। मिथ्यानिद्रामुद्रिताक्षस्य मम सविधं निकटं यान्ती सती इयं मे वक्त्रविम्बमधुना मुहुश्चुचुम्ब इत्युक्तवता मया ते पुरतोऽग्रे ह्रेपिताया लज्जिताया राधायाः आस्यं स्मरामि ॥ ४२ ॥

सुग्रीवेति। सरोजबन्धुः सूर्यो मयि कारुण्यं कुरुते। तस्य सूर्यस्य निदेशादहं गिरिः गोवर्द्धनस्तस्य शिखरात् पतन्तीमिमां ललितामधारयम् ॥ ४३ ॥

---

१. वसन्तीं वासन्ती—अ०।

निखिलसुहृदामर्थारम्भे विलम्बितचेतसो
मसृणितशिखो यः प्राप्तोऽभून्मनागिव मार्दवम् ।
स खलु ललितासान्द्रस्नेहप्रसङ्गघनीभवन्
पुनरपि बलादिन्धे राधावियोगमयः शिखो ॥ ४४ ॥

( इति विरहार्त्तिं नाटयन् )

ललाटे काश्मीरैः कुरु मम दृशं पावकमयीं
दधीथा भोगीन्द्रद्युतिमुरसि मुक्तामणिसरम् ।
तनोः कण्ठं मुक्त्वा जनय घनसारैर्धवलतां
हरभ्रान्त्या भीतस्तुदति न यथा मां मनसिजः ॥ ४५ ॥

मधुमङ्गलः—सच्चं गरुओ क्खु एसो संदावो ता को क्खु एत्थ पडि-आरोत्ति ण क्खु ओधारेमि । [ सत्यं गुरुः खल्वेषः सन्तापस्तत् कः खल्वत्र प्रतीकार इति न खल्ववधारयामि । ]

कृष्णः—सखे. प्रियाविहारसमभिहारसाक्षिनिकुञ्जवृन्दस्य वृन्दाव-नस्य विलोकनमन्तरेण नात्र परः प्रतीकारस्तदेष मणीन्द्रस्त्वया सत्राजि-ताय समर्प्यताम् । मयाप्यवरोधाय गन्तव्यमिति । ( इति निष्क्रान्तौ )

( इति निष्क्रान्ताः सर्वे )

इति ललितोपलब्धिर्नाम षष्ठोऽङ्कः ।

---

विदर्भराजकृत्यमर्यादात्र रुक्मिण्या अनुमतिं विनाऽन्यस्त्रीपाणिग्रहणनिषेध-रूपा । निखिलेति । यो राधावियोगमयः शिखी वह्निर्निखिलसुहृदामर्थारम्भे विलम्बितचेतसो मे मसृणितशिखः मन्थरितशिखः सन् मनाक्मार्दवं प्राप्त इव न तु प्राप्तोऽभूत् । स पुनरपि बलादिन्धे सुदीप्तोऽभूत् । आक्षेपो नाम गर्भसन्ध्य-ङ्गमिदम् । तथा च 'गर्भबीजसमुत्क्षेपमाक्षेपं परिचक्षते ।' ( ना० चं० का० ९१ ) इति । अत्र सुहृदर्थसम्पादनेन गर्भितस्य राधानुरागस्य पुनर्ललितादर्शनादुत्क्षे-पादाक्षेपः ॥ ४४ ॥

ललाटे इति । हरभ्रान्त्या महादेवबुद्ध्या कन्दर्पो यथा मां न तुदति । तुद् व्यथने धातुः । तत्र प्रकारमाह—मम ललाटे काश्मीरैः केशरैः पावकमयीं दृशं कुरु त्रिनेत्रं कुरु । भोगीन्द्रः शेषनागः घनसारैश्चन्दनैः कण्ठं त्यक्त्वा तनोर्धवलतां जनय । नीलकण्ठत्वात् कण्ठं मुक्त्वाह ॥ ४५ ॥

प्रियया सह विहारस्य समभिहारः पौनःपुन्यं भृशं वा तस्य साक्षिभूतं निकुञ्जानां वृन्दं समूहो यत्र तस्य वृन्दावनस्य विलोकनं विना परोऽन्यः प्रती-कारोऽत्र न । अवरोधोऽन्तःपुरः ।

इति षष्ठाङ्क-व्याख्या ।

---

# सप्तमोऽङ्कः

( ततः प्रविशति बकुलयाराध्यमाना राधा )

राधा—( संस्कृतेन )

मयायासीद्दूरे दिगपि हरिगन्धप्रणयिनी
प्रपेदे खेदेन त्रुटिरपि महाकल्पपदवीम् ।

---

नववृन्दावने श्रीराधया सह श्रीकृष्णस्य मिलनादिकं वक्तुं सप्तमाङ्कमारभते—तत इत्यादि । प्रकर्याः प्रकृत्या नियताप्त्यवस्थया योगो विमर्शसन्धिरुच्यते । तत्र प्रकरीलक्षणं यथा—

यत्केवलं परार्थस्य साधकञ्च प्रदेशभाक् ।
प्रकरी सा समुद्दिष्टा नववृन्दादिवृत्तवत् ॥ ( ना०चं०का० ३५ )

तथा च भरते—

प्रासङ्गिकं प्रदेशस्थं चरितं प्रकरी मता ।
प्रकरी नायकस्य स्यान्न स्वकीयं फलान्तरम् ॥ ( ना०शा० )

नियताप्तिलक्षणं यथा—

नियताप्तिरविघ्नेन कार्यसंसिद्धिनिश्चयः ।
अपायाभावतः प्राप्तिर्नियताप्तिस्तु निश्चिता । ( ना०चं०का० ४३ )

विमर्शसन्धिलक्षणं तदङ्गानि च यथा—

यत्र प्रलोभनक्रोधव्यसनाद्यैर्विमृश्यते ।
बीजार्थो गर्भनिर्भिन्नः स विमर्श इतीर्यते ॥
प्रकरीनियताप्तानुगुण्यादत्राङ्ककल्पनम् ।
बकुलानववृन्दादिप्रलोभनवशाद् यथा ॥
देवीशङ्कादितश्चात्र प्रेमबीजविमर्शनम् ।
राधामाधवयोः प्रोक्तं स्फुटं ललितमाधवे ।
अववादोऽत्र[1] सम्फेटो विद्रवद्रवशक्तयः ।
द्युति-प्रसङ्गौ छलनं व्यवसायो विरोधनम् ।
प्ररोचना विचलनमादानं स्युस्त्रयोदश । ( ना०चं० ९२–९५ )

मयेति । इह श्रीकृष्णविरहजविपदि । हन्त खेदे । कं शरणमहं करवै ।

---

1. अववादोऽथ—अ० ।

दहत्याशासर्पिर्विरचितपदः प्राणदहनो
बलान्मां दुर्लीलः कमिह करवै हन्त शरणम् ॥ १ ॥

बकुला—हला सच्चे, सिणेहेण णअवुंदाए वण्णिदं तुम्ह रहस्सं अम्हि । [1]तधावि किं पि विण्णविस्सं । [ सखि सत्ये, स्नेहेन नववृन्दया वर्णितं तव रहस्यं [2]मयि । तथापि किमपि विज्ञापयामि । ]

राधा—कामं विण्णवेहि । [ कामं विज्ञापय । ]

बकुला—अम्ह राइन्दो सुंदरसेहरो तिल्लोअं सासेदि सो जइ आणवेदि तदो देइए रुप्पिणीए वि पडिउला भविअ तस्स तुमं विण्णवेमि । [ अस्मद्राजेन्द्रः सुन्दरशेखरः त्रिलोकं शास्ति स यद्याज्ञापयति तदा देव्या रुक्मिण्या अपि प्रतिकूला भूत्वा तस्य त्वां विज्ञापयामि । ]

राधा—( संस्कृतेन )

शास्तु द्वारवतीपतिस्त्रिजगतीं सौन्दर्यपर्याचितः
किन्नस्तेन विरम्यतां कथमसौ शापाग्निरुज्ज्वाल्यते ।
युष्माभिः स्फुटयुक्तकोटिगरिमव्याहारिणीभिर्बला-
दाक्रष्टुं व्रजराजनन्दनपदाम्भोजान्न शक्या वयम् ॥ २ ॥

बकुला—सहि, पुच्छ हिदं णअवुंदं । [ सखि, पृच्छ हितं नववृन्दाम् । ]

राधा—कहिं गदा णअवुंदा ? [ कुत्र गता नववृन्दा ? ]

बकुला—देइए आहूदा अंतेउरे । [ देव्या आहूताऽन्तःपुरे । ]

राधा—हंत ! परतंतह्मि किदा हदद्देव्वेण । [ हन्त ! परतन्त्राऽस्मि कृता हतदैवेन ]

---

शरणाभावे हेतुमाह—हरिगन्धयुक्ता दिगपि दूरे अयासीत् । खेदेन त्रुटिकालमपि महाकल्पपदवीं प्रपेदे । आशैव सर्पिघृतं तत्र विरचितं पदं स्थानं येन स प्राणरूपो दहनो वह्निर्मां दहति । 'पदं व्यवसितं···स्थानम्' इत्यमरः । कृष्णप्राप्त्याशया प्राणा न यान्ति । कश्चिदिह विद्रवनामविमर्शसन्ध्यङ्गस्थाने खेदं नाम सन्ध्यङ्गं पठति । तथा च—'मनश्चेष्टासमुत्पन्नः श्रमः खेद इतीर्यते ।' ( ना० चं० का० १०४ ) अत्र मनसः श्रमात् खेदः ॥ १ ॥

कामं यथेष्टम् । 'अकामानुमतौ कामः' । शास्त्विति । नन्दनन्दनपदाम्भोजात्स्फुटयुक्तिकोटीनां गरिमा गुरुत्वं यत्र तत्र व्याहारे उक्तौ शीलं यासां ताभिः युष्माभिः वयमाक्रष्टुं न शक्याः । सम्फेटो नाम विमर्शसन्ध्यङ्गमिदम् । तथा च 'सम्फेटो रोषभाषणम्' ( ना० चं० का० ९६ ) अत्र बकुलां प्रति गूढरोषोक्त्या सम्फेटः ॥ २ ॥

---

1. तथवि—अ० ।
2. रहस्यास्मि—ब० ।

( प्रविश्य नववृन्दा )

नववृन्दा—सखि सत्ये, मा विषादं कृथाः। पश्य—

पादे निपत्य बदरीमवलम्बमाना
कान्तं रसालमनुविन्दति माधवीयम्।
प्राणेशसङ्गमविधौ विनिविष्टचित्ता
नो पारवश्यकदनं मनुते हि साध्वी ॥ ३ ॥

राधा—का क्खु तुह हत्थे णेवच्छसामग्गी। [ का खलु तव हस्ते नेपथ्यसामग्री। ]

नववृन्दा—शच्योपहारीकृतानि देव्यै दिव्यानि माल्यदुकूलादीनि तान्येषा सखीभ्यो विभजन्ती त्वामपि वण्टकेन पुरश्चकार।

राधा—किं मे दुक्खाणलस्स इंधणेण इमिणा प्पसाहणेण। [ किं मे दुःखानलस्येन्धनेनानेन प्रसाधनेन। ]

नववृन्दा—सखि, भानुदेवस्य सेवायामुपयोक्ष्यते।

राधा—हला, भणिदह्मि भाणुणा—वच्छे, साअरकच्छे णिविट्ठाए दुआरवदीपुरीए गब्भे णिम्मिदं णअवुंदावणं प्पविसिअ तिणा अप्पणो पराणणाधेण सद्धं विहरेहि। [ सखि, भणितास्मि भानुना—वत्से सागरकच्छे निविष्टाया द्वारवतीपुर्या गर्भे निर्मितं नववृन्दावनं प्रविश्य तेनात्मनः प्राणनाथेन सार्द्धं विहर। ]

नववृन्दा—चारुलोचने, व्यभिचारपराचीनानि खलु भवन्ति दैववराणां वचांसि।

राधा—( संस्कृतेन )

मधुरामधिराजते हरिः सखि राजेन्द्रपुरेऽत्र संवृता।
निवसाम्यहमित्यसम्भवः प्रियसङ्गः प्रतिभासते मम ॥ ४ ॥

---

पादे निपत्येति। पश्य माधवी लता बदरीवृक्षस्य पादे निपत्य तां बदरीमवलम्बमाना कान्तं रसालमाम्रं प्राप्नोति। पादमत्र वृक्षमूलम्। माधवी आदौ वृक्षमूलं गत्वा क्रमेणोपरि गच्छति साध्वी तथा प्राणेशप्राप्तौ पारवश्यकदनं न मनुते। कश्चित्तु छलं नाम विमर्शसन्धेरङ्गमपठित्वा तत्स्थाने छादनं पठति। तथा च—'कार्यार्थमपमानादेः सहनं छादनं मतम्' ( ना० चं० का० १०६ )। अत्र स्पष्टमेव छादनम् ॥ ३ ॥

इन्धनेन काष्ठेन। सागरकच्छे समुद्रतीरे। दैवतवराणां वचांसि व्यभिचारपराचीनानि पराङ्मुखानि सत्यान्येव भवन्ति।

श्रीसूर्यदेववाक्यात् प्रतीतावप्यनुरागवशादाह—मधुरायामिति। मधुरायां हरिः राजेन्द्रपुरे द्वारकायामहं निवसामीति हेतोः प्रियसङ्गमोऽसम्भवः ॥ ४ ॥

नववृन्दा—

अलं विलापैः समयक्रमस्य दुरूहरूपा गतयो भवन्ति ।

शरन्मुखे पश्य सरस्तटीषु खेलन्त्यकस्मात् खलु खञ्जरीटाः ॥५॥

राधा—अणिहाणे खंजरीटो वि अअसाहीणे क्खु प्पदेसे महापुरिसो ण रमेदि । [ अनिधाने खञ्जरीट इवास्वाधीने खलु प्रदेशे महापुरुषो न रमते । ]

नववृन्दा—( विहस्य ) विभ्रमाकुले व्रजेन्द्रस्यात्र कथमस्वाधीनता नावधारिता ।

राधा—( सेर्ष्यम् ) अइ राइन्दस्स कीलावणमक्कटि चिट्ठ चिट्ठ । [ अयि राजेन्द्रस्य क्रीडावनमर्कटि, तिष्ठ तिष्ठ । ]

नववृन्दा—सरले, व्रजेन्द्रमेव राजेन्द्रं विद्धि ।

राधा—( सौत्सुक्यम् ) अवि सच्चं एदं ! [ अपि सत्यमेतत् ! ]

नववृन्दा—( स्वगतम् ) हन्त ! कथं यदृच्छया विस्मृतशपथास्मि संवृत्ता । ( प्रकाशम् ) न केवलं राजेन्द्रमेव रामचन्द्रमुपेन्द्रञ्च राजेन्द्रं वदन्ति ।

बकुला—हला अदो भणामि णिब्बंधं [1]मुक्किअणं तणुं देहिए राइन्दं [ सखि, अतो भणामि निर्बन्धमुत्काराणां तनुं देहि राजेन्द्राय । ]

राधा—( संस्कृतेन )

यस्योत्तंसः स्फुरति चिकुरे केकिपत्रप्रणीतो
हारे कण्ठः विलुठति कृतः स्थूलगुञ्जावलीभिः ।
वेणुर्वक्त्रे रचयति रुचिं हन्त चेतस्ततो मे
रूपं विश्वोत्तरमपि हरेर्नान्यदङ्गीकरोति ॥ ६ ॥

---

समयगतयो दुर्घटघटनापटीयस्यो भवन्तीत्याह—अलमिति । प्ररोचना नाम विमर्शसन्ध्यङ्गमिदम् ( ? ) । तथा च—'सिद्धवद्भाविनोऽर्थस्य सूचनात् स्यात् प्ररोचना ।' ( ना० चं० का० १०२ ) अत्र खञ्जरीटदृष्टान्तेन भाविकृष्ण-सङ्गमस्य सूचनात् प्ररोचना ॥ ५ ॥

अनिधानेऽनिधौ । न निधीयते न स्थीयते यत्र तस्मिन् । अत्र स्थाने कथमस्वाधीनता । विस्मृतशपथेति—माधवीदत्तशपथं तु श्रीराधायाः समर्पणसमये कापि सुन्दरी त्वयि समर्पणीया तस्याः समीप एव व्रजेन्द्र एव राजेन्द्रः इति रहस्यं न वक्तव्यमत्र ते शपथमिति । देहीत्यर्थे देहिए ।

यस्येति । यस्योत्तंसः शिरोभूषा केकिर्मयूरस्तस्य पुच्छप्रणीतः । कण्ठे गुञ्जाहारः । वक्त्रे वेणुः । ततो रूपादन्यरूपं नाङ्गीकरोति । व्यवसायो नाम

1. मुक्किअणं देहि राइन्दं–व. ।

बकुला—सहि, उज्जुअबुद्धिआसि जं कढ़ोरे वि तस्सिं सुट्ठु रज्जेसि ।
[ सखि, ऋजुबुद्धिकासि यत् कठोरेऽपि तस्मिन सुष्ठु रज्यसे ! ]

राधा—( ससम्भ्रमं संस्कृतेन ) मुग्धे, मेवं ब्रवीः ।

औदासीन्यधुरा परीतहृदयः काठिन्यमालम्बतां
कामं श्यामलसुन्दरो मयि सखि स्वैरी सहस्रं समाः ।
किन्तु भ्रान्तिभरादपि क्षणमिदं तत्र प्रियेभ्यः प्रिये
चेतो जन्मनि जन्मनि प्रणयितादास्यं न मे हास्यति ॥ ७ ॥

नववृन्दा—बकुले, सुव्रतेयं तद्विरम्यताम् ।

राधा—( संस्कृतेन )

लताश्रेणी सेयं सहचरि चिरं सेवितचरी
पुरस्तेऽमी भूयो धृतपरिचयाः कुञ्जनिचयाः ।
अमूस्ता यामुन्यो मुहुरटितपूर्वास्तटभुवो
व्यथामेव क्रूरां विदधति विना गोकुलपतिम् ॥ ८ ॥

नववृन्दा—बकुले, विलोक्यतामस्य बलीयः सन्तापमण्डलम् । तदद्य कालिन्दीकुलावलम्बिनि कदम्बमूले नलिनीसंवर्तिकाभिः कल्पय तल्पम् ।

बकुला—जहा भणेदि पिअसही । [ यथा भणति प्रियसखी । ]

( इति निष्क्रान्ता )

राधा—( संस्कृतेन )

सोढा गोष्ठभुवां वियोगजनिताः प्राणच्छिदो वेदनाः
प्रेष्ठानां निजजीविताद‍पि मया तासां सखीनामपि ।

---

विमर्श [1]सन्ध्यङ्गं द्वितीयमिदम् कस्यचिन्मते । यथा—'व्यवसायस्तु विज्ञेयः प्रतिज्ञाहेतुसम्भवः ।' ( सा० द० ६।११२ ) । अत्र प्रतिज्ञा स्फुटमेव ॥ ६ ॥

ऋजुबुद्धिका सरलबुद्धिरसि । औदासीन्येति । मे चेतोऽपि न हास्यति कुतोऽस्मिन् जन्मन्यहं हास्यामि ॥ ७ ॥

लतेति । सेवितचरी सेवितपूर्वा यामुन्यो यमुनायास्तटवर्तिभूमयः । मुहुरटितपूर्वाः । अट् गतौ । श्रीकृष्णं विनैताः क्रूरां व्यथां विदधति ॥ ८ ॥

संतापमण्डलं बलीयस्तद्वारणाय नलिन्याः संवर्तिकाभिः नवदलैः तल्पं शय्यां कल्पय । 'संवर्तिका नवदलम्' ( इत्यमरः ) ।

सोढेति । गोष्ठभुवां व्रजवासिनां सखीनामपि वियोगजनिता वेदना मया

---

१. विमर्शसन्ध्यङ्गं कस्यचिन्मते—अ० ।

सेयं हन्त न पद्मबान्धववचोविस्तम्भगम्भीरता
कं वा सम्प्रति मामसीषहदहृत्क्लेशं दुराशावली ॥ ९ ॥

नववृन्दा—क्व ते प्रियसखी विशाखा ?

राधा—सा क्खु कुसलिणी पिदरं आपुच्छिअ पुहवीतले आअदत्थि । केअलं ललिदा ज्जेव मं दुक्खावेदि । [ सा खलु कुशलिनी पितरं पृष्ट्वा पृथिवीतले आगतास्ति । केवलं ललितैव मां दुःखापयति । ] ( इति रोदिति )

नववृन्दा—ललितायाः सा दशा कुतस्त्वया श्रुता ?

राधा—सग्गारोहणसमए खेअराहिंतो । [ स्वर्गारोहणसमये खेचरतः । ]

नववृन्दा—त्वयाद्य निशीथे ललितामाभाष्य किमपि स्वप्नायितम् ।

राधा—कीदिसं तं ? [ कीदृशं तत् ? ]

नववृन्दा—

श्वाफल्केः सफलीबभूव ललिते हल्लालसावल्लरी
हा धिक् पश्य मुरान्तकोऽयमुररीचक्रे रथारोहणम् ।
इत्थं ते करुणस्वरस्तवकितं स्वप्नायितं शृण्वती
मन्ये तन्त्रि पतत्तुषारकपटाच्चक्रन्द यामिन्यपि ॥ १० ॥

राधा—( सव्यथं संस्कृतेन )

चिराद्य स्वप्ने मम विविधयत्नादुपगते
प्रपेदे गोविन्दः सखि नयनयो[1]रञ्जनभुवम् ।
गृहीत्वा हा हन्त त्वरितमथ तस्मिन्नपि रथं
कथं प्रत्यासन्नः स खलु परुषो राजपुरुषः ॥ ११ ॥

---

सोढा । सूर्यवाक्यविस्रम्भेण गम्भीरिता गभीरीकृता सा दुराशावली कं वा क्लेशं मां नासीषहत् ॥ ९ ॥

श्वाफल्केरिति । श्वाफल्केरक्रूरस्य हल्लालसा सफलीबभूव । हा धिक् पश्येत्यादि । यामिनी रजनी । तुषारो हिमकणस्तच्छलात् चक्रन्द । अपिकाराद-स्माकं का वार्ता । स्वप्ने नाम सन्ध्यन्तरमिदम् । तथा च—'स्वप्नो निद्रान्तरे किञ्चिजल्पितं परिचक्षते ।' ( ना० चं० का० १४५ ) । अत्र राधायाः स्वप्ना-यितम् ॥ १० ॥

चिरादिति । तस्मिन् समये श्रीकृष्णदर्शनसमयेऽपि स राजपुरुषोऽक्रूरः रथं गृहीत्वा प्रत्यासन्नः । अववादो नाम विमर्शसन्ध्यङ्गमिदम् । तथा च 'दोषप्रख्या-ववादः स्यात् ।' ( ना० चं० का० ९६ ) । अत्राक्रूरस्य क्रौर्यकीर्तना-दववादः ॥ ११ ॥

---

१. रञ्जणभुवमिति नाटकचन्द्रिकाधृतः पाठः ।

( प्रविश्य बकुला )

बकुला—हला, णिम्मिदसेजह्मि। ता उत्थेहि। [ सखि, निर्मितशय्यास्मि। तदुत्तिष्ठ। ] ( इति तिस्रः परिक्रामन्ति )

नववृन्दा—( ससम्भ्रमम् )

इतस्त्वं मायासीः कथमपि निवर्तस्व रभसा-
दशोकाक्षः शाखी प्रियसखि पुरस्ते निवसति।
पदालम्भादम्भोरुहमुखि तवास्मिन् कुसुमिते
हताशानां भावी कुलिशवदलीनां कलकलः॥ १२॥

राधा—( निवृत्य। सलज्जं संस्कृतेन )

कंसारेरवलोकमङ्गलविनाभावादधन्येऽधुना
बिभ्राणा हतजीविते प्रणयिनां नाहं सखि प्राणिमि।
क्रूरेयं न विरोधिनी यदि भवेदाशामयी शृङ्खला
प्राणानां ध्रुवमर्बुदान्यपि ततस्त्यक्तुं सुखेनोत्सहे॥ १३॥

बकुला—इअं पुरदो सेज्जा। [ इयं पुरतश्शय्या। ]

राधा—( शय्यामधिशय्य। स्वगतम् ) एत्थ वुंदावणे मे दुल्लहं पराणधारणं। ता कं पि उआअं करिस्सं। [ अत्र वृन्दावने मे दुर्लभं प्राणधारणम्। तस्मात् कमप्युपायं करिष्यामि। ] ( प्रकाशम् ) णअवुंदे, णिच्चकम्मं विणा खिण्णह्मि। [ नववृन्दे, नित्यकर्म विना खिन्नास्मि। ]

नववृन्दा—सखि, किन्ते नित्यकर्म ?

---

इत इति। तव पदालम्भात् पदस्पर्शात् तस्मिन्नशोकवृक्षे कुसुमिते सति हताशानामलीनां कलकलः शब्दः कुलिशवत् वज्रवद् भावी भविष्यति॥ १२॥

सलज्जमिति स्वचरणस्पर्शादशोकपुष्पानामुत्पादनेन स्वोत्कर्षश्रवणात्।

कंसारेरिति। कृष्णावलोकमङ्गलं विनाऽधन्ये हतजीविते प्रणयितां बिभ्राणाऽहं न प्राणिमि न जीवामि। आशा यदि विरोधिनी न स्यात्तदा प्राणानामर्बुदान्यपि त्यक्तुमुत्सहे। व्यवसायो नाम विमर्शसन्ध्यङ्गमिदम्। तथा च—'व्यवसायस्तु सामर्थ्यात्[1] प्रख्यापनमुदीर्यते।' ( ना० चं० का० १०० )। अत्र प्राणार्बुदत्यागाय सामर्थ्यकथनाद् व्यवसायः॥ १३॥

कमप्युपायमिति। श्रीकृष्णविरहादिजनितदुःखादीनां नाशपूर्वकं श्रीकृष्णस्याशु प्राप्तौ नित्यसिद्धाया अपि श्रीकृष्णप्रतिमासेवनस्य हेतुत्वमिवोक्त्वा साधकानां कैमुत्यं दर्शयन्त्याह—णअवुंदे इति।

---

१. सामर्थ्यस्याख्यापनमिति ना० चं० पु० पाठः।

राधा—( संस्कृतेन )

खेलन्मञ्जुलवेणुमण्डितमुखी साचिभ्रमँल्लोचना
मुग्धे मूर्ध्नि शिखण्डिनी धृतवपुर्भङ्गीत्रयाङ्गीकृतिः ।
कैशोरे कृतसङ्गतिः सुरमुनेराराध्यते शासना-
दस्माभिः पितुरालये जलधरश्यामद्युतिर्देवता ॥ १४ ॥

नववृन्दा—( स्वगतम् ) विज्ञातमस्याः कृष्णाकृतिवीक्षणाय पाटवम् । तदद्य वृन्दावनालङ्काराय महेन्द्रशिल्पिना कल्पितां महेन्द्रनीलमणिमयीं मुकुन्दमूर्तिमस्याः समक्षयामि । ( प्रकाशम् ) सखि, त्वदिष्टदेवमाविर्भाव-यितुमसौ प्रयामीति । ( इति निष्क्रान्ता )

राधा—( पुरो दृष्ट्वा । संस्कृतेन )

रासात्तिरोहिततनुर्निशि यस्य पुष्पै
श्चूडाञ्चकार चिकुरे मम पिच्छचूडः ।
कूले कलिन्ददुहितुर्धृतकन्दलोऽयं
मां दन्दहीति स मुहुर्नवकर्णिकारः ॥ १५ ॥

( प्रविश्य नववृन्दा )

नववृन्दा—सखि, तूर्णमागत्य पश्य दैवतम् ।

राधा—णअवुंदे, आहरेहि कं पि सेवोवहारं । [ नववृन्दे, आहर कमपि सेवोपहारम् । ]

नववृन्दा—बकुले, वासन्तीगृहादानय देव्या दत्तं दिव्यमाल्याम्बरम् ।

( बकुला निष्क्रान्ता )

नववृन्दा—सखि राधिके,

यैः पुष्पावलिगन्धधूपबलिभिर्दामोदरः सेव्यते

---

खेलन्निति । सुरमुनेर्नारदस्य शासनात् पितुरालयेऽस्माभिर्जलधर इव श्यामद्युतिर्यस्याः सा देवता आराध्यते । देवता कीदृशी—खेलन्मनोज्ञवेणुना मण्डितं मुखं यस्याः साचि वक्रे भ्रमँल्लोचने यस्या मुग्धे मनोज्ञे मूर्ध्नि शिखण्डो मयूर-पुच्छं तद्युक्ता । धृता वपुषि भङ्गीत्रयस्याङ्गीकृतिर्यया । कैशोरे वयसि स्थिता । प्रसङ्गो नाम विमर्शसन्ध्यङ्गस्य द्वितीयं प्रकारमिदम् । तथा च—'प्रसङ्गं कथ-यन्त्यन्ये गुरूणां परिकीर्तनम् ।' ( ना० चं० का० ९८ ) । अत्रेष्टदेवनारदयोः पितुश्च कीर्तनाद् गुरुकीर्तनम् ॥ १४ ॥

महेन्द्रशिल्पिना विश्वकर्मणा । प्रयामि गच्छामि ।

रासादिति । धृतकन्दलोऽयं नवकर्णिकारः स्वर्णवर्णकमलाकृतिपुष्पविशेषः मां दन्दहीति ॥ १५ ॥

यैरिति । स्तुतिपूर्वं यथा स्यात्तथा उत्तमनतीः कुर्वद्भिर्यैः पुष्पादिभिर्दामोदरः

कुर्वद्भिः स्तुतिपूर्वमुत्तमनतीस्ते तावदन्ये जनाः ।
सेवा कोकिलकण्ठि गोकुलभुवां युष्मादृशीनां हरौ
वक्त्रालोककलाकरम्बितपरीरम्भादिलीलामयी ॥ १६ ॥

( इति परिक्रम्य ) पश्य सोऽयमुपकण्ठे बाढमुत्कण्ठितस्तिष्ठते तुभ्यमभीष्टदेवः ।

राधा—( दूरादेव विलोक्य । सोत्कण्ठं संस्कृतेन )
अजनि सफलः सोऽयं भूयान् कलेवरधारणे
सहचरि परिक्लेशो योऽभून्मया किल सेवितः ।
अहह यदिमाः श्यामश्यामाः पुरो मम वल्लवी
कुलकुमदिनीबन्धोस्तास्ताः स्फुरन्ति मरीचयः ॥ १७ ॥
( परिक्रम्य । पिण्डिकामासादयन्ती सगद्गदम् )
दग्धं हन्त दधानया वपुरिदं यस्यावलोकाशया
सोढा मर्मविपाटने पटुरियं पीडातिवृष्टिर्मया ।
कालिन्दीयतटीकुटीरकुहरक्रीडाभिसारव्रती
सोऽयं जीवितबन्धुरिन्दुवदने भूयः समासादितः ॥ १८ ॥
( इति प्रेमावेशेन साक्षादिव कृष्णं सम्भावयन्ती )

---

सेव्यते तेऽन्ये जनाः । युष्मादृशीनां सेवा वक्त्रालोककलाभिर्वैदग्ध्यैः करम्बिता युक्ता परिरम्भादिलीलामयी ॥ १६ ॥

तुभ्यं त्वदर्थे उत्कण्ठितः सोऽयमभीष्टदेवः । तिष्ठते इति प्रकाशनार्थे आत्मनेपदम् । आत्मानं प्रकाशयतीत्यर्थः ।

अजनीति । कलेवरधारणे भूयान् यः परिक्लेशो मया सेवितोऽभूत् । सोऽयं परिक्लेशः सफलोऽजनि । यद्यस्मात् वल्लवीकुलचन्द्रस्य तास्ताः श्यामश्यामाः मरीचयः मम पुरः स्फुरन्ति । प्रकारान्तरेण प्ररोचना नाम विमर्शसन्ध्यङ्गमिदम् । तथा हि—'सिद्धवद्भाविनोऽर्थस्य सूचना स्यात् प्ररोचना ।' ( ना० चं० का० १०२ )। अत्र प्रतिमासन्दर्शनेन भाविकृष्ण-सङ्गमनस्य सिद्धवत् सूचनात् प्ररोचना ॥ १७ ॥

दग्धमिति । दग्धमिदं वपुर्यस्यावलोकेच्छया दधानया मया पीडातिवृष्टिः सोढा सोऽयं जीवितबन्धुः भूयः समासादितः प्राप्तः । कीदृशोऽयम्—कालिन्दीयेत्यादि । पीडा कीदृशी—मर्मणः विपाटने उत्पाटने पटुः । पताकास्थानकमेतत्—तथा हि—

सहसैवार्थसम्पत्तिर्गुणवत्युपचारतः ।
पताकास्थानकमिदं प्रथमं परिकीर्तितम् ॥ (ना० चं० का० १८९)

प्रेम्णा व्यक्तीकृतमिह तथा कोमलत्वं त्वयाग्रे
येन ज्ञातो निखिलविधिभिर्मामकीनस्त्वमासीः ।
काठिन्यन्ते विदितमधुना तादृशं हन्त ! यस्मात्
सम्भाव्योऽभूदयमपि न मे तावकत्वाभिमानः ॥ १९ ॥

नववृन्दा—( स्वगतम् ) हन्त ! कामप्यनुरागसागरस्य सेयमुत्तरङ्गता ।

राधा—( जनान्तिकं । संस्कृतेन )

न ब्रूते परिहासपेशलकलासन्दर्भगर्भां गिरं
दोस्तम्भद्वयसम्भ्रमान्न च परीरम्भाय सम्बध्यते ।
लीलाभङ्गुरचिल्लिरेष ललितोल्लासि स्मितक्षोदिमा
धूर्तानां सखि शेखरः कुटिलया दृष्ट्या परं लेढि माम् ॥ २० ॥

नववृन्दा—हला, नागरधूर्त्तधुरीणानां निगूढेयं नर्मचातुरी तदेनं त्वञ्च दृगन्तेन सन्तर्जयन्ती वक्रोक्तिभिरुपालभेथाः ।

राधा—( साचि समीक्ष्य )

चिरासङ्गान्मन्ये कुलिशसुहृदः कौस्तुभमणे-
रितः सङ्क्रान्तस्ते म्रदिमपरिपन्थी हृदि गुणः ।

---

अत्र प्रतिबिम्बे सोऽयं जीवितबन्धुरित्युपचारप्रयोगेण भाविनः कृष्णसङ्गस्य सूचनात् सहसार्थसम्पत्तिरूपमिदं पताकास्थानकं प्रथमम् ॥ १८ ॥

प्रेम्णेति । इह मयि अग्रे तथा कोमलत्वं प्रेम्णा व्यक्तीकृतं येन कोमलत्वेन निखिलविधिभिर्निखिलविधानैस्त्वं मामकीनः ममैवायमिति ज्ञानमासीरभूः । अधुना तादृशं काठिन्यं ते विदितम् । यस्मात् काठिन्यात् तावकत्वाभिमानोऽपि मे मम सम्भाव्यो नोऽभूत् । मम त्वमित्याकारकमधुस्नेहमयी श्रीराधाऽहमिति प्रतीतिः पुराऽऽसीत् तवाऽहमित्यभिमानमयी घृतस्नेहाऽहमित्याकारकं ज्ञानमप्यधुना न भवतीत्यर्थः ॥ १९ ॥

न ब्रूते इति । हे सखि नववृन्दे एष श्रीकृष्णः धूर्त्तानां शेखरः परं केवलं कुटिलया दृष्ट्या मां लेढि आस्वादयति । परिहासनैपुण्यकलायाः सन्दर्भो गर्भे यस्यास्तां गिरं न ब्रूते । दोःस्तम्भद्वये यः सम्भ्रमस्तस्मात्परीरम्भाय न सम्बध्यते नारभते । स कीदृशः—लीलया भङ्गुरे चिल्ली भ्रुवौ यस्य ललितोल्लासिस्मितस्य क्षोदिमा अल्पत्वं यस्य ॥ २० ॥

चिरादिति । वज्रसुहृदः कौस्तुभमणेः चिरासङ्गान्म्रदिमपरिपन्थी विरोधिगुणस्तु काठिन्यं ते हृदि सङ्क्रान्तः सञ्चितः प्राप्तः इत्यहं मन्ये । इतरथा ईशानः

त्वमेताभिः कष्टावलिभिरवलीऽढेपि कुरुषे
जनेऽस्मिन्नीशानः कथमितरथा वञ्चनमिदम् ॥ २१ ॥

(इत्यपवार्य) हला, पेक्ख। अजुत्तं अजुत्तं जं णीलुप्पलकोमलो वि वणमाली कक्कसं वंसिअं च्चेअ चुंबेदि। ता इदो णं आअड्ढिअ गेण्हिस्सं। [सखि, पश्य। अयुक्तमयुक्तं यन्नीलोत्पलकोमलोऽपि वनमाली कर्कशां वंशिकामेव चुम्बति। तस्मादितो एनामाकृष्य ग्रहीष्यामि।]

नववृन्दा—(स्वगतम्) श्रेयसी न खलु वंशिकाकृष्टिः। तदेनामपदेशादुपदिशामि। (प्रकाशम्। सनर्मस्मितम्)

त्वमेतस्मिन्नीलोपलमयतया वक्रमुचिते
मुधा मुग्धे नीलोत्पलमृदुलतामर्पयसि किम्।
मदुक्तौ विस्रम्भं यदि भजसि नाम्भोजवदने
ततो वक्षःपीठे घटय सखि विस्तारिणि कुचम् ॥ २२ ॥

राधा—(वक्षसि पाणिमर्पयन्ती। सव्यथम्) कधं एसा सच्चं ज्जेव्व नीलमणिपडिमा। [कथमेषा सत्यमेव नीलमणिप्रतिमा।] (विमृश्य) हद्धी! हद्धी! गाढुक्कंठाए सव्वं विसुमरिअ पडिमं जेव्व पच्चक्खं माहवं मण्णेमि। [हा धिक्? हा धिक्! गाढोत्कण्ठया सर्वमेव विस्मार्य प्रतिमामेव प्रत्यक्षं माधवं मन्ये।]

(प्रविश्य बकुला)

बकुला—गेण्ह इमाइ मालंबरविलेवणाइं। [गृहाणेमानि माल्याम्बरविलेपनानि।]

(राधा गृहीत्वा प्रतिमामलञ्चिकीर्षति)

नववृन्दा—
प्रणयिनं समया समये गता वहसि कान्तिधुरां मधुरां मुदा।
न किल कोकिलसङ्गतिमन्तरा स्फुरति सम्पदलं सखि माधवी ॥२३॥

---

अतिसमर्थस्त्वं कष्टावलिभिरवलीढे ग्रसितेऽस्मिन् मल्लक्षणे जने कथं वञ्चनं कुरुषे ॥ २१ ॥

त्वमेतस्मिन्निति। नीलमणिमयतया तथा वक्रमुचिते कठोरेऽस्मिन्नीलोत्पलमृदुलतां मुधा किमर्पयसि। मदुक्तौ न विश्वासं भजसि। विस्तारिणि वक्षःपीठे कुचं घटय ॥ २२ ॥

प्रणयिनमिति। समये समया निकटे प्रणयिनं गता प्राप्ता सती त्वं मुदा हर्षेण मधुरां कान्तिधुरां वहसि। तत्र दृष्टान्तमाह—माधवी मधुसम्बन्धिनी सम्पत् कर्त्री कोकिलसङ्गतिं विना अलमतिशयेन न स्फुरति ॥ २३ ॥

( प्रविश्य माधवी )

माधवी—सच्चाए पउत्तिं विण्णादुं भट्टिदारिआए पेसिदह्मि। ता अग्गदो पप्फुरंतं णअवुंदावणं प्पविसिस्सं। [ सत्यायाः प्रवृत्तिं विज्ञातुं भर्तृदारिकया प्रेषितास्मि। तस्मादग्रतः प्रस्फुरन्नववृन्दावनं प्रविशामि। ] ( परिक्रम्य ) हंत ! णूणं वुंदावणं पइट्ठो भट्टा जं इमाइं संखचक्कादिलखिखदाइं पदाइं लख्खीअंति ता पत्थुदं णिव्वाहिअ भट्टिदारिअं आणिस्सं। [ हन्त ! नूनं वृन्दावनं प्रविष्टो भर्त्ता यस्मादिमानि शङ्खचक्रादिलक्षितानि पदानि दृश्यन्ते। तस्मात् प्रस्तुतं निर्वाह्य भर्तृदारिकामानेष्यामि। ]

( राधा सास्रकम्पं कृष्णाकृतिं मण्डयति )

माधवी—एसा पडिदा तस्स णीलुप्पुलमाला दीसदि। [ एषा पतिता तस्य नीलोत्पलमाला दृश्यते। ] ( इति करेण स्रजमादाय। सत्वरमुच्चैः ) सहि वउले, कुदोसि। [ सखि वकुले, कुत्रासि ? ]

नववृन्दा—( ससम्भ्रमम् ) सत्ये, सन्निहिताऽसौ माधवी। तदितस्तूर्णं प्रयाणमुचितम्।

राधा—ण मे दंसणे तिण्णा पूरिदा। ता पुणो झत्ति [1]वाहूडिस्सम्ह। [ न मे दर्शने तृष्णा पूरिता। तस्मात् पुनः व्याघोटिष्यामहे। ]

( इति तिस्रः परिक्रामन्ति )

माधवी—( विलोक्य ) कधं इध ज्जेव्व सच्चा। [ कथमित एव सत्या ] ( इत्युपसृत्य ) सहि, माहवीपुप्फाइं आहरेदुं आअदम्हि। [ सखि, माधवी-पुष्पाण्याहर्त्तुमागतास्मि। ]

राधा—( सौरभमाघ्राय। स्वगतम् ) कुदो एदं आअम्हिअं सोरहं चित्तं मे विलोलेदि। [ कुत इदमाकस्मिकं सौरभं चित्तं मे विलोलयति। ] ( इति माधवीकरे माल्यं दृष्ट्वाऽपवार्य संस्कृतेन )

इतो माल्यादिन्दीवरविरचितादेष विजयी
विसर्पत्याभीरीकुलकुमुदबन्धोः परिमलः।
मम क्षोभानुग्रान् सपदि बहिरन्तःप्रणयिनी
बलादन्यो गन्धः कथमिव विधातुं प्रभवति॥ २४॥

---

प्रवृत्तिं चेष्टाम्। भर्त्ता श्रीकृष्णः। व्याघोटिष्यामहे व्यावृत्यागमिष्यामि। विलोलयति कम्पयति॥

इतइति। श्रीकृष्णस्य सौरभमितो माल्याद्विसर्पति उद्गच्छति। अन्यो गन्धः कथं मम उग्रान् क्षोभान् विधातुं प्रभवति। नेत्यर्थः॥ २४॥

---

१. वाहुडिस्सम्मि—अ०।

माधवी—( सविस्मयं संस्कृतेन )

सुरभिमनुभवन्त्याः श्यामलाम्भोजमालां
भजति तव किमेतत् कम्पसम्पत्तिमङ्गम् ।
वपुरपि परिखिन्नाकारमह्नाय किं वा
कलयति परिफुल्लामालि रोमाञ्चपालिम् ॥ २५ ॥

राधा—( स्वगतम् ) संवरणिज्जो एसो अत्थो । [ संवरणीय एषोऽर्थः । ] ( प्रकाशम् ) माहवि, इंदीअरमालिअं पेक्खिअ कालिअदहे दिट्ठं दाणिं भुअंगाअलिं सुमरंती भीदह्मि । [ माधवि, इन्दीवरमालिकां प्रेक्ष्य कालियह्रदे दृष्टामिदानीं भुजङ्गावलीं स्मरन्ती भीतास्मि । ]

नववृन्दा—( स्वगतम् ) साधु समाधानमिदम् ।

राधा—( स्वगतम् ) फुडं ताए च्चेअ मुत्तीए णिम्मल्लमाला एसा । [ स्फुटं तस्या एव मूर्त्याः निर्माल्यमालैषा । ]

माधवी—सहि सच्चे, माहवीमंडवं गदुअ पुप्फाइं अवचिणिस्सं । [ सखि सत्ये माधवीमण्डपं गत्वा पुष्पाण्यवचेष्यामि । ]

सर्वाः—इदो इदो पिअसही । [ इत इतः प्रियसखी ] ( इति निष्क्रान्ते )

( ततः प्रविशति मधुमङ्गलेनानुगम्यमानः कृष्णः )

कृष्णः—( सोद्वेगम् )

क्षणादेव क्षुण्णा भवति वनमाला मलयज-
द्रवालेपः शुष्यन्निपतति रजःसञ्चयनिभः ।
विसर्पद्भिर्ज्वालैरुरसि रविकान्ताकृतिरसौ
ममान्तः सन्तापं कलयति परं कौस्तुभमणिः ॥ २६ ॥

( इति सव्यतः प्रेक्ष्य )

प्रियवयस्य, कियद्दूरे सा वृन्दाटवी ?

मधुमङ्गलः—( संस्कृतेन )

स्फुटच्चटुलचम्पकप्रकररोचिरुल्लासिनी

---

सुरभिमिति । सुरभिं श्यामलाम्भोजमालामनुभवन्त्यास्तवाङ्गं किं कम्पसम्पत्तिं भजति । परिखिन्नाकारं वपुरपि अह्नाय शीघ्रं परिफुल्लां रोमाञ्चपालिं किं वा कलयति ॥ २५ ॥

क्षणादिति । मम मे उरसि विसर्पद्भिर्विरहजन्यैर्ज्वालैर्वनमाला क्षुण्णा म्लाना भवति । चन्दनालेपश्च ज्वालैः शुष्यन् सन् रजःसमूह इव निपतति । सूर्यकिरणजन्यसन्तापं यथा सूर्यकान्तमणिः प्राप्नोति तथा रविकान्ताकृतिरसौ कौस्तुभमणिर्ममान्तःसन्तापं कलयति जानातीति भावः ॥ २६ ॥

स्फुटच्चटुल इत्यादिना वृन्दाटवीवर्णने श्रीराधिकाया वर्णनं जातम् ।

मदोत्तरलकोकिलावलिकलस्वरालापिनी ।
मरालगतिशालिनी कलय कृष्णसाराधिका

(इत्यर्द्धोक्ते)

कृष्णः—(ससम्भ्रमौत्सुक्यम्) सखे, क्वासौ क्वासौ ?

मधुमङ्गलः—(अङ्गुल्या दर्शयन्)

पुरः स्फुरति वल्लभा तव,

कृष्णः—(सवैयग्र्यम्) वयस्य, नाहं पश्यामि । तदाशु दर्शय क्व सा मे राधिका ।

मधुमङ्गलः—

मुकुन्द वृन्दाटवी ॥ २७ ॥

कृष्णः—(परामृश्य । निःश्वसन्) कथं नामधेयवर्णानामाकर्णनादेव सर्वानुसन्धानविधुरोऽस्मि । (परिक्रम्य)

सर्वाङ्गीणामकुरुत मुहुः सा ममाकल्पलक्ष्मीं
पुञ्जैर्यस्याः परिमलभरोद्गारिभिर्गौरगात्री ।
अग्रे सेयं कुसुमधनुषः पश्य भल्लायमाना
मामुत्फुल्ला प्रहरति रुवद्भृङ्गमल्लाऽत्र मल्ली ॥ २८ ॥

अपि च—

मिहिरदुहितुस्तीरोपान्ते स्फुरन्ति निरन्तरा
व्रततिनिकरैरतास्तास्ता महीरुहराजयः ।
किसलयकुलैर्यासां नव्यैरलभ्यत राधिका
श्रुतिपरिसरे ताटङ्कश्रीविडम्बनचातुरी ॥ २९ ॥

---

कृष्णसाराधिका 'इति । कृष्णसारैर्मृगैरधिका वृन्दाटवी । श्रीकृष्णसम्भ्रमपक्षे—हे कृष्ण सा राधिका इति च्छेदः । असौ राधिका क्व कुत्र । वल्लभा वृन्दाटवी, पक्षे-राधिका । तृतीयं पताकास्थानकमिदम् । तथाहि—

अर्थोपक्षेपणं यत्तु लीनं सविनयं भवेत् ।
श्लिष्टप्रत्युत्तरोपेतं तृतीयं परिकीर्तितम् ॥ (ना० चं० का० १९१)

अत्र श्लिष्टसञ्जल्पितेन मधुमङ्गलवाक्येन भाविनो राधादर्शनस्य सूचनात् श्लिष्टोत्तरं नाम पताकास्थानकमिदम् ॥ २७ ॥

सर्वाङ्गीणामिति । सा गौरगात्री राधा यस्याः पुष्पैर्मम सर्वाङ्गीणां सर्वाङ्गस्थितामकल्पलक्ष्मीमकुरुत । सेयं मल्ली पुष्पधनुषः भल्लमिवाचरती सती मां प्रहरति । रुवद्भृङ्गा मल्ला यत्र सा मल्ली ॥ २८ ॥

मिहिरेति । मिहिरदुहितुर्यमुनायास्तीरोपान्ते महीरुहराजयः लतानिकरैः सह स्फुरन्ति । यासां किसलयकुलैः पत्रसमूहैः कर्तृभिः राधिकायाः श्रुतिपरिसरे ताटङ्ककर्णभूषा तस्याः या श्रीः शोभा तद्विडम्बनचातुरी अलभ्यत ॥ २९ ॥

मधुमङ्गलः—( सविस्मयम् ) वअस्स, एत्थ जोव्वणे वि वसंतस्स कीस तल्लक्खणं णत्थि ? [ वयस्य, अत्र यौवनेऽपि वसन्तस्य कस्मात्तल्लक्षणं नास्ति ? ]

कृष्णः—सखे, सत्यमात्थ । तथाहि—

आतन्वन्ति पिकास्तथा मधुलिहो वाचंयमानां व्रतं
माकन्देषु दरोद्गता अपि जडीभावं भजन्त्यङ्कुराः ।
अर्द्धोद्गीर्णमुखाप्यशोकनिकरे विष्कम्भते मञ्जरी
कालिन्दीतटसीम्नि हन्त [1]किमियं सुप्ता मधुश्रीरभूत् ॥ ३० ॥

मधुमङ्गलः—वअस्स, पेक्ख । एसा काए वि विरहणीए वरारविंदविरइआ सेज्जा । [ वयस्य, पश्य । एसा कस्या अपि विरहिण्या वरारविन्दविरचिता शय्या । ]

कृष्णः—नूनमस्याः प्राणरक्षणाय सख्या विष्टम्भितेयं वसन्तलक्ष्मीः । ( इत्यालोक्य । सातङ्कम् )

शून्यक्रोडा निविडकमलैः कल्पिता तल्पवेदी
नेदीयस्यास्तनुलहरिभिः शीलिता हेलिपुत्र्याः ।
अङ्गज्वालापरिचयमिलन्मर्मरा[1] मर्मदुःखं
व्याख्यायन्ती मम धियमियं धूम्रयन्ती धुनोति ॥ ३१ ॥

मधुमङ्गलः—एदं अग्गदो णिउंजसालिअं सलाहेहि । [ एतामग्रतः निकुञ्जशालिकां श्लाघय । ]

कृष्णः—( परिक्रम्य । सोद्ग्रीवं पश्यन् साश्चर्यम् ) कथमारण्यवेषधारिणीयं मदङ्गप्रतिमा ( इति सन्निधाय ) नूनमेतया शिल्पाचार्यस्य कलाकौशलविवर्तेन भवितव्यम् ।

---

तल्लक्षणं यौवनलक्षणम् । तदेवाह—आतन्वन्तीति । पिकाः मधुलिहश्च वाचं प्रति यमानां व्रतं मौनमातन्वन्ति । माकन्देषु आम्रेषु अङ्कुराः जडीभावं भजन्ति । अशोकसमूहे मञ्जरी विष्कम्भते । मधुश्रीर्वसन्तसम्पत् कालिन्दीतटे किं सुप्ताऽभूत् ॥ ३० ॥

शून्येति । इयं तल्पवेदी मम धियं धूम्रयन्ती सती धुनोति कम्पयति । कीदृशी शून्यक्रोडा निविडकमलैः कल्पिता । नेदीयस्याः निकटवर्तिन्याः हेलिपुत्र्याः कालिन्द्याः लहरीभिः शीलिता । अङ्गज्वालापरिचयेन मीलन्मर्मरा शुष्कतया मर्मरशब्दयुक्ता । मर्मदुःखव्याख्यानाय पञ्जी टीकारूपा ॥ ३१ ॥

---

1. किमिह—अ० ।

1. मर्मुरामर्म—अ० ।

मधुमङ्गलः—( सकौतुकम् ) ही ही ! एसोज्जेव्व अप्पणो पिअवअस्सो मए चिरादो लद्धो। तुमं ख्खु राइंदो ण मे बह्मणबटुअस्स अहिरूओ । [ ही ही ! एष एवात्मनः प्रियवयस्यो मया चिराल्लब्धः । त्वं खलु राजेन्द्रः न मे ब्राह्मणबटुकस्याभिरूपः । ] ( इति निरीक्ष्य ) पिअवअस्स, पेख्ख । कए वि अणुराइणीए सेआ किदा अत्थि । [ प्रियवयस्य, पश्य । कयाप्यनुरागिण्या सेवा कृताऽस्ति । ]

कृष्णः—सखे, साधु लक्षितम् ।

असौ व्यस्तन्यासा विशदयति माला विवशतां
विभक्तेयं चर्चा नयनजलवृष्टिं कथयति ।
करोत्कम्पं तस्या वदति तिलकं कुञ्चितमिदं
कृशाङ्ग्याः प्रेमाणं वरिवसितमेव प्रथयति ॥ ३२ ॥

( नेपथ्ये )

इदो इदो पिअसही । [ इत इतः प्रियसखि ]

कृष्णः—सखे, नूनं प्रत्यासीदन्ति मूर्तेरुपासिकास्तरुण्यस्तदेषा मदर्चा कुञ्जान्तरे त्वया निवेश्यताम् । मया अस्याः सुष्ठुवेषमाधुरीमुरीकृत्य बिम्बोष्ठीनां भावनिष्ठां निष्टङ्कयिष्यता वेदीयमधिष्ठेया ।

( इत्युभौ तथा कुरुतः । )

( ततः प्रविशति सखीभ्यामनुगम्यमाना राधिका )

राधा—( पुरोऽवलोक्य सरोमाञ्चम् ) अम्महे ! पडिमाए माहुरीभारसाधुदा । जं सच्चं च्चेअ माहववंसणचमक्कारं [1]उप्पावेदि ।
[ अहो प्रतिमाया माधुरीभरसाधुता । यत्सत्यमेव माधवदर्शनचमत्कारमुत्पादयति । ]

बकुला—( जनान्तिकम् ) णअवुंदे, पेख्ख पडिमाए सोन्देरं ।
[ नववृन्दे, पश्य प्रतिमायाः सौन्दर्यम् ]

---

असाविति । कृशाङ्ग्याः वरिवसितमुपासनामेव प्रेमाणां प्रथयति विस्तारयति । व्यस्तन्यासा माला तस्या विवशतां विशदयति । विभक्ता छिन्नभिन्ना चर्चा चन्दनकृता 'खोर' इति प्रसिद्धा । कुञ्चितं तिलकं करोत्कम्पम् । हेतुर्नाम नाटकभूषणमिदम् । तथा च—

'स हेतुरिति निर्दिष्टो यत् साध्यार्थप्रसाधकम् ।' ( ना० चं० का० १५६ )

अत्रानुरागसाधनाय विवशत्वादिहेतूनां कथनादयं हेतुः ॥ ३२ ॥

अस्याः प्रतिमाया वेषं स्वीकृत्यास्या भावनिष्ठां ज्ञातुमिच्छता मयेयं वेदी अधिष्ठेया ।

---

१. उप्पादेदि—ब० ।

नववृन्दा—( सस्मितम् ) मुग्धे, नूनं सत्यभामाप्रेमोन्मादस्त्वय्यपि सञ्चक्राम । या हरिमेव प्रतिमां प्रत्येषि ।

कृष्णः—(सविस्मयानन्दम्) हन्त ! केयं चित्ताकर्षिणी कल्पलतिका ( इति सौत्सुक्यम् )

हृदयान्तरस्फुरदमन्दवेदनाभरवावदूकवदनाम्बुजद्युतिः ।
नयनान्तताण्डवितनीलकुन्तला सुदती मदीक्षपदवीं प्रपद्यते ॥ ३३ ॥

( पुनर्निभाल्य । सचमत्कारम् ) हन्त ! हन्त ! कथं सैवेयं मे प्राणवल्लभा राधा । ( इत्यश्रुधारामावारयन् । सविमर्शम् )

अकल्पि सुरशिल्पिना परिकलय्य मायामयी
सुखाय मम राधिका ध्रुवममन्दवृन्दावने ।
भवेदिह कुशस्थली नगरनीतिभिदुर्गमे
समान्तरवरोधने क नु तदीयसम्भावना ॥ ३४ ॥

राधा—( कृष्णमुखेन्दुमवलोक्य ) हंत । हंत । णिब्भरुक्कंठिदाए मह मुद्धत्तणं जं गोइंदस्स पडिमं ज्जेव्व गोइंदं मण्णेमि । [ हन्त ! हन्त ! निर्भरोत्कण्ठिताया मम मुग्धत्वं यत् गोविन्दस्य प्रतिमामेव गोविन्दं मन्ये । ] ( इति साश्रुधारमञ्जलिं बद्ध्वा ) अयि पडिबिंब, अवि किं तुम्ह बिंबस्स अंबुरुहलोअणस्स कल्लाणं ? [ अयि प्रतिबिम्ब, अपि किं तव बिम्बस्याम्बुरुहलोचनस्य कल्याणम् ! ]

कृष्णः—( सोल्लासम् ) अयि मायायन्त्रमयि राधिके, सत्यमिदानीमेव

---

सुखमेव वार्ता कथयति इति न्यायेनाह—हृदयेति । हृदयमध्ये स्फुरदमन्दवेदनाभरस्य सम्यक् वक्त्रा वदनाम्बुजस्य द्युतिर्यस्या सा । नयनान्तताण्डवितनीलकुन्तला इति । विरहजन्यकुन्तलादेरबन्धनात् स्वतः शोभातिशय··· कत्वाच्च ( ? ) ॥ ३३ ॥

श्रीराधायाः साक्षाद्दर्शनजन्यानन्दाश्रुधारामावारयन् सपरामर्शमाह—अकल्पीति । सुरशिल्पिना विश्वकर्मणा मम सुखाय मायामयी जङ्गमशीला राधिकाऽकल्पि । परिकलय्य राधां विना वृन्दावनं श्रीकृष्णस्य न सुखदमिति विचार्य । अन्यथा ममाज्ञां विना ममान्तःपुरे क्व तस्या राधाया अगमनसम्भावना भवेत् । यथोभयोः साक्षाद्दर्शनेऽपि उभयोः प्रतिमाप्रतीतिः प्रेमजन्यैव तथान्तःपुरे राधाया आगमनेऽप्यसम्भावनाकल्पनं प्रेमजन्यमेव योगमायाकल्पितताया लीलायाश्चमत्कारार्थं न त्वज्ञानादिति ॥ ३४ ॥

साश्रुधारं यथा स्यात्तथाऽञ्जलिं बद्ध्वाह—अयीति । अयि प्रतिबिम्बमेप्रति अम्बुरुहलोचनस्य कृष्णस्य कल्याणं शुभम् ।

कृष्णः क्षेमी, यदियं सर्वमुद्रया तां लोकोत्तरमनुकुर्वती त्वमस्य क्षेमं पृच्छसि।

राधा—( सचमत्कारम् ) णअवुंदे, साहु साहु! जाए [1]सिप्पकला-कुसलाए णिम्मिदा पडिमा वि एदं किं पि महुरं वाहरेदि।

[ नववृन्दे, साधु! साधु! यया शिल्पकलाकुसलया निर्मिता प्रतिमापि इदं किमपि मधुरं व्याहरति। ]

कृष्णः—अहो गन्धर्वपुराधिकारिणोऽपि मायागान्धर्वनाट्यस्य कापि [2]चिरचमत्कारिता यदत्र ममाप्यबाधितेव राधा प्रतिभासते।

राधा—( सानन्दाद्भुतं संस्कृतेन )

वरो धिन्वन् घ्राणं परिमिलति सोऽयं परिमलो
घनश्यामा सेयं द्युतिविततिराकर्षति दृशौ।
स्वरः सोऽयं धीरस्तरलयति कर्णौं मम बलाद्
अहो गोविन्दस्य प्रकृतिमुपलब्धा प्रतिकृतिः॥ ३५॥

( इति काकुं कुर्वती ) अइ कण्ह पडिमे, एसा चाणुकोडिहिं भिक्खेदि राही। एव्वं चेअ जंगमी भविअ चिरं सुहावेदि [3]संतावजज्जरं दीणाए लोअणं। [ अयि कृष्णप्रतिमे, एषा चाटुकोटिभिर्भिक्षते राधा। एवमेव जङ्गमी-भूत्वा चिरं सुखय सन्तापजर्जरं दीनाया लोचनम्। ]

कृष्ण—हन्त! वृन्दारकवर्द्धके, दिष्ट्या संवर्द्धितोऽस्मीति।

( इति बाष्पधारां वितनोति )

---

लोकोत्तरां तां राधां सर्वमुद्रयानुकरणं कुर्वती। अस्य कृष्णस्य। अतः सत्यमेवेदानीं कृष्णः क्षेमी। इतः पुरा नासीदिति भावः। व्याहरति वदति। श्रीराधिकाया इव श्रीकृष्णस्यापि सचमत्कारविचारमाधुर्यमाह—गन्धर्वेत्यादि। गन्धर्वपुरस्य मिथ्याभूतस्य अनुकारिणोऽपि मायागन्धर्वनाट्यस्य। अत्र नाट्ये। मायाविनां गुरोर्ममापि यथार्थराधाज्ञानात् मिथ्यानाट्यस्य चमत्कारकारिता।

वरो धिन्वनिति। गोविन्दस्य [4]प्रकृतिं प्रतिकृतिरुपलब्धा प्राप्ता। परिमलः गन्धः। द्युतिः कान्तिः। अन्यपरिमलादेर्मम घ्राणादिसुखदानेऽसामर्थ्यमेवेत्यनेन द्योतितम्॥ ३५॥

हन्तेति हर्षे। हे वृन्दारकवर्द्धके देवशिल्पिन् विश्वकर्मन्। दिष्ट्या संवर्द्धित-स्तोषितोऽस्मीति। अपसार्यतां दूरीक्रियताम्। सापत्रपमिति। प्रतिमाज्ञानेऽपि

---

१. सिप्पकुसलाए—अ०। २. चिरचमत्कारकारिता—ब०।
३. संजावजज्जर—अ०। ४. प्रकृतिः—अ०।

नववृन्दा—सखि, चेलाञ्चलेनापसार्यतां प्रियमुखाम्बुजाद् बाष्पाम्बु-धाराम्।

( राधिका सापत्रपं तथा करोति )

नववृन्दा—( स्वगतम् ) कथमसौ माधवो राधिकाङ्गस्पर्शसौख्येन स्तिमिताक्षो भवत्पृष्ठाश्रितकदम्बः स्तम्भमालम्बते।

राधा—हद्धीहद्धी साहाविअं धम्मं गदा पडिमा। [ हा धिक् हा धिक्! स्वाभाविकं धर्मङ्गता प्रतिमा। ] ( इति मूर्च्छति )

( नेपथ्ये सङ्कुलध्वनिः )

बकुला—( सावेगम् ) णअवुंदे, कधं एसो ससंकं विक्कोसन्ताणं कला-विणां कलावो विद्दवेदि। [ नववृन्दे, कथमेष सशङ्कं विक्रोशतां कलापिनां कलापो विद्रवति। ]

नववृन्दा— नूनं विदर्भनन्दिनी वृन्दावनं प्रपेदे। तदीय-परिवाराणां मञ्जीरशिञ्जितेन [1]शङ्कितमरालकुलोत्कर्षा कलापिनः पलायन्ते तदितस्तूर्णं त्वया सत्याऽपसार्यताम्।

बकुला—साहु मंतेसि। [ साधु मन्त्रयसि ] ( इति मूर्च्छितामेव राधामङ्कीकृत्य निष्क्रान्ता )

मधुमङ्गलः—( निकुञ्जान्निःसृत्य ) अच्चरिअं अच्चरिअं। भो पिअव-अस्स, सच्चं च्चेअ पडिमारूवो सि। [ आश्चर्यमाश्चर्यम्। भोः प्रियवयस्य, सत्यमेव प्रतिमारूपोऽसि। ]

कृष्णः—( पुरो दृष्टिं क्षिपन् ) हन्त! हन्त ! कथं लीना बभूव सद्यस्त्वाष्ट्री[2] शिल्पमाया। (इति चमत्कारमभिनीय) नववृन्दे, भूयोऽपि किमियं प्रस्तोतुं शक्यते जगद्विस्मापिनी कापि माया।

नववृन्दा—अथ किम्।

कृष्णः—( सोत्कण्ठम् ) सखि, तूर्णमुपनीयताम्।

नववृन्दा—देव, यतोऽहं विद्रवन्ती चक्रवाकीव बिभेमि। सेयं सन्निकृष्टा देवी चन्द्रावली। ( इति निष्क्रान्ता )

---

सहजत्रपाया उदयात्। स्तिमिताक्षः साश्रुनेत्रो भवन्। स्तम्भं जडिमानम्। धर्मङ्गता प्राप्ता।

कलापिनां मयूराणां कलापः समूहो विद्रवति द्रुतं गच्छति। त्वाष्ट्री त्वष्टुरियं शिल्पमाया लीना बभूव। प्रस्तोतुं साक्षात्कर्तुम्। यतो देवी रूपचन्द्रिकाया अहं चक्रवाकी बिभेमि। सा सन्निकृष्टा इति।

---

१. ०कुलोत्कर्षात्-अ०। २. स्वाष्ट्री माया-अ०

( ततः प्रविशति सपरिजना चन्द्रावली )

चन्द्रावली—हला माहवि, बहिणीए राहीए सोआणलो अज्जवि से ण णिव्वादि। ( सखि माधवि, भगिन्या राधाया शोकानलोऽद्यापि से न निर्वाति। ]

माधवी—भट्टदारिए, पइदिसिणिद्धासि। कहं णिव्वादु [ भर्तृदारिके, प्रकृतिस्निग्धासि। कथं निर्वातु। ]

चन्द्रावली—सहि, अज्ज अज्जउत्तेण हा राहि! हा राहि त्ति सव्वं च्चेअ रत्तिं सिविणाइदं। [ सखि, अद्यार्यपुत्रेण हा! राधिके! हा राधिके! इति सर्वामेव रात्रिं स्वप्नायितम्। ]

माधवी—णूणं सिविणदंसणविक्खोहिदं अत्ताणअं विणोदेदुं एसो वुंदावणं पइट्ठो। [ नूनं स्वप्नदर्शनविक्षोभितमात्मानं विनोदयितुमेष वृन्दावनं प्रविष्टः। ]

चन्द्रावली—सच्चं भणासि। [ सत्यं भणसि ]

माधवी—पेक्ख अग्गदो णिउंजे भट्टा। [ पश्याग्रतो निकुञ्जे भर्त्ता ]

चन्द्रवली—(साचि समीक्ष्य) हला, जं वुंदावणे वि एसो उप्फुल्लाआरो विलोएदि ता तक्केमि [1]अउरुव्वं किं पि रसंतरं लद्धो। [ सखि, यद् वृन्दावनेऽप्येष उत्फुल्लाकारो विलोकयति तत्तर्कयामि अपूर्वं किमपि रसान्तरं लब्धम्। ]

माधवी—( निभाल्य ) भट्टिदारिए, फुडं संगदा सा हारिणी सच्चभामा। [ भर्तृदारिके, स्फुटं सङ्गता सा हारिणी सत्यभामा। ]

चन्द्रावली—सहि, सच्चं सच्चं जं इमस्स अंगे सोज्जेव्व मए पेसिदो दिव्वपरिच्छदो। ता गदुअ तत्तं जाणिस्सं। [ सखि, सत्यं सत्यं यदस्या अंगे स एव मया प्रेषितो दिव्यपरिच्छदः। तद् गत्वा तत्त्वं ज्ञास्ये। ] ( इत्युपसृत्य ) जेदु जेदु अज्जउत्तो। [ जयतु जयत्वार्यपुत्रः। ]

कृष्ण ( सावहित्थम् ) प्रिये, दिष्ट्याद्य समये वृन्दावनमुपलब्धासि।

चन्द्रावली—( कृष्णं पश्यन्ती साश्चर्यमपवार्य। संस्कृतेन )

स्फुरति मधुरिपोर्मिःस्फारमारण्यवेषं
कमपि जगदपूर्वं बिभ्रतो माधवस्य।
कलयति सखि तृप्तिं नेदमीर्ष्याभुजङ्गी-
कवलितमपि यत्र प्रेक्ष्यमाणे मनो मे॥ ३६॥

---

हारिणी मनोहरा। स्फुरतीति। जगदपूर्वं कमपि स्फारमारण्यवेषं बिभ्रतो

---

१. अउपुव्वं-अ०।

( इति स्मितं कृत्वा ) देअ, णइणप्पणइणीसंगममहूसएण दिठ्ठिआ पफ्फुरेसि । [ देव, नवीनप्रणयिनीसङ्गममधूत्सवेन दिष्ट्या प्रस्फुरसि ]

कृष्णः—( विहस्य ) प्रिये, प्राचीनप्रणयिनीति भण्यताम् ।

चन्द्रावली—( साशङ्कम् ) का क्खु पाईणप्पणइणी ? [ का खलु प्राचीनप्रणयिनी । ]

कृष्णः—प्रिये, मा कुरु शङ्काम् । वृन्दाटवीलतालीरेव नापरा ।

माधवी—सच्चं भणादि भट्टा । जं बुंदावणकप्पलदाए उवणीदा एसा माला । [ सत्यं भणति भर्त्ता । यत् वृन्दावनकल्पलतयैवोपनीतैषा माला । ]

कृष्णः—माधवि, मा मुधा शङ्काकलङ्केन किलाङ्कय विशुद्धां चन्द्रावलीम् । यदियं माला मधुमङ्गलकलाकौशलस्य साक्षात्कृतिः ।

चन्द्रावली—( [1]साकूतस्मितम् ) अज्ज महुमंगल, एदं कौसुंभं अंवरं वि तुम्ह कलाकोसलं ! [ आर्य मधुमङ्गल, इदं कौसुम्भमम्बरमपि तव कलाकौशलम् । ]

कृष्णः—( स्वगतम् ) नूनं देव्या दृष्टपूर्वोऽयं परिच्छदः ( प्रकाशम् ) देवि, वनदेव्या ममेदमुपहारीकृतम् ।

माधवी—देअ, अणुजाणीहि । एसा[2] घरदेई घरं जेव्व गच्छेदु । [ देव, अनुजानीहि । एषा गृहदेवी गृहमेव गच्छतु । ]

कृष्णः—( स्वगतम् ) देवि, नेमां श्रद्धेहि माधवीयामलीकवाचम् ।

चन्द्रावली—माहवि, सहीए सरस्सदीए गहिदपक्खह्मि संवुत्ता । [ माधवि, सख्याः सरस्वत्या गृहीतपक्षास्मि संवृत्ता । ]

कृष्णः—( स्वगतम् ) कथं स्वगिरैव निगृहीतोऽस्मि देव्या ।

---

माधवस्य मधुरिपोर्मां प्रेक्षमाणे मे मनः ईर्ष्याभुजङ्गी-कवलितमपि तृप्तिं न याति ॥ ३६ ॥

माधवीयां मधुयुक्ताम् । पक्षे—माधवस्येयं मत्सम्बन्धिनीं वाचं न श्रद्धेहि इति वाक्छलं कृत्वाऽह—हे माधवि, सख्याः सरस्वत्या गृहीतपक्षास्मि संवृत्तेति । श्रीकृष्णोक्तवाक्येनैव श्रीकृष्णवाक्यं न श्रद्धेयमित्यत एव सरस्वती मे पक्षपातिन्यभूत् । स्वस्य गिरा माधवीयामित्याकारिकयैवाहं देव्या निगृहीतः अहमिति भावः ।

---

१. साकूज—अ० ।

२. एसा घरं देइ गच्छदु । [ एषा गृहं देवी गच्छतु । ]

चन्द्रावली—कण्ह, [ कृष्ण ] ( इत्यर्द्धोक्ते सलज्जम् ) अज्जउत्त, [ आर्यपुत्र, ]

कृष्णः—( सानन्दस्मितम् ) प्रिये, दिष्ट्या सुधाधारां पायितोऽस्मि।

तदलमार्यपुत्रेति कूपाम्बुना।

चन्द्रावली—अज्जउत्त, ण क्खु अहं अणहिण्णा जं तुज्झ सोक्खहेदुएण केलिप्पबंधेण खिज्जिस्सं। [ आर्यपुत्र, न खल्वहमनभिज्ञा यत्तव सुखहेतुकेन केलिप्रबन्धेन खिन्ना भविष्यामि। ]

कृष्णः—

त्वदङ्गसङ्गतैरेभिस्तप्तोऽस्मि मिहिरातपैः।
विन्दन्ती चन्दनच्छायां मां देवि शिशिरीकुरु ॥ ३७ ॥

माधवी—देअ, कठोरप्पा एसा भट्टदारिआ सुठ्ठु तावं सोढुं पारेदि। जं तुम्ह पच्चक्खं च्चेअ चंदभाआमंदिरे जलंदं जलनकुंडं जलकेइकुंडं विण्णादवदी। [ देव, कठोरात्मैषा भर्तृदारिका सुष्ठु तापं सोढुं पारयति। यत्तव प्रत्यक्षमेव चन्द्रभागामन्दिरे ज्वलन्तं ज्वलनकुण्डं जलकेलिकुण्डं विज्ञातवती ]

कृष्णः—( स्वगतम् ) माधवि, साधु साधु। यदत्र स्नेहातिरेकं सूचयन्ती समये सख्याः सेवां वितनोषि।

चन्द्रावली—अज्जउत्त, अत्तणो हिअअंगमेण पणइणा जणेण सच्छंदं विहरेहि। एसा अहं अंतेउरे प्पविसामि। [ आर्यपुत्र आत्मनो हृदयङ्गमेन प्रणयिना जनेन स्वच्छन्दं विहर। एषाऽहमन्तःपुरं प्रविशामि। ]

( इति सपरिवारा निष्क्रान्ता )

---

कृष्ण इत्यर्द्धोक्ते सलज्जं हे आर्यपुत्रेति। गोत्रस्खलितं नाम सन्ध्यन्तरमिदम्। तथा च—'तद् गोत्रस्खलितं यत्तु नामव्यत्ययभापणम्।' ( ना० चं० का० १३५ ) अत्र चन्द्रावल्या समयोल्लङ्घनाद् गोत्रस्खलितम्।

खिज्जिस्सं खेदयुक्ताहं भविष्यामि।

त्वदङ्गेति। त्वदङ्गसङ्गतैरेभिः मिहिरातपैः सूर्यातपैः पक्षे क्रोधैस्तप्तोऽस्मि। चन्दनच्छायां शीतलच्छायां विन्दन्ती त्वं मयि प्रसन्ना भूत्वा मां शीतलीकुरु। क्षोभं नाम नाटकभूपणमिदम्। तथा च—'क्षोभस्त्वन्यगते हेतावन्यस्मिन् कार्यकल्पनम्।' इति। (ना० चं० का० १७६)। अत्र सूर्यातपेषु चन्द्रावल्या अङ्गसङ्गतेषु तत्कार्यभूतस्यातपस्य कृष्णेन स्वस्मिन् कल्पनात् क्षोभः ॥ ३७ ॥

कठोरात्मेत्यादि। गर्हणं नाम नाटकभूपणमिदम्। तथा च—'यत्र सङ्कीर्तयन्दोषान् गुणमर्थेन दर्शयेत्। गुणान् वा कीर्तयन्दोषं दर्शयेद् गर्हणं हि तत् ॥'

कृष्णः—सखे, कष्टमापतितं यदद्य देवीयं रुष्टा ।

मधुमङ्गलः—मा एव्वं भणेहि । जं देइए रोसस्स पअं किं वि ण लक्खिदं । [ मैवं भण । यद्देव्या रोषस्य पदं किमपि न लक्षितम् । ]

कृष्णः—वयस्य, निगूढरोषा हि मनस्विन्यः । तथा हि—

उद्धूता स्मितकौमुदी न मधुरा वक्त्रेन्दुबिम्बा तु या
मृद्वीनां न निराकृता निजगिरां माधुर्यलक्ष्मीरपि ।
कौष्णैरद्य दुरावरैरिह मनोगूढव्यथाशंसिभिः
श्वासैरेव दरोद्धुरस्तनपटैस्तस्या रुषः कीर्तिताः ॥ ३८ ॥

तदद्य देवीप्रसादनमेव निजाभीष्टसाधनम् । ( इति निष्क्रान्तौ )

( निष्क्रान्ताः सर्वे )

इति नववृन्दासङ्गमो नाम सप्तमोऽङ्कः ।

---

( ना० चं० का० १७४ ) तत्र प्रथमप्रकारोदाहरणमिदम् । अत्र कठोरत्वादिरूपस्य दोषस्य कथनमपि कृष्णविषयकानुरागगुणकीर्तनतया पर्यवसितम् ।

उद्धूतेति । वक्त्रेन्दुबिम्बात् स्मितकौमुदी नोद्धूता न निरस्ता । मृद्वीनां निजगिरां मधुर्यलक्ष्मीरपि न निराकृता । श्वासैरेव रुषः कीर्तिताः । कीदृशैः—कोष्णैरित्यादि ॥ ३८ ॥

इति सप्तमाङ्कव्याख्या ।



# अष्टमोऽङ्कः

( ततः प्रविशति नववृन्दयानुगम्यमानो विश्वकर्मा )

विश्वकर्मा—

द्वाराधिपाय कलिताञ्जलिभिः सुरेन्द्रै-
रन्तर्विविक्षुभिरवाप्तबहिः प्रकोष्ठा ।
चित्तं हरत्यवसरे प्रतिहार्यमाण-
राजीवसम्भवहराद्य हरेः पुरीयम् ॥ १ ॥

( पार्श्वतो विलोक्य ) वत्से, अपि नाम गतः पुरुषोत्तमे सत्यायाः प्रतिमेति विचित्रो भ्रमस्तस्यापि तस्यां मदीयमायेति । ( स्मितं कृत्वा ) अथवा भ्रम एव न भवेद् [1]यद्वैशिलिकिकानुरागामृतविभ्रमोऽयम् !

नववृन्दा—आर्य, मन्त्रिराजेन कोशलतः श्रावितरहस्ययोरेतयोर्विभ्रम एव सम्भ्रमभूमानमवाप[2] । तेन च राधिकासङ्गमकामस्तामरसाक्षः शुद्धान्तमण्डले कुण्डिनेन्द्रनन्दिनीं प्रसाद्यानन्दयन्नब्रवीत्—देवि, त्रिलोकीकक्षासु किं तवाभीष्टं तदभिव्यज्य निजनिदेशभाजनम्मन्यतयैव पर्याप्तसमस्तनिःश्रेयसि[3] प्रेयसि विधेहि प्रसादमाधुरीम् ।

---

द्वाराधिपायेति । हरेरियं पुरी चित्तं हरति । कीदृशी—सुरेन्द्रैरवाप्तः प्राप्तः बहिः प्रकोष्ठो यस्याः सा । अवसरे प्रतिहार्यमाणौ प्रतिहारेण द्वारपालेनातः प्रवेश्यमाणौ राजीवसम्भवहरौ यस्यां सा । राजीवसम्भवो ब्रह्मा ॥ १ ॥

तस्य श्रीकृष्णस्यापि तस्यां राधायां विश्वकर्मकृतमायेति भ्रमो जातः । विभ्रमः विलासः अयं न भ्रमः । आर्यमन्त्रिराजेनोद्धवेन । कौशलेन श्रावितयोरेतयोः राधाकृष्णयोः विभ्रम एव सम्भ्रमभूमानं परस्परदर्शनस्पर्शनालापेनापि तयोर्निश्चयज्ञानात् । तामरसाक्षः श्रीकृष्णः । शुद्धान्तमण्डलेऽन्तःपुरे । कुण्डिनेन्द्रनन्दिनीं रुक्मिणीम् । त्रिलोकीमध्ये किं वस्तु तवाभीष्टं तद्वस्त्वभिव्यज्येदं वस्तु ममाभीष्टमित्युक्त्वा निजनिदेशभाजनम्मन्यतया निजाज्ञानुवर्तित्वेन मत्वा पर्याप्तः परिपूर्णतां प्राप्तः समस्तनिःश्रेयः कल्याणं येन तस्मिन् प्रेयसि मयि प्रसादमाधुरीं विधेहि । यदि किमप्यभीष्टं वस्त्वानेतुमाज्ञापयसि तदैव मयि ते प्रसन्नताऽभूदिति जानामीति भावः । सत्यभामाया मिलनतात्पर्यकमेतदनुनयं तस्या एवोत्कर्ष-

---

१. त्रैप्लिशिका—अ० ।     २. भूमानमवाप्य तेन—अ० ।

३. निःश्रेयसि विधेहि—अ० ।

विश्वकर्मा—ततस्ततः ।

नववृन्दा—ततश्च देवीहृदयज्ञा माधवी प्राह—देव, तत् किं नाम भुवने यदद्भुतं वस्तु महावरोधने किलात्र नास्ति किन्तु गगने गच्छतो मरालस्य चञ्चुपुटादिदमदृष्टचरमरविन्दं [1]विभ्रष्टं तद्दामगुम्फनकामेयमभूद् भर्तृदारिकेति ।

विश्वकर्मा—वत्से, आँ जाने । सुरसौगन्धिकं नाम तत्पङ्कजमाहर्तुं मन्मुखादेव गृहीतोद्देशः पुण्डरीकाक्षः खाण्डवप्रस्थं प्रतस्थे ।

नववृन्दा—तत्पङ्कजवृन्दमाहृत्य मधुमङ्गलहस्तेन माधव्यामाधाय च माधवच्छद्मना देवीमनुज्ञापयितुं सम्प्रत्यवरोधं साधयति ।

विश्वकर्मा—त्वं कुत्र साधयसि ।

नववृन्दा—भवतां सकाशे ।

विश्वकर्मा—किमिति ?

नववृन्दा—भवदद्भुतविद्याविदग्धताप्रसिद्धिमवधार्य सौभाग्यमुखसद्गुणाधायकं सुरनायकपुरेऽप्यनिर्मितपूर्वमपूर्वनेपथ्यसाधनं प्रसाधनं देव्या यदभ्यर्थितं तन्निरवाहि किमार्येण ।

विश्वकर्मा—न केवलं देव्या एव निर्वाहितं किन्तु सत्याया अपि ।

नववृन्दा—आर्य, दुर्मनायिष्यते देवी ।

विश्वकर्मा—पुत्रि, शङ्कां मा कुरु । तन्मया देव्यामावेदितमस्ति ।

तथाहि—

> देवि नप्त्रि भवेद्धामा भानुसम्बन्धतो मम ।
> तदर्थमपि तेनाहं रचयिष्यामि मण्डनम् ॥ २ ॥

---

बोधकम् । अत्र नाटकचन्द्रिकायामुक्तम्—कश्चित्तु च्चोमनाम नाटकभूषणस्थाने संक्षेपं पठति । तथा च—'संक्षेपो यत्तु संक्षेपादात्मान्यार्थे प्रयुज्यते ।' इति । देवी रुक्मिणी तस्या हृदयज्ञा । मरालस्य हंसस्य ।

अवरोधमन्तःपुरं साधयति गच्छति । सकाशे निकटे । किं कथम् । सौभाग्यादिसद्गुणाधायकं स्वर्गेऽप्यनिर्मितपूर्वं प्रसाधनं मण्डनं देव्या रुक्मिण्याऽभ्यर्थितम् । आर्येण भवता तत् किं निरवाहि ।

देवीति । सूर्यस्त्री संज्ञा विश्वकर्मणः कन्या तस्याः सत्या कन्यात्वेनाङ्गीकारात् नप्त्री ॥ २ ॥

---

[1]. भ्रष्टं—अ० ।

तद्देहि। तत्करण्डिकायुगं भवत्यामर्पयामीति।

( इति निष्क्रान्तौ )

विष्कम्भकः।

( ततः प्रविशति कृष्णः )

कृष्णः—( सहर्षम् )

चर्चां सिञ्चति शोषयत्यपि मिथो विस्पर्द्धते वा सकृत्
नेत्रद्वन्द्वमुरश्च यद्विरहतो बाष्पायमाणं मम।
हन्त स्वप्नशतेऽपि दुर्लभतरप्रेद्योत्सवा प्रेयसी
प्राप्योत्सङ्गमतर्कितं मम कथं सा राधिका वर्तते॥ ३॥

( पुरो विलोक्य ) कुण्डिनेन्द्रनन्दिनी मणिमन्दिरालिन्दमिदमलङ्कुर्वती विराजते।

( ततः प्रविशति माधव्योपास्यमाना चन्द्रावली )

चन्द्रावली—हला माहवि, एसो उपसप्पदि अज्जउत्तो। ता [1]उवणेहि तं सुरसोअंधिअमालिअं। [ सखि माधवि, एष उपसर्पत्यार्यपुत्रः। तदुपनय तां सुरसौगन्धिकमालिकाम्। ]

कृष्णः—( उपसृत्य )

त्वं पक्षपातवैचित्र्यादेकाप्याक्रम्य सर्वतः।
देवि मच्चित्तकासारे राजहंसीव राजसि॥ ४॥

चन्द्रावली—( साकूतम् ) माहवि, जुत्तं वि भणिदं सुणिअ किंत्ति किदम्हिदासि ? [ माधवि, युक्तमपि भणितं श्रुत्वा किमिति कृतस्मितासि ? ]

---

तत् करण्डिकायुगं मण्डनपूर्णसम्पुटिकायुग्मम्॥ विष्कम्भकलक्षणं पूर्वमुक्तम्।

चर्चामोति। यस्या राधाया विरहतो मिथो विस्पर्द्धयेव बाष्पायमाणं ऊष्माश्रुजलायमानम्। 'अश्रु उष्मा च बाष्पं स्यात्' इत्यभिधानात्। बाष्पमुद्वहमानं नेत्रद्वन्द्वं सिञ्चति हृदयम्। चर्चां शोषयति। स्वप्नशतेऽपि दुर्लभतरः प्रेद्योत्सवः दर्शनोत्सवः यस्या सा राधिका अतर्कितं यथा स्यात्तथा ममोत्सङ्गं क्रोडं प्राप्य वर्तते। प्रसङ्गो नाम विमर्शसन्ध्यङ्गमिदम्। तथा च—

'प्रस्तुतार्थस्य शमनं प्रसङ्गः परिकीर्तितः।
प्रसङ्गं कथयन्त्यन्ये गुरूणां परिकीर्तनम्॥' (ना० चं० का० ९८ )

इदं प्रस्तुतार्थशमनोदाहरणम्। अत्र प्रस्तुतस्य विरहदुःखस्य शमात् प्रसङ्गः॥ ३॥

---

१. उवणयेहि—अ०।

माधवी—भट्टदारिए, कासारे ¹पसारिदणिअव्वदं वगीं सुमरिअ हसामि। [ भर्तृदारिके, कासारे प्रसारितनिजव्रतां बकीं स्मृत्वा हसामि। ]

कृष्णः—हन्त! कलिकण्डूलतुण्डमात्रसर्वस्वे तमोमयि माधविके, विरम्यताम्। त्वयोपरञ्जयितुमशक्येयं चन्द्रावली। ( इति देवीं पश्यन् )

अपि नोच्छ्वसितुं क्षमते क्षणमप्यन्यत्र मन्मनः क्वापि।
त्वयि रतिधुरां यदुच्चैर्वहते गौरववतीं गौरि ॥ ५ ॥

माधवी—भट्टदारिए, सहत्थेण तुए गंठिदा एसा सुरसोअंधिअमाला। [ भर्तृदारिके, स्वहस्तेन त्वया ग्रथितैषा सुरसौगन्धिकमाला। ]

चन्द्रावली—( मालामादाय ) अज्जउत्त, एसा कोत्थुहस्स ¹सहवसिणी होदु। [ आर्यपुत्र, एषा कौस्तुभस्य सहवासिनी भवतु। ]

( इति वक्षसि विन्यस्यति )

कृष्णः—

सुन्दराङ्गि भवदीयमन्दिरे मेदुरे मदुरसि स्रजं विना।
तथ्यमेव भवितुं न कल्पते कौस्तुभेन सहवासिनी परा ॥ ६ ॥

( चन्द्रावली सलज्जं नम्री भवति )

कृष्णः—

( चन्द्रावलीपाणिमभिमृश्य सादरम् )

तपस्विनीं ध्यानपरां समीक्षितुं कृतव्रतः साम्प्रतमस्मि कामपि।

---

कासारे सरोवरे। द्रवो नाम विमर्शसन्धेरङ्गमिदम्। तथा च—'द्रवो गुरुतिरस्क्रिया' ( ना० चं० का० ९७ )। अत्र स्वामिन्या राधाया उपहासाद्द्रवः। कलिः कलहः स एव कण्डू तद्विशिष्टं तुण्डमात्रं सर्वस्वं यस्याः हे तथाभूते तमोमयि राहुरूपे। 'तमस्तु राहु'रित्यमरः। त्वयेदं चन्द्रावली उपरञ्जयितुमशक्या। उपरागो राहुणा ग्रहणम्। छलनं नाम विमर्शसन्ध्यङ्गमिदम्। तथा च—'अपमानादिकरणं छलनं परिकीर्तितम्।' ( ना० चं० का० ९९ ) अत्र माधवीभर्त्सनेन छलनम्।

आर्यपुत्रेति। दानं नाम सन्ध्यन्तरमिदम्। तथा हि—'दानन्तु कथितं धीरैः प्रियवस्तुसमर्पणम्।' ( ना० चं० का० १२० )। अत्र प्रकटमेव दानम्।

सुन्दराङ्गीति। मदुरसि स्रजं विना परा अन्या कौस्तुभेन सहवासिनी एकत्र वासयोग्या भवितुं न कल्पते ॥ ६ ॥

तपस्विनीमिति। हे कुंकुमगौरि कामपि ध्यानपरां तपस्विनीं समीक्षितुं

---

१. सोहवासिणी—अ०।

अह्नाय तत्रानुमतिप्रदानतः सत्यान्वितं कुङ्कुमगौरि मां कुरु ॥ ७ ॥

चन्द्रावली—जधाहिरोहदि अज्जउत्तस्स। [ यथाभिरोचते आर्यपुत्राय ]

कृष्णः—( स्वगतम् ) निरातङ्कोऽस्मि। तन्नववृन्दावनं प्रयामि।

( इति निष्क्रान्तः )

( प्रविश्य नववृन्दा )

नववृन्दा—देवि, तदिदं मण्डनं करण्डिकयोर्युग्मम्। एतयोः प्रथमं प्रथितेन देव्याश्चिह्नेनानुगतं द्वितीयन्तु सत्यभामायाः।

माधवी—( स्वगतम् ) अत्तणोणत्तिणीकिदे णूणं सव्वुत्तमं किदं हुविस्सदि। ता परिवट्टं कदुअ भट्टिदारिअं दुदीएण अलंकरिस्सं। ( प्रकाशम् ) णअवुंदे, दोअं च्चेअ मह समप्पेहि। अहं किर सच्चाए पेसइस्सं। [ आत्मनो नप्त्रीकृते नूनं सर्वोत्तमं कृतं भविष्यति। तस्मात् परिवर्तनं कृत्वा भर्तृदारिकां द्वितीयेनालङ्करिष्यामि। ( प्रकाशम् ) नववृन्दे, द्वे एव मह्यं समर्पय। अहं किल सत्यायै प्रेषयिष्यामि। ]

( नववृन्दा तथा करोति )

चन्द्रावली—ण्हादुं घरदीहिअं गमिस्सं। [ स्नातुं गृहदीर्घिकां गमिष्ये ]
( इति सपरिजना निष्क्रान्ता )

नववृन्दा—वृन्दाटवीमभिषेणयितुं साम्प्रतमृतुराजो मया दत्तशुभमुहूर्त्तोऽस्ति। ततस्तत्र गच्छामि! ( इति परिक्रामति )

( नेपथ्ये )

क्रीडोत्सवाय निबिडे नवपुष्पवप्रे
स्वप्रेयसीं पदविहारमिहार्पयन्तीम्।

---

साम्प्रतं कृतव्रतोऽस्मि। अह्नाय शीघ्रम्। तत्र तपस्विनीदर्शनेऽनुमतिप्रदानतः अनुमतिप्रदानेन मां सत्यान्वितं सत्ययुक्तं कुरु। पक्षे—सत्यभामया सहान्वितम् कुरु ॥ ७ ॥

विश्वकर्मनिर्मितभूषणपूर्णं सम्पुटद्वयं नीत्वा प्रविश्य नववृन्दा रुक्मिणीमाह—देवीति। एतयोर्मध्ये प्रथमं प्रसाधनं प्रथितेन देव्यास्तव चिह्नेन युक्तं द्वितीयं सत्यभामायाश्चिह्नेनानुगतम्। द्वितीयेन सत्यभामार्थकृतभूषणेन। सत्यायै सत्यभामायै। वृन्दाटवीमभिषेणयितुं सेनयाऽभियातुं साम्प्रतमधुना मया दत्तशुभमुहूर्त्तः ऋतुराजो वसन्तोऽस्ति।

क्रीडोत्सवेति। क्रीडोत्सवाय निबिडे नवपुष्पकेदारे केपारीति ख्याते पुष्पमये क्षेत्रे। पक्षे 'वप्रः पितरि केदारे' इति। स्वप्रेयसीत्यत्र बहुव्रीहौ ईयसिक

देवं विलोक्य युगपन्निजया समृद्ध्या
संवर्द्धिनोऽत्र कुतकाहतवोऽवतेरुः ॥ ८ ॥

नववृन्दा—कथमसौ जगन्मोहनवन्यवेषः सुष्ठु नववृन्दाटवीं कृतार्थयन् प्रसाधितां राधिकामनुसर्पति । ( पुनरवेक्ष्य । सविस्मयम् )

आतन्वन् कलकण्ठनादमतुलस्तम्भश्रियोज्जृम्भितो[1]
भूयिष्ठोच्छलिताङ्कुरः फलितवान् स्वेदाम्बुमुक्ताफलैः ।
उद्यद्बाष्पमरन्दभागविचलोऽप्युत्कम्पवान् विभ्रमै
राधामाधवयोर्विराजति चिरादुल्लासकल्पद्रुमः ॥ ९ ॥
( ततः प्रविशतो यथानिर्दिष्टौ राधामाधवौ )

माधवः—
तवात्र परिमृग्यता किमपि लक्ष्म साक्षादियं
मया त्वमुपसादिता निखिललोकलक्ष्मीरसि ।
यथा जगति चञ्चता [2]चणकमुष्टिसम्पत्तये
जनेन पतिता पुरः कनकवृष्टिरासाद्यते ॥ १० ॥

---

प्रत्ययो न स्यात् । स्वप्रेयसी देवमिह पदविहारमपर्यन्तं विलोक्य युगपदेकदा निजया समृद्ध्या सम्पदा संवर्द्धिनो वर्द्धनशीला ऋतवोऽत्र कुतुकादवतेरुः ॥ ८ ॥

प्रसाधितां भूषिताम् ।

आतन्वन्निति । राधामाधवयोरुल्लासरूपः कल्पवृक्षः चिराद् विराजति । पक्षे—उल्लासयुक्तः कल्पद्रुमः । किं कुर्वन्—कलकण्ठनादमातन्वन् । कलो गद्गदलक्षणो यः कण्ठनादस्तम् । पक्षे—कोकिलनादम् । अतुलस्तम्भश्रिया उज्जृम्भितः । 'स्तम्भौ स्थूणा जडीभावौ' इत्यभिधानात् । अतुलजडीभावेन । पक्षे—वृक्षस्य प्रथमदेशेन वर्द्धितः । भूयिष्ठोच्छलिताङ्कुरः ।

'नवोद्भिन्ने तथा रोम्णि पुमानङ्कुर ईरितः ।' अङ्कुरो रोमाञ्चः पक्षे स्पन्दः । स्वेदाम्बुर्घर्माम्बुः । पक्षे—स्वेदाम्बुवन्मुक्ताफलैः फलविशेषैः । बाष्पोऽश्रु पक्षे मकरन्दः । विभ्रमैर्विलासैः पक्षे वीनां पक्षिणां भ्रमैः । अविचलोऽप्युत्कम्पवान् ॥ ९ ॥

तवेति । तव किमपि लक्ष्म चिह्नं परिमृग्यता मया निखिललोकलक्ष्मीरूपा त्वमासादिता प्राप्ता । अत्र दृष्टान्तमाह—चणकमुष्टिप्राप्तये चञ्चता गच्छता जनेन पुरः कनकवृष्टिर्यथासाद्यते प्राप्यते ॥ १० ॥

---

1. जृम्भितभूयिष्ठो—अ० ।  2. चणकसम्पत्तये—अ० ।

नववृन्दा—( राधामवेक्ष्य ) हन्त ! हन्त !

आलोके कमलेक्षणस्य सजलासारे दृशौ न क्षमे
नाश्लेषे किल शक्तिभागतिपृथुस्तम्भा भुजावल्लरी ।
वाणी गद्गदकुण्ठितोत्तरविधौ नालं चिरोपस्थिते
वृत्तिः कापि बभूव सङ्गमनये विघ्नः कुरङ्गीदृशः ॥ ११ ॥

कृष्णः—( राधामभिमृश्य )

स्वान्तं हन्त ममान्तरीणविरहज्वालाजटालं[1] क्षणात्
उत्कण्ठानिकुरम्बचुम्बितमिदं कुम्भस्तनि[2] मुह्यति ।
तेनान्तर्नवविभ्रमस्तवकिनीं[3] दृष्टिं सुधास्यन्दिनीं
भ्राम्यद्भ्रूकुरचिल्लिलास्यलहरीसम्बाधमुत्तम्भय ॥ १२ ॥

राधा—( सापत्रपम् ) णअवुंदे, णिच्चिदं एसो सिविणो ज्जेव्व जं वारं वारं एव्वं सोक्खसाअरे क्खणं णिमज्जिअ पुणो, पवुद्धाए केतिअं वारं मए मुक्ककंठं ण क्खु कंदिदं अत्थि । [ नववृन्दे, निश्चितमेष स्वप्न एव यद्वारं वारमेवं सौख्यसागरे क्षणं निमज्य पुनः प्रबुद्धया कतिवारं मया मुक्तकण्ठं न खलु क्रन्दितमस्ति । ]

नववृन्दा—सखि, खेदनिद्राभरात् प्रबुद्धासि । तदत्रावधेहि—

---

आलोके इति । कुरङ्गीदृशः चिरोपस्थिते सङ्गमनये सङ्गमसमयोचितकर्मणि आलोकनादौ कापि वृत्तिर्नालं न समर्थाऽतः विघ्नो बभूव । सजलासारेऽश्रुधारासम्पातयुक्ते दृशौ कमलेक्षणस्यालोके न क्षमे न समर्थे बभूवतुरिति शेषः । अतिपृथुस्तम्भयुक्ता भुजावल्लरी आश्लेषे आलिङ्गने न शक्तिभाक् बभूव । गद्गदकण्ठिता वाणी उत्तरविधौ न समर्था बभूव । आदानं नाम विमर्शसन्ध्यङ्गमिदम् । तथा च—'आदानं कार्यसंग्रहः' ( ना० चं० का० १०३ ) इति । अत्र कृष्णदर्शनादिरूपकार्यसंग्रहादादानम् ॥ ११ ॥

स्वान्तमिति । हे कुम्भस्तनि मम स्वान्तं मन आदौ पुटपाक इवान्तर्वर्तिविरहज्वालाजटालमधुना क्षणात् तव दर्शनोत्सवात् उत्कण्ठातिशययुक्तं सत् मुह्यति । तेन सुधास्यन्दिनीं दृष्टिमुत्तम्भयोत्थापय । कीदृशीम्—अन्तर्वर्तिनवविभ्रमस्य विलासस्य स्तवकरूपां भाविविलासस्य कलिकासमूहरूपां भ्राम्यद्भ्रूकुरा या चिल्ली भ्रूधनुस्तस्य नृत्यलहरीभिः सम्बाधं युक्तं यथा स्यात्तथा ॥ १२ ॥

खेदनिद्रेति । इतः परं खेदरूपा निद्रा गतेति भावः । अचण्डेति ।

---

१. ज्वालाजटालक्षणात्–अ० । २. कुम्भस्तनीङ्मुह्यति–ब० ।
३. स्तवकिनी दृष्टिसुधास्यन्दिनी–अ० ।

अचण्डकिरणद्युतिद्रुतमृगाङ्ककान्ताञ्चल[1]-
स्खलत्तरलसारणीशतवितीर्णवृक्षोत्सवा ।
विकस्वरसरोजिनीपरिमलान्धभृङ्गावली
सलीलविरुतैरिवाह्वयति नव्यवृन्दाटवी ॥ १३ ॥

कृष्णः—नववृन्दे, साधु साधु । स्फुटमभूतपूर्वस्तोषितप्रातिस्विक-परिवाराणामृतूनां सन्निपातः कल्पितः ।

नववृन्दा—सखि राधे, पश्य पश्य ।

धृतनीलकण्ठतुष्टिः सुमनोद्योतेन तारकोल्लङ्घी ।
स्फुरितः शैलभुवोऽङ्के पश्य विशाखायते शाखी ॥ १४ ॥

राधिका—( [2]सौत्सुक्यमात्मगतम् ) हा ! कहिं विसाहा मे पिअसही !
[ हा ? कुत्र विशाखा मे प्रियसखी । ]

कृष्णः—( स्वगतम् ) नूनं नववृन्दागिरा स्मारितविशाखासख्येयं दुर्मनायते । ततस्तां वर्णयामि । ( प्रकाशम् ) प्रिये, क्षणमद्भुतमाकर्ण्य-ताम्—साम्प्रतमहं सुरसौगन्धिकमाहरन् पाण्डवेन सह खाण्डवाटवीं प्राविशम् । तत्र मृगानाहिण्डतो गाण्डीविनः श्येनाभ्यां निगृहीतयोः पक्षिणोरेकः प्राह—हा सखे कीर, राधिकायाः कन्दसत्रे मया पुनरास्वाद-

---

नव्यवृन्दाटवी अर्थात् युवामाह्वयतीव । कीदृशी—अचण्डकिरणश्चन्द्रस्तस्य द्युतिभिः कान्तिभिः द्रुतो द्रवीभूतो यो मृगाङ्ककान्तश्चन्द्रकान्तमणिस्तस्याञ्चलात् प्रान्तदेशात् स्खलत्तरणसारणी क्षुद्रकृत्रिमजलप्रवाहस्तस्य शतेन वितीर्णो वितीर्णीकृतो वृक्षाणामुत्सवो यस्यां सा । कैः करणैः विकसितपद्मिनीदूरगामि-सौरभेनान्धभ्रमरावलीनां सलीलविशिष्टरुतैः शब्दैः ॥ १३ ॥

तोषिताः प्रातिस्विकाः स्वीयस्वीयपरिवारा यैस्तेषामृतूनां सन्निपात एक-दोदयः अभूतपूर्वः कल्पितः मयाऽप्येवं पुरा न दृष्ट इत्यर्थः ।

धृतेति । शैलभुवः पर्वतसम्बन्धिभूमेः । पक्षे पार्वत्याः । अङ्के क्रोडे स्फुरितः शाखी वृक्षः विशाख इवाचरति विशाखायते । विशाखः शाखारहितः पक्षे कार्तिकेयः । कीदृशो वृक्षः कार्तिकेयश्च । धृता नीलकण्ठस्य तुष्टिर्येन सः । नील-कण्ठो मयूरः पक्षे महेशः । सुमनोद्योतेन तारकोल्लङ्घीति । सुमनः पुष्पं पक्षे शोभनं मनः । तारका नक्षत्रं पक्षे तारकासुरः ॥ १४ ॥

पाण्डवेनार्जुनेन । तत्र खाण्डववने मृगानाहिण्डतो आखेटयतः गाण्डीविनोऽर्जु-नस्य श्येनपक्षिभ्यां निगृहीतयोः पक्षिणोर्मध्ये हंस आह—हे कीर शुक, कन्दस्य सत्रे यज्ञे नवचन्द्रसपिण्डानि सदृशानि विसकाण्डानि मृणालानि पुनर्मया नास्वा-

---

1. कान्ताचल-अ० । 2. ( सौत्सुक्यम् )-अ० ।

नीयानि नवीनकलानिधिसपिण्डानि बिसकाण्डानि। शुकः प्राह—हन्त सखे मराल, राधिकायाः फलसत्रे रङ्गाय मे वक्त्राङ्गारकविडम्बीनि नागरङ्गानि न भावीनि।

राधिका—( साद्भुतम् ) तदो तदो। [ ततस्ततः ]

कृष्णः—ततस्तदाकर्णनादुत्सुकेन मया पक्षिणौ विमोच्य पर्यटता काचित् प्रशान्ताकृतिर्जरती दृष्टा पृष्टा च 'हन्त! का त्वमसीति?' तया चोक्तम्—पतत्रिभ्यः सत्रीकृतेयं या तपःप्रभावादाविर्भूतेन सुगन्धिना सुरसौगन्धिकवृन्देन पूर्णा दीर्घिका सुधामृष्टेन सुष्ठुफलमण्डलेन मण्डिता वाटिका च। तयोः पालिकाऽस्मि पुलिन्दी। ततश्चाहमपृच्छम्—केन सत्रं कृतमिदम्? सा प्राह—कयाचित्तपोधनया या खलु समापितोदवासव्रता राधाभीष्टसाधनं नाम वन्यव्रतमारब्धवती।

राधिका—तदो तदो। [ ततस्ततः ]

कृष्णः—ततश्च तयोर्दिष्टं गिरिगह्वरं जिहानस्य

शबलरुचिना संवीताङ्गी महीरुहचर्मणा
मलिनिततनुर्धूलीजालैर्जटालशिरोरुहा।
कमलमणिभिः क्लृप्तां मालामुदीर्य कराम्बुजे
मम नयनयोः काचिद् वीथीमवाप तपस्विनी॥ १५॥

सा च मामुदीक्ष्य सद्यः सविक्रोशमारब्धरोदना लुप्तवर्णपदमब्रवीत्—

हा गोकुलेन्द्रनगरीयुवराजलील
हा वल्लवीहृदयपङ्कजचञ्चरीक।

---

दनीयानि। 'सपिण्डास्तु सनाभयः'। नारङ्गानि वक्त्राङ्गारकस्य मङ्गलग्रहस्य विडम्बीनि सदृशानि मे रङ्गायानन्दाय न भावीनि। निगृहीतयोः पक्षिणोरित्यत्र विद्रवो नाम विमर्शसन्ध्यङ्गमिदम्। तथा च—'विद्रवो वधबन्धादिः' ( ना० चं० का० ९६ )। अत्र पक्षिनिग्रहादिना विद्रवः। सुरसौगन्धिकपद्मसमूहेन पूर्णा येयं दीर्घिका पतत्रिभ्यः पक्षिभ्यः सत्रीकृता यज्ञविषयीकृता दत्ता। दानमेव यज्ञरूपः सुष्ठु फलमण्डलेन वाटिका च सत्रीकृता। तयोर्दीर्घिकावाटिकयोः। तपोधनया तपस्विन्या समापितमुदके वासरूपं व्रतं यया तथाभूता सा। राधेत्यादिना वनवासयुक्ता बभूवेत्युक्तम्। जिहानस्य गतस्य। ओहाङ् गतौ धातुः।

शबलेति। शबलरुचिना बहुविधवर्णसाङ्कर्यवता कान्तिना महीरुहचर्मणा वृक्षवल्कलेन संवीताङ्गी आवृताङ्गी धूलीसमूहैर्मलिनिततनुः जटाभूताः शिरोरुहाः केशाः यस्याः सा। पद्मबीजमालां कराम्बुजे उदीर्य स्थिता तपस्विनी मम नेत्रपथं गता॥ १५॥

लुप्तं वर्णपदं यत्र तादृशं गद्गदं यथा स्यात्तथेत्यर्थः। हेति। चञ्चरीको

हा राधिकाकुचकुरङ्गमहाङ्गराग
भूयोऽपि हा मम दृशोः पदवीं गतोऽसि ॥ १६ ॥

ततश्च सुष्ठु विस्मितेन मया कासीति सगद्गदं पृष्टया तयोक्तम्—
हा ! नाथ, किङ्करी ते हताशा विशाखास्मीति ।

राधिका—हद्धी ! हद्धी ! हा ! पिअसहि विसाहे, हदह्मि मंदभाइणी
[ हा धिक् ! हा धिक् ! हा ! प्रियसखि विशाखे, हतास्मि मन्दभागिनी । ]

कृष्णः—उष्णैस्तुषारैश्च दृगम्बुपूरैः
सिञ्चन्नहं किञ्चन पीतचेलम् ।
क्षणं विशाखार्पितपूर्वकायः
शून्यान्तरः स्थाणुरिवावतस्थे ॥ १७ ॥

ततश्च—
तामाश्वास्य क्षमार्थी ते क्षामाङ्गीं क्षेमवार्तया ।
प्रावेशयं सुवेशाढ्यां कुशलेन कुलस्थलीम् ॥ १८ ॥

राधिका—( सोत्कण्ठम् ) सुंदर, वंदिज्जिसि । दंसेहि विसाहम् ।
[ सुन्दर, वन्द्यसे । दर्शय विशाखाम् । ]

( कृष्णः नववृन्दामुखमीक्षते )

नववृन्दा—सखि, वर्णितं मे विशाखया हंत तातस्य निदेशेन हृतास्मि । येन यावत् स्यमन्तकविप्रयोगं प्रियसख्याः प्रेक्षणाय निषिद्धास्मि । तन्निजनिर्भरमेव विशामीति ।

राधिका—सच्चं अम्माए सण्णाए वि मे कहिदं—वच्छे राहि, समंदअंह्मि तुह हत्थं गदे सव्वाहीट्ठसिद्धी हुविस्सदित्ति । [ सत्यमम्बया संज्ञयापि मे कथितम्—वत्से राधिके, स्यमन्तके तव हस्तङ्गते सर्वाभीष्टसिद्धिर्भविष्यतीति । ]

नववृन्दा—देव, पश्य पश्य ।
स्मितं वासन्तीभिर्गिरिधरशिरीषैः कुसुमितं

---

भ्रमरः । राधिकायाः कुचे कुरङ्गमो मृगमदस्तस्याङ्गरागरूपः ॥ १६ ॥

उष्णैरिति । स्वेदजन्यैस्तुषारैर्हिमकणतुल्यैरित्यानन्दजैर्दृगम्बुपूरैः पीतवस्त्रं सिञ्चन् सन्नहं विशाखार्पितपूर्वकाय आलिङ्गित इत्यर्थः । स्थाणुरिव निश्चलोऽवतस्थे । विस्मृतत्वात् पारोच्यम् ॥ १७ ॥

तामिति । ते क्षेमवार्तयाऽऽश्वास्य क्षमार्थी अहं क्षामाङ्गीं तां कुशस्थलीं प्रावेशयम् ॥ १८ ॥

सुन्दर अर्थात् त्वं येन पित्रा सूर्येण । स्यमन्तकविप्रयोगं विप्रयोगावधि प्रियसख्या राधायाः । श्रीवृन्दावनस्य शोभावैशिष्ट्यमाह—स्मितमिति ।

कदम्बैरुत्फुल्लं हसितमभितो जातिभिरलम् ।
उदीर्णं पर्णासैः कलय फलिनीभिर्मुकुलितं
मुहुर्मध्वादीनां स्फुरति युगपद् वैभवमिदम् ॥ १९ ॥

कृष्णः—प्रिये, पश्य पश्य ।

क्वचित् क्वणति कोकिलः स्वनति हन्त झिल्ली क्वचित्
क्वचिन्नटति चन्द्रकी रटति राजहंसः क्वचित् ।
किखी विरणति क्वचित् क्वचन रौति हारीतिका
तनोति समितिर्मुदं मम परामृतूनामसौ ॥ २० ॥

नववृन्दा—देव, पश्य पश्य ।

कथञ्चिदपि दन्तुरात् फणिकुलस्य सृक्काञ्चलात्
पलाय्य कृतमज्जनः कमलभाजि पम्पाजले ।
प्रभुं भुजगभोजिनो ननु पटीरपृथ्वीधराद्
भवन्तमिव सेवितुं मरुदुपैति वृन्दावने ॥ २१ ॥

कृष्णः—( तरुगुल्मावलिमवलोक्य[1] )

---

मधुर्वसन्तस्तदादीनां षण्णामृतूनामिदं वैभवं युगपदेकदा स्फुरति । वासन्तीभिर्माधवीलताभिर्हसितमित्यनेन वसन्तऋतुवैभवम् । हे माधव कलय पश्य । शिरीषैरित्यादि ग्रीष्मादीनां वैभवम् । स्मितहसितयोर्भेदस्तु हास्यस्य मन्दत्वाधिकाभ्यां ज्ञेयः । पर्णासैः करुणाख्यजम्बीरविशेषैः । 'जम्बीरोऽप्यथ पर्णासे कुठिञ्जनकुठेरकौ' इत्यमरः । फलिनीभिः श्यामलताभिः ॥ १९ ॥

शोभाविशेषं वीक्ष्य श्रीकृष्ण आह—क्वचिदिति । ऋतुनां समितिः सन्निपातो मम मुदं तनोति । कोकिलः ध्वनतीति वसन्तस्य । झिल्ली सूक्ष्मकीटविशेषः । चन्द्रकी मयूरः । किखी शृगाली मार्जारी वा । हारीतिका हरिताल इति ख्यातिर्यस्याः सा । इति क्रमेण वसन्तादिषड्ऋतुधर्माणां युगपन्मिलनं ज्ञेयम् ॥ २० ॥

वृन्दावनीयप्रदेशभेदेषु षण्णामृतूनामुदयेऽपि वसन्तस्य प्राधान्यं वक्तुमाह—कथञ्चिदिति । वसन्त एव दक्षिणानिलस्य दृष्टत्वान्मरुत् दक्षिणानिलः । कथञ्चित् कष्टेन फणिकुलस्य दन्तुरात् सृक्काञ्चलात् पलाय्य कमलभाजि कमलयुक्ते । पम्पाख्यसरोवरो दक्षिणदेशेऽस्ति तत्र कृतमज्जनः सन् पटीरपृथ्वीधरात् मलयाचलात् भुजगभोजिनो गरुडस्य प्रभुं भवन्तं सेवितुमिव वृन्दावनमुपैति प्राप्नोति । अनेन शैत्यसौगन्ध्यमान्द्यगुणयुक्तत्वं पवनस्य ध्वनितम् ॥ २१ ॥

---

1. मवालोक्य—व० ।

कदम्बाः क्षेमं वः शिवकुलमितो हन्त बकुलाः
फलिन्यः कल्याणं भविकमभितः पीलुतरवः ।
अमान्द्यं [1]माकन्दाः किमविकलतापुण्ड्रकलता-
श्चिरेणासौ युष्माननुसरति राधासहचरः ॥ २२ ॥

नववृन्दा—देव, नवाभिसारमन्दरीकृतकन्दरोऽयं नन्दीश्वरगिरिर्मुदमुद्गिरति ।

कृष्णः—( राधां पश्यन् )
किमुत्तुङ्गे क्षामोदरि परिचिनोषि क्षितिभृत-
स्तटान्ते [2]तिष्ठन्तीं-तरलदृशमेतां मृगवधूम् ।
निरातङ्कं या ते मरकतमयीं हारलतिकां
यवस्तम्भभ्रान्त्या वृतमतिरदाङ्क्षीदनुपदम् ॥ २३ ॥

राधा—कीस ण परिचिणिस्सं । एषा मह पिअसही रंगिणी णाम कुरंगी । [ कस्मान्न परिचयिष्ये । एषा मम प्रियसखी रङ्गिनी नाम कुरङ्गी । ]

कृष्णः—
अध्यासयां मुहुरलोकि मया विशाला
कल्याणि वल्लवकदम्बकमल्ललीला ।
सेयं वरोपलमयी शरदभ्रशुभ्रा
विभ्राजते मदुपवेशविलासपीठो ॥ २४ ॥

राधा—णअवुंदे, को एसो पुप्फेहिं णाअकेसरं तंवो विडंवेदि । [ नववृन्दे, क एषः पुष्पैर्नागकेसरस्तम्बं विडम्बयति । ]

नववृन्दा—सरले, कुब्जकोऽयम् ।

---

कदम्बा इति । असावहं राधासहचरः युष्माननुसरति । हे कदम्बा वो युष्माकं क्षेमम् । हे बकुला, वः शिवकुलं मङ्गलसमूहम् । फलिन्यः हे श्यामलताः वो भविकं कुशलम् । हे माकन्दा आम्राः वः अमान्द्यमारोग्यम् । हे पुण्ड्रकलताः वोऽविकलता स्वास्थ्यम् ॥ २२ ॥

किमिति । उत्तुङ्गे क्षितिभृतस्तटान्ते तिष्ठन्तीं मृगवधूं परिचिनोमि । या मरकतहारलतिकां यवगुच्छभ्रान्त्याऽदाङ्क्षीत् ॥ २३ ॥

अध्यासयामिति । यामुपवेशविलासस्य पीठीमध्यास्योपविश्य गोपकदम्बकृतमल्ललीला मयाऽलोकि । सेयं वरोपलः श्रेष्ठपाषाणस्तन्मयी पीठी विराजते ॥ २४ ॥

---

१. माकन्दः—अ० । २. तिष्ठन्ती—अ० ।

राधा—( पुष्पस्तवकमुद्धृत्य पश्यन्ती ) हद्धी ! हद्धी ! एत्थ लीनो दुट्ठभ्भमरो चिट्ठदि । [ हा धिक्! हा धिक्! अत्र लीनो दुष्टभ्रमरस्तिष्ठति ] ( इति साध्वसं नाटयति )

कृष्णः—

चकितकुरङ्गमनयने विमुञ्च भृङ्गेन सङ्गतं विटपम् ।
कुब्जाः सुभ्रु भयस्य प्रभवभुवः किल भुवि ख्याताः ॥ २५ ॥

नववृन्दा—( स्वगतम् ) देवस्य गिरमाकर्ण्य सस्मितमपाङ्गं कूणयन्ती राधिकेयं मामवलोकते । ( प्रकाशम् ) सखि, स्वयमेव पृच्छ पुण्डरीकाक्षम् ।

कृष्णः—नववृन्दे, निरातङ्कमुच्यताम् । किन्ते सखीविवक्षितम् ?

नववृन्दा—देव, कुब्जासङ्गः खलु मधुसूदनस्य [1]परमानन्दमेव तुन्दिलयति । कथमुभयमिति ?

कृष्णः—( सस्मितम् ) नववृन्दे, मृषाशङ्किनी तव सखी । पश्य कुब्जासङ्गमनङ्गीकुर्वन्नयमाननामोदवासितकाननामेनामेव धावति ।

राधा—( सभयम् ) हंत चंचलचंचरीअ, चिट्ठ चिट्ठ । एसा लीलाकमलेण ताडेमि तुमं धिठ्ठं । [ हन्त चञ्चलचञ्चरीक, तिष्ठ तिष्ठ । एषा लीलाकमलेन ताडयामि त्वां धृष्टम् । ]

कृष्णः—

पलाशेनोल्लासं वहति [2]विफलां वेत्ति फलिनीं
न वासं वासन्त्यां श्रयति कुमुदे याति न मुदम् ।
मधूके माध्वीकं न धयति लवं नैति लवलीं
मदेनाभूदन्धस्तव वदनगन्धान्मधुकरः ॥ २६ ॥

---

चकितेति । भयस्य प्रभवः भुवः उत्पत्तिस्थानरूपाः कुब्जाः भयम् । 'भयं कुब्जकपुष्पे स्यात्' इति । 'भयं प्रतिभये त्रासे प्रसूने कुब्जकस्य च' इति च ॥ २५ ॥

मधुसूदनस्य भ्रमरस्य कुब्जापुष्पप्रसङ्गः । पक्षे मथुरायां गतस्य तव कुब्जासङ्गः । एनां राधिकामेव । तिष्ठ तिष्ठेति । अत्र द्युतिर्नाम विमर्शसन्धेरङ्गमिदम् । तथा च—'तर्जनोद्वेजने द्युतिः' ( ना० चं० ९८ ) । अत्र भ्रमरादुद्वेगेन भ्रमरं प्रति तर्जनेन च द्युतिः ।

मधुसूदनस्त्वय्येवासक्तः नान्यत्रेति स्फुटं पश्य । पलाशेत्यादि । विफलां फलिनीं श्यामलतां न वेत्ति । मधूके माध्वीकं पुष्परसं न धयति न पिबति । लवं स्वल्पकालमपि लवलीं नैति ॥ २६ ॥

---

१. यमानन्द–अ० । २. विफलां चेति–अ० ।

नववृन्दा—

भृङ्गारास्तनुनिर्झरैर्विटपिभिस्तत्रातपत्रावली-
पल्यङ्काः स्फटिकैरलङ्कृतिकुलं धौतोज्ज्वलैर्धातुभिः ।
रत्नानां निकुरम्बकेन हरये येनार्पिता [1]दर्पणाः
सोऽयं राजति शेखरः शिखरिणां गोवर्द्धनाख्यो गिरिः ॥ २७ ॥

कृष्णः—

विलसति किल सोऽयं पश्य मत्तो मयूरः
शिखरभुवि निविष्टस्तन्वि गोवर्द्धनस्य ।
मुहुरमलशिखण्डं ताण्डवव्याजतस्ते
व्यकिरदुपहरन् यः कर्णपूरोत्सवाय ॥ २८ ॥

राधा—तंडविअ शिहंडिराअ, चिरं वड्ढेहि । [ ताण्डविक शिखण्डिराज, चिरं वर्द्धस्व । ]

कृष्णः—प्रिये, स्मर्यते किमु गोवर्द्धनतः कलिन्दजापदवी ।

राधा—कीस ण सुमरीअदि । [ कस्मान्न स्मर्यते ] ( इति संस्कृतेन )

अग्रे चम्पकचक्रमस्य पुरतः पुन्नागवीथी ततो
जम्बूनां निकुरम्बकं तदभितस्तुङ्गा कदम्बाटवी ।
इत्युच्चैर्वरशाखिभिः परिचितैरेभिः क्रमादाचितः
कालिन्दीमुपतिष्ठते गिरितटात् पन्थाः प्रथीयानसौ ॥ २९ ॥

---

भृङ्गारा इति । येन गोवर्द्धनपर्वतेन हरये तनुनिर्झरैः भृङ्गाराः जलपानपात्राण्यर्पिताः स राजति । वृक्षैरातपत्रावली आतपत्रः छत्रं तस्यावली । स्फटिकैः पल्यङ्काः शय्या धातुभिर्गैरिकादिभिः अलङ्कारसमूहमर्पितम् । रत्नानां निकुरम्बकेण समूहेन दर्पणा अर्पिता इति सर्वत्रान्वयः । अनेन तत्रस्थाः सर्वेऽतिस्वच्छाः कृष्णसेवापराश्च ज्ञेयाः ॥ २७ ॥

विलसतीति । गोवर्द्धनस्य शिखरे मयूरो विलसति । यो मयूरस्तव कर्णपूरोत्सवाय शिखण्डं पुच्छमुपहरन्नुपहारीकुर्वन् सन् व्यकिरत् ॥ २८ ॥

ताण्डविक नाम शिखण्डिराज । गोवर्द्धनाद्यमुनामार्गम् । अग्रे इति । अग्रे चम्पकचक्रं समूहमस्य पुरतोऽग्रे पुन्नागस्य नागकेसरस्य वीथी श्रेणी एभिः शाखिभिः वृक्षैराचितः व्याप्तः गिरितटात् प्रथीयान् पन्थाः कालिन्दीमुपतिष्ठते । पथि कर्तरि आत्मनेपदम् ॥ २९ ॥

---

1. दर्पणः—अ० ।

कृष्णः—( स्मित्वा ) तदेहि । पतङ्गतनयामनया पदव्या प्रयामः ।
( इति सर्वे तथा कुर्वन्ति )

नववृन्दा—

भ्रमलालितसलिलेयं कमलावलिभिः पुरः परीतझरा ।
अमलाय यस्य यामी मम लास्यं नेत्रयोस्तनुते ॥ ३० ॥

कृष्णः—

प्रीत्या कुण्डलितः कुलेन मरुतां रुद्धाः शिखण्डोत्करै-
रेष स्पर्द्धितनेत्रखण्डरुचिभिर्भाण्डीरशाखी पुरः ।
बिभ्राणः शतकोटिमण्डितमहाशाखाभुजोद्दण्डतां
कालिन्दीतटमण्डले विटपिनामाखण्डलत्वं ययौ ॥ ३१ ॥

राधा—

बद्धतरलरोलम्बा[1]विसारिणा हारिगन्धविसरेण ।
कोमलमल्लीपुञ्जा मञ्जुलकुसुमा हरन्ति मे चित्तम् ॥ ३२ ॥

( कृष्णस्तदेव 'बद्धतरलेत्यादि' ( ८।३२ ) पुनः पठति )

नववृन्दा—हला, तव हारसंघर्षेण मुकुन्दवक्षसः स्खलितां सुरसौगन्धिकस्रजं मराली चञ्चुपुटेनादाय पश्योड्डीना ।

कृष्णः—कथमवरोधदीर्घिकादिशं प्रयाता !

---

पतङ्गस्सूर्यस्तस्य तनया । भ्रमेति । यमस्य यामी भगिनी मम नेत्रयोर्लास्यं नृत्यं तनुते । भ्रमो भ्रमिः । झरा झरना इति प्रसिद्धः ॥ ३० ॥

प्रीत्येति । भाण्डीरनामा शाखी वटवृक्षः कालिन्द्यास्तटमण्डले विटपिनां वृक्षाणामाखण्डलत्वमिन्द्रत्वं ययौ । मरुतां वायूनां पक्षे अमराणां कुलेन प्रीत्या कुण्डलितः व्याप्तः पक्षे कुण्डलयुक्तः कृतः । शिखण्डोत्करैर्मयूरपुच्छसमूहैः कीदृशैः—स्पर्द्धितं स्पर्द्धाविषयीकृतं नेत्रसमूहानां रुचिः कान्तिर्यैः नेत्रसमूहतुल्यैः रुद्धः व्याप्तः पक्षे सहस्रनेत्रः । शतकोटीति । शतंकोटीनि अग्राणि यस्य पक्षे वज्रश्च तैस्तेन वा मण्डितां महाशाखारूपभुजोद्दण्डतां प्रचण्डतां दधानः ॥ ३१ ॥

बद्धेति । बद्धास्तरला रोलम्बा भ्रमरा यासु ताः कोमलमल्लीपुञ्जा विसारिणा दूरगामिना हारिगन्धविसरेण गन्धसमूहेन मे चित्तं हरति । तदेव भाषासमावेशात् ॥ ३२ ॥

---

१. विसारिणा हारि विसरेण—ब० ।

नववृन्दा—

अतिमुक्तोऽपि विमोक्तुं वृन्दावनवासवासनानन्दम् ।
क्षणमपि न खलु क्षमते क्षुद्राणां का कथान्येषाम् ॥ ३३ ॥

कृष्णः—प्रिये, प्रभूतान्यभूतपूर्वसङ्गमान्यतिमुक्तमालत्योः प्रसूनान्यवचित्य किमप्यपूर्वमापीडं योजयिष्ये यन्मया गुरुकुले कलाभ्यासे शिक्षितम् । ( इति दूरतः परिक्रम्य । सविस्मयम् ) कोऽयं माधुर्येण ममापि मनोहरन्मणिकुड्यमवष्टभ्य पुरो विराजते । ( पुनर्निभाल्य ) हन्त ! कथमहमत्र प्रविबिम्बितोऽस्मीति । ( सौत्सुक्यम् )

अपरिकलितपूर्वः कश्चमत्कारकारी
स्फुरति मम गरीयानेष माधुर्यपूरः ।

---

अवरोधदीर्घिकाऽन्तःपुरदीर्घिका । अतिमुक्तोऽपीति । अतिमुक्तो वासन्तीपक्षे मुक्तोऽपि जनः वृन्दावनवासे या वासना तज्जन्यानन्दं क्षणमपि त्यक्तुं न क्षमते । क्षुद्रास्तदानन्दं विमोक्तुं न क्षमते इति किमु वक्तव्यमित्याह—क्षुद्राणामिति ॥ ३३ ॥

प्रसूनानि कीदृशानि—अभूतपूर्वं सङ्गममपि येषां तानि प्रकर्षेण भूतान्युत्पन्नानि । अतएव एतान्यवचित्य किमप्यनिर्वचनीयमपूर्वमापीडं शिरोभूषणं करिष्ये । यदापीडरचनम् ।

स्वस्य राधादर्शनसङ्गविरहादिजन्यसुखदुःखादपि स्वदर्शनसङ्गविरहादिजन्यं राधिकायाः सुखदुःखादिकं जलप्रवेशादिना सर्वाधिकतममालक्ष्यात्र कारणं राधिकायाः सर्वाधिकप्रेमैवादौ निर्द्धारितमस्ति । अधुना 'संसर्गजा दोषगुणा भवन्ती'ति न्यायेन श्रीराधिकासङ्गजन्येन स्वस्य लब्ध्वा परममाधुर्यवारिधिं तदनुभवश्च सौत्सुक्यं साभिलाषश्चाह—अपरिकलितेति । अपरिकलितपूर्वोऽननुभूतपूर्वः कोऽनिर्वचनीयो मेऽपि चमत्कारकारी गरीयान् सर्वोत्तम एष मम माधुर्यपूरः स्फुरति । यं माधुर्यपूरं प्रेक्ष्यायं प्रसिद्धोऽहं लुब्धचेताः सन्नर्थात्तं माधुर्यमास्वादयितुं कामये । राधिकाया एव मम सर्वमाधुर्यास्वादने सामर्थ्यं नान्यस्येति हेतो राधिकेवेत्युक्तम् । इव-शब्देन राधिकाया भावकान्तियुक्तेन कृष्णस्य चैतन्यस्वरूपेण श्रीकृष्णस्याभिलाषसिद्धिरपि ज्ञापिता सत्यसङ्कल्पत्वात् । ब्रह्मणो दिवसमध्ये वारमेकं श्रीकृष्णस्य प्राकट्यं तत्पश्चात् श्रीकृष्णचैतन्यस्य प्राकट्यं महानुभावैर्निर्धारितत्वाच्च । इन्द्रमखार्थं श्रीनन्दादिकृतसम्भारेऽभिलाषवता श्रीकृष्णेन यथा रूपान्तरेण तं सम्भारं भुक्तम् । देवानाममृतपानार्थं श्रीमहादेवस्येच्छासिद्ध्यर्थञ्च अभिलाषवता तेन यथा मोहिनीरूपेण सिद्धिः कृता तथैव

अयमहमपि हन्त प्रेक्ष्य यं लुब्धचेताः
सरभसमुपभोक्तुं कामये राधिकेव ॥ ३४ ॥

( पुरोऽनुसृत्य )

निर्निमेषेक्षणाकार भृङ्गस्तबकद्युतिः ।
मालत्यम्लानपुष्पेयं भुवि देवीव दीव्यति ॥ ३५ ॥

( प्रविश्य देवी )

देवी—माहवि, णिच्चिदं इदो वुंदावणदो एसा हंसोए णीदा सुरसोहंधिअमाला । [ माधवि, निश्चितमितो वृन्दावनादेतया हंस्या नीता सुरसौगन्धिकमाला । ]

माधवी—अध इं । णाअरीसंगसोरब्भरुग्गारिणीणं तक्किअ तुमं एत्थ आणीदासि । [ अथ किम् । नागरीसङ्गसौरभभरोद्गारिणीमेनां तर्कित्वाऽत्रानीतास्ति । ]

चन्द्रावली—( स्वाङ्गमालोक्य ) हला सच्चभामा, प्पसाहणेण कीस मंडिदह्मि [ सखि सत्यभामे, प्रसाधनेन कीदृशी ( कस्मात् ? ) मण्डितास्मि ? ]

माधवी—( सालीकम् ) भट्टदारिए, भमिदह्मि । [भर्तृदारिके, भ्रमिताऽस्मि । ]

चन्द्रावली—( पुरो विलोक्य ) सहि, पेक्ख । एसो अज्जउत्तो णादिदूरे पप्फुरेदि । [ सखि, पश्य । एष आर्यपुत्रो नातिदूरे प्रस्फुरति । ]

---

श्रीराधिकाभावकान्त्यङ्गीकुर्वता श्रीकृष्णचैतन्यावतारेणैषा कामनापि सिद्धीकृतेति ग्रन्थकृत्प्रभृतिमहानुभावैर्निर्णीतम् ।

अनेन स्वरूपानन्दतोऽपि भजनानन्दमधिकमित्यपि व्यक्तं भवति । अतएव श्रीराधाकृष्णतोऽपि श्रीकृष्णचैतन्यस्य प्रेमजन्यविकाराधिक्यं स्फुटमेव श्रूयते । एवं मत्प्रभुश्रीचक्रवर्तिठक्कुरचरणैः स्वकृत'स्तवामृता'न्तर्गत'सङ्कल्पकल्पद्रुमे' श्रीचैतन्यदेवं प्रति प्रार्थना कृता । तथा हि—

राधाङ्गशश्वदुपगूहनतस्तदास-
धर्मद्वयेन तनुचित्तधृतेन देव ।
गौरोदयानिधिरभूरपि नन्दसूनो-
स्तन्मे मनोरथलतां सफलीकुरु त्वम् ॥ इति ॥ ३४ ॥

निर्निमेषेति । अम्लानपुष्पा मालती भुवि देवीव निर्निमेषा दीव्यति । कीदृशी—निर्निमेषेत्यादि । स्तबकः पुष्पगुच्छः ॥ ३५ ॥

प्रसाधनेन भूषणेन ।

माधवी—ण खु पुरदो भट्टा। एसो [1]इंदणीलमउसो तस्स पडिबिंबो। [ न खलु पुरतो भर्त्ता। एष इन्द्रनीलमहसस्तस्य प्रतिबिम्बः। ]

चन्द्रावली—अम्महे! चमक्किदिकारिदा पडिबिंबस्स। [ अहो! चमत्कृतिकारिता प्रतिबिम्बस्य। ] ( इति पुरोऽनुसृत्य ) हला, [2]मालदिअं ओचिनंता एसो पेक्खीअदु अज्जउत्तो। ता एक्किका च्चेअ गमिस्सं। [ सखि, मालतिकामन्वचिन्वन्नेष प्रेक्षतामार्यपुत्रः। तदेकिकैव गमिष्यामि। ] ( इति तथा करोति )

कृष्णः—( चन्द्रावलीं विलोक्य सानन्दमात्मगतम् ) कथमत्र जीवितेश्वरी मे राधाप्युपगता। ( प्रकाशम् ) प्रिये, कथं विदूरमागतासि। ( इति रोमाञ्चमवलोक्य )

मा खञ्जरीटनयने हृदि संशयिष्ठाः
कुर्वन्ब्रवीम्यवितथं शपथं गुरुभ्यः।
एका प्रियङ्करणवृत्तिरसि त्वमेव
प्राणावलम्बनविधौ परमौषधिर्मे॥ ३६॥

चन्द्रावली—( सहर्षमात्मगतम् ) तह वि तुण्हि भविअ आऊदं लक्खेम्हि। [ तथापि तूष्णीं भूत्वाऽऽकूतं लक्षयामि। ]

नववृन्दा—( लतान्तरे स्थित्वा ) हन्त! कथमङ्गीकृतराधाप्रसाधना देवीयमुपलब्धा! तदेष माधवो यावदेनां राधिकां प्रतीत्य न प्रमादमादधाति तावदेवाहं पद्यमेकं हारीतेन हारयामि। ( इति केतकीपत्रे विलिख्य नेपथ्ये क्षिपति ) ( पुनर्विलोक्य। सानन्दम् ) दिष्ट्या हरिरेष हारीतेन करे क्षिप्तं पद्यमालोकयति। तदहं प्रच्छन्ना भवेयम्। ( इति निष्क्रान्ता )

कृष्णः—( पत्रं पश्यन्निगूढं वाचयति )

---

मा खञ्जरीटेति। गुरुभ्यः शपथं कुर्वन्नवितथं सत्यं ब्रवीमि। मा संशयिष्ठाः संशयं मा कृथाः। प्रियङ्करणवृत्तिश्चेष्टा यस्याः सा तथा त्वमेवैकाकी॥ ३६॥

आकूतमभिप्रायम्। हारीतेन हारयामीति। शक्तिर्नाम विमर्शसन्ध्यङ्गमिदम्। तथा च—'विरोधशमनं शक्तिः' ( ना० चं० ९७ )। अत्र राधात्वेन चन्द्रावलीज्ञानादुत्पन्नस्य विरोधस्य शमनाच्छक्तिः।

यस्यां राधिकाभ्रमं करोषि। एषा राधिका न किन्तु तस्या भूषणेन भूषिता

---

१. णीलमत्तसो तस्स-ब०।

२. मालदिअ उचिरानंतो एसो-अ०।

करोषि यस्यां नवकर्णिकार-
मालाभ्रमं हन्त मधुव्रतेन्द्र ।
प्रतीहि तां कुङ्कुमकर्दमेन
लिप्तच्छदां कैरवकोरकालिम् ॥ ३७ ॥

( इति चन्द्रावलीं निभाल्य । स्वगतम् ) साधु नववृन्दे साधु । वाढमव-सरे कृता पूर्वसेवाप्रपञ्चासि । ( प्रकाशम् ) देवि, कथमुदासीनेव तिष्ठन्ती नातः प्रसादसुधावीचिं सूचयसि । ( इति सादरमवेक्ष्य )

शैत्यश्रिया सौरभसम्पदा च
निर्धूतचन्द्रद्वयगौरवेण ।
स्ववैभवेनाद्य मदङ्गकानि
विधेहि चन्द्रावलि निर्वृतानि ॥ ३८ ॥

माधवी—( लतान्तरे स्थित्वा । सहर्षमात्मगतम् ) णूणं विस्सकम्मकि-दप्पसाहणप्पहावो एसो सोहग्गमाहुरीलाहो । [ नूनं विश्वकर्माकृतप्रसाध-नप्रभाव एष सौभाग्यमाधुरीलाभः । ]

कृष्णः—प्रिये, त्वदङ्गसङ्गमाय [1]तरङ्गितान्तरङ्गं स्वयमङ्गीकुरु सुहृ-ज्जनम् । ( इति सानुरागमिवोपसर्पन् । सालीकशङ्कम् ) धिक् ! कष्टम् ! अज्ञानविभ्रमेण कृतमहापराधोऽस्मि । यदिदं देवी न भवेत् किन्तु काचि-दन्या कुमारी । ( इति विमर्शमभिनीय ) आं विज्ञातम् । सेयं विश्वकर्मणो नप्त्री भविष्यति । या मम दूरतस्तेनाद्य प्रदेशिन्या प्रदर्शिता ।

( चन्द्रावली व्याजेन माल्यं दर्शयति )

कृष्णः—( स्वगतम् ) हन्त ! हंसीकृतोऽयमनर्थः । ( प्रकाशम् ) चित्र-

---

देवीत्याह—करोषीति । कर्णिकारः [2]स्वर्णवर्णपुष्पविशेषः । लिप्तच्छदामालिप्त-पत्राम् ॥ ३७ ॥

शैत्यश्रियेति । शैत्येन सौरभेन च निर्द्धूतं निरस्तमिन्दुकर्पूरयोर्गौरवं येन तेन स्ववैभवेन ॥ ३८ ॥

विश्वकर्मणे नप्त्री भविष्यतीत्यनेन तस्यां तादृशवैदग्ध्याद्यभावादुत्साहादि-युक्ता न भवतीति भावः । तेन विश्वकर्मणा । प्रदेशिन्या अङ्गुल्याः । यमुनाया झरझात्कारेण पवनवेगेन हृता माला कथमेतया विश्वकर्मणो न आलब्धा इति स्फुटं वदन् शुद्धान्तमन्तःपुरं गत्वा देव्यां रुक्मिण्यां राधिकामिलनोत्कण्ठया कपटेन रुक्मिणीमेव विश्वकर्मणो नप्त्रीमुक्त्वा श्रीकृष्णो गतः इति भावः ।

---

१. तरङ्गितरङ्गं—ब० । २. पद्माकारस्वर्णपुष्पविशेषः—अ० ।

मिदं यमुनाझरझात्कारेण हृता मे सुरसौगन्धिकमाला कथमेतया लब्धा। तदहं शुद्धान्तमासाद्य सर्वमिदमपूर्ववृत्तान्तं स्वयमेव देव्यामावेदयामि यथा नापराधकलङ्के शङ्कालवाङ्कुरोऽपि मां कटाक्षयति। ( इति निष्क्रान्तः )

माधवी—( उपसृत्य ) भट्टिदारिए, का क्खु पउत्ती ? [ भर्तृदारिके, का खलु प्रवृत्तिः ? ]

चन्द्रावली—सहि, साहाविअस्स महाणुराअपूरस्स जा क्खु अहिरूवा भवे। [ सखि, स्वाभाविकस्य महानुरागपूरस्य या खल्वभिरूपा भवेत्। ]

माधवी—भट्टदारिए, लोउत्तरचादुरीमुद्दादुव्वोहव्ववहारो एसो णाअरो। ता एहि सच्चभामं पेक्खम्ह। ( भर्तृदारिके, लोकोत्तरचातुरीमुद्रादुर्बोधव्यवहार एष नागरः। तदेहि सत्यभामां पश्यावः। ]

चन्द्रावली—( परिक्रम्य राधां पश्यन्ती सव्यथं संस्कृतेन )

[1]पूर्वेक्षितव्यसन लक्ष्म विमुक्तमूर्ति-
रन्तर्निगूढसुखसाक्षिसुखप्रसादा।
अद्य स्फुरत्तरलदृष्टिरिहोपलब्धिं
कंसारिसङ्गमनिधेः सुतनुर्व्यनक्ति॥ ३६॥

राधा—( समीक्ष्य। सखेदमात्मगतम् ) कहं इंदीअरे रहंगीए संगमिदुं अहणंदिदे मच्छरा कलहंसी मिलिदा। [ कथमिन्दीवरे रथाङ्गया सङ्गमितुमभिनन्दिते मत्सरा कलहंसी मिलिता।

चन्द्रावली—( स्मितं कृत्वा ) सहि सच्चे, सच्चं कधेहि। तस्सिं [2]सुदिट्ठे बलामोडिअ भुअदंडपीडणे सो क्खु [3]सुवुत्तो कोत्थुओ तुम्हाणं मज्झत्थो आसी ण वत्ति। [ सखि सत्ये, सत्यं कथय। तस्मिन् सुदृढे बलात्कारेण भुजदण्डपीडने स खलु सुवृत्तः कौस्तुभो युष्माकं मध्यस्था आसीन्नवेति ? ]

---

पूर्वेति। पूर्वं पुरा ईक्षितं यद्व्यसनलक्ष्म दुःखचिह्नं तस्माद्विमुक्ता मूर्तिर्यस्याः सा। अधुना अन्तर्निगूढेत्यादिना च कृष्णसङ्गसमुद्रस्योपलब्धिम्। सुतनुः शोभना तनुरेव व्यनक्ति॥ ३९॥

कथमित्यादि। कश्चिद् विरोधनं नाम विमर्शसन्ध्यङ्गमपठित्वा तत्स्थाने प्रतिषेधं पठति। तथा हि—'ईप्सितार्थप्रतीघातः प्रतिषेध इतीर्यते।' ( ना० चं० का० १०५ )। अत्र देव्या आगमनात् [4]कृष्णस्य सङ्गप्रतीघातः प्रतिषेधः।

---

१. पूरेक्षित--स०। २. सुदीटे–अ०। ३. सुव्वत्तो–अ०।
४. कृष्णसङ्गप्रतीघातः प्रतिषेधः–ब०।

राधा—देई, खिण्णम्मि परिजणम्मि अलं उवालंहेण। [ देवि, खिन्नेऽस्मिन् परिजनेऽलमुपालम्भेन। ]

माधवी—( सखेदमात्मगतम् ) इमाए सुरतरंगिणी एलावण्णामिअविभ्भमलहरीतरंगे ओगाढ़ो सो पुरिसकुंजरो उत्ताणअं च्चेअ ण सुमरेदि। किं उण भट्टदारिआदीहिअं। [ अस्याः सुरतरङ्गिण्या लावण्यामृतविभ्रमलहरीतरङ्गेऽवगाढः सः पुरुषकुञ्जरः आत्मानमेव न स्मरति। किम्पुनः भर्तृदारिकादीर्घिकाम्। ]

चन्द्रावली—( सोल्लुण्ठस्मितम् ) अइलोलुहे आलि, कीसमं अणामंतिअ तं णिअमहाव्वदं तुए सुठ्ठु पडिठ्ठिदं। [ अयि लोलुपे आलि, कस्मान्मामनामन्त्र्य तं निजमहाव्रतं त्वया सुष्ठु प्रतिष्ठितम् ? ]

राधा—देइ, सरण्णस्स जणस्स रक्खणे अक्खमासि। तहवि परिहसेसि। णं ईसरीणं क्खु जुत्तं एदं ! [ देवि, शरण्यस्य जनस्य रक्षणेऽक्षमासि। तथापि परिहससि। नूनमीश्वरीणां खलु युक्तमिदम्। ] ( इति संस्कृतेन )

कन्या बन्धुजनैर्भवेत् परवती दत्तास्मि युष्मद्गृहे
तैरस्मिन्नतिचञ्चलो गृहपतिः साध्वीव्रतध्वंसनः।
भव्यास्मिन्नभिभाविका न वसति प्रामाणिकी चाश्रमे
निस्ताराय तवाद्य देवि करुणानौरेव धौरेयिका ॥ ४० ॥

चन्द्रावली—( स्वगतम् ) जहत्थं व्वाहरेदि। ( प्रकाशम् ) सहि, किं

---

सुरतरङ्गिण्याः सुरते रङ्गिण्याः च। पक्षे गङ्गायाः। अवगाढो निमग्नः।

लोलुपे आलि कस्मादिति। विरोधनं नाम विमर्शसन्ध्यङ्गमिदम्।

तथा च—

'विरोधनं विरोधोक्तिः संरब्धानां परस्परम्।'

( ना० चं० का० १०१ )।

अत्र निगूढसरम्भयोश्चन्द्रावलिराधयोः परस्परविरोधोक्त्या विरोधनम्।

युक्तमिदमिति। नैव युक्तमिति भावः। कन्येति। बन्धुजनैः कन्या परवती परतन्त्रा भवति तैर्बन्धुजनैर्युष्मद्गृहे दत्ताहमस्मि। अस्मिन् गृहे गृहपतिरतिचञ्चलः। अस्मिन्नाश्रमे भव्या प्रामाणिकी अभिभाविका रक्षित्री नास्ति। तव करुणारूपा नौरेव धौरेयिका धुरीणा भारवाहिकेत्यर्थः ॥ ४० ॥

ते दाणिं अहिमदं ? [ यथार्थं व्याहरति ( प्रकाशम् ) सखि, किन्ते इदानी-मभिमतम् ? ]

राधा—देइ, जाव समंतएण वदुज्जावणं करोम ताव रक्खेहि मं। [ देवि, यावत्स्यमन्तकेन व्रतोद्यापनं करोमि तावद्रक्ष माम् । ]

चन्द्रावलि—सहि, वीसद्धा होहि। उणो च्छलेण मं वंचेदुं एसो ण पहविस्सदि। जं सव्वदा मे पासवट्टिणी विअक्खणा माहवी। [ सखि, विस्रब्धा भव। पुनश्छलेन मां वञ्चयितुमेष न प्रभविष्यति। यत् सर्वदा मे पार्श्ववर्त्तिनी विचक्षणा माधवी। ]

माधवी—सुंदरि, विस्सकम्मेण दिण्णं तुए मंडणकरंडिअं दाणिं पत्थावइस्सं। [ सुन्दरि, विश्वकर्मणा दत्तां तव मण्डनकरण्डिकामिदानीं प्रस्था-पयिष्यामि। ]

चन्द्रावली—सहि, जाहि माहवीमंडवं। अहं पि माहवीजुत्ता अंते-उरं जामि। [ सखि, गच्छ माधवीमण्डपम्। अहमपि माधवीयुक्ताऽन्तःपुरं गच्छामि। ]

( इति निष्क्रान्ताः सर्वे )

इति नववृन्दावनविहारो नाम अष्टमोऽङ्कः।



---

व्याहरति वदति। व्रतोद्यापनं व्रतसम्पूरणम्।

इति अष्टमाङ्क-व्याख्या



# अथ नवमोऽङ्कः

( ततः प्रविशति नववृन्दा )

नववृन्दा—( पुरोऽवलोक्य । सहर्षम् )

निर्मितभुवनविशुद्धिर्विधुविधुरा[1] लोकसाधने निपुणा ।
उल्लसितपरमहंसा भक्तिरिवेयं शरन्मिलति ॥ १ ॥

---

अथ निर्वहणसन्धिः । कार्यप्रकृतेः फलागमावस्थया योगो निर्वहणसन्धिः । कार्यलक्षणं यथा—'वस्तुनस्तु समस्तस्य साध्यं कार्यमिति स्मृतम् ।' ( ना० चं० का० ३६ )। तथा च—अपेक्षितन्तु यत्साध्यमारम्भो यन्निबन्धनः । समापनन्तु तत्सिद्धौ तत् कार्यमिति सम्मतम् ॥' ( सा० दर्प० परि० ६-६९ )।

अथ फलागमावस्था । सा यथा—'निजाभीष्टफलावाप्तिर्भवेदेव फलागमः ।' ( ना० चं० का० ४३ )। तथा च—'सावस्था फलयोगः स्याद् यः समग्रफलोदयः ।' ( सा० दर्प० परि० ६—७३ )। यथात्र निर्वहणसन्धौ व्रजबन्धुसमागमराधालाभरत्नाभिषेकादिः फलागमः । निर्वहणसन्धिलक्षणं यथा—

मुखसन्ध्यादयो यत्र विकीर्णा बीजसंयुताः ।
महाप्रयोजनं यान्ति तन्निर्वहणमुच्यते ॥ ( ना० चं० का० १०७ )

तथा च—बीजवन्तो मुखाद्यर्था विप्रकीर्णा यथायथम् ।
एकार्थमुपनीयन्ते यत्र निर्वहणं हि तत् ॥ ( सा० द० ६—८१ )

[2]अथाङ्गकल्पना कार्यफलागमसमागमात् ।
राधादीनान्तु सर्वासां कुमारीणामवाप्तितः ॥
उद्वाहाद्युत्सवः प्रोक्तो यथा ललितमाधवे । ( ना० चं० १०८,१०९ )

अत्राङ्गानि—

सन्धिर्विबोधो ग्रहणं निर्णयः परिभाषणम् ।
प्रसादानन्दसमयाः कृतिर्भाषोपगूहनम् ॥
पूर्वभावोपसंहारौ प्रशस्तिश्च मनीषिभिः ।
इति निर्वहणस्याङ्गान्युक्तान्यस्य चतुर्दश ॥ ना० चं० १०९—१११ )

यथात्र नवमदशमाङ्कयोरुदाहरणानि ।

निर्मितेति—भक्तिरिवेयं शरन्मिलति । उभे कीदृशे—निर्मिता भुवनस्य भूर्लोकस्य जनस्य च शुद्धिर्यया । 'भुवनं जनलोकयोः' । विधुमधुरा लोकसाधने

---

१. विधुमधुरा—ना० चं० ।    २. अत्राङ्गेति ना० चं० ।

( प्रविश्य शरद् )

शरद्—सहि णअवुंदे, कहिं गदासि ? [सखि नववृन्दे, कुत्र गतासि ?]

नववृन्दा—शरच्चन्द्रिमे, गुरोरभ्यर्णे।

शरद्—किंत्ति ? [ किमिति ? ]

नववृन्दा—देवस्य निदेशेन।

शरद्—कस्सिं अत्थे सो णिदेसो ? [ कस्मिन्नर्थे स निदेशः ? ]

नववृन्दा—रैवतके सद्मनां[1] षोडशसहस्री-निर्माणे।

शरद्—तत्थ किं णिदाणं ? [ तत्र किं निदानम् ? ]

नववृन्दा—

जगद्विघ्नं निघ्नन्नपगतनयं क्षोणितनयं
हृतान्यन्तर्गोष्ठात् कपटकलिना तेन बलिना।
सहस्राण्यस्रालीवलयितदृशां पङ्कजदृशां
शताढ्यानि [2]क्रीडागुरुरुदहरत् षोडश हरिः ॥ २ ॥

शरद्—( साद्भुतम् ) किं ताओ च्चेअ गोउलकण्णाओ ? [ किं ता एव गोकुलकन्यकाः। ]

नववृन्दा—अथ किम्।

केशिरिपोरवकेशी भजनाभासक्षुपोऽपि नेहास्ति।

---

विधोः श्रीकृष्णस्य मधुरदर्शनसाधने। पक्षे—विधोश्चन्द्रस्य मधुरप्रकाशसाधने निपुणा। 'आलोकौ दर्शनोद्योतौ'। परमहंसा भक्ताः पक्षे श्रेष्ठहंसाः। कस्यचिन्मते शोभा नाम नाटकभूषणमिदम्। तथा च—

'सिद्धैरर्थैः समं यत्र प्रसिद्धोऽर्थः प्रकाशते।
श्लिष्टलक्षणचित्रार्था सा शोभेत्यभिधीयते॥" ( सा० दर्प० ६.१७६ )

अत्र प्रकटसेव शोभा ॥ १ ॥

गुरोः विश्वकर्मणः। अभ्यर्णे निकटे। निदानं कारणम्।

जगदिति। क्रीडागुरुः हरिः क्षोणितनयं नरकासुरं निश्शेषेण घ्नन् निघ्नन् पङ्कजदृशां षोडशसहस्राणि शताढ्यान्युदहरत्। कीदृशीनाम्—अस्राली नेत्राश्रुश्रेणी तया युक्तदृशाम्। कीदृशानि—तेन नरकासुरेण अन्तर्गोष्ठाद् हृतानि। कीदृशं नरकासुरम्—जगतां विघ्नं विघ्नस्वरूपम् अपगतनयं नीतिशून्यम् ॥ २ ॥

ताः शताधिकषोडशसहस्रसुन्दर्यः। कृष्णभजनस्यावन्ध्यत्वमाह—केशिरिपोरिति। केशिरिपोर्भजनाभासस्य क्षुपः क्षुद्रशाखापि अवकेशी वन्ध्यो नास्ति।

---

1. सपद्मनां—अ०। 2. गुरुदरहरत् ( ? )-अ०।

किम्पुनरपूर्वपर्वा प्रेमामरपादपस्तासाम् ॥ ३ ॥

शरद्—कहं राअकण्णआओ त्ति पसिद्धी सुव्वइ ? [ कथं राजकन्यका इति प्रसिद्धिः श्रूयते ? ]

नववृन्दा—कयापि कुमारीणां माधुर्यमधुधारया मोहितेन महीसूनुना कामाख्याप्रतारणाय विवाहितानां तासां दानवकुमारेभ्यः प्रतिपादनं मृषैव विश्राव्य राजसुतात्वेन विख्यातिरुद्भाविता ।

शरद्—सच्चं सच्चं यद् दुवारवदीपुरे ताणं पत्थावणं कामक्खाए अहिमदं । [ सत्यं सत्यं यद्द्वारवतीपुरे तासां प्रस्थापनं कामाख्ययाऽभिमतम् । ]

नववृन्दा—तयैव रुष्टया देव्या प्रेषितः पाकशासनो द्वारवतीमासाद्य भौमवधमभ्यर्थितवान् ।

शरद्—हला, सव्वाणं गोउलकुमारीणं एत्थ संगमो संवुत्तो । केअलं पउमापमुहं च्चेअ कण्णआचउक्कं [1]परिसिठ्ठं । [ सखि, सर्वासां गोकुलकुमारीणामत्र सङ्गमः संवृत्तः । केवलं पद्मा‌प्रमुखमेव कन्याचतुष्कं परिशिष्टम् । ]

नववृन्दा—सरले तासां पूर्वमेव समाहृतिर्बभूव ।

शरद्—कहं सा ? [ कथं सा ? ]

नववृन्दा—

लीलयैव पशुपालपुङ्गवः
स्तम्भयन् सपदि सप्त पुङ्गवान् ।
मग्नदृष्टिमनुरागसागरे
नग्नजिद्-दुहितरं समाहरत् ॥ ४ ॥

---

'ह्रस्वशाखाः शिफः क्षुपः' । 'वन्ध्योऽफलोऽवकेशी च फलवान् फलिनः फली' । किम्पुनस्तासामपूर्वपर्वा प्रेमरूपकल्पवृक्षो वन्ध्यो भवति ॥ ३ ॥

कामाख्यया देव्या नरकासुरं ता व्रजसुन्दरीः आनेतुमुक्तः । स ताः दृष्ट्वा मोहितः सन् यत् कृतवान् तदेवाह—कयापीति । महीसूनुना नरकेण विवाहितानां तासां देव्यै दातुमयोग्यत्वात्तासां दानवकुमारेभ्यः प्रतिपादनं दानम् । मृषैव देवीं विश्राव्य कुमारीणां राजसुतात्वेन विख्यातिरुद्भाविता कृता । पाकशासनः इन्द्रः । परिशिष्टमवशिष्टम् ।

कथं सा समाहृतिः इत्यत आह—लीलयैवेति । पशुपालपुङ्गवः श्रीकृष्णः सप्त पुङ्गवान् वृषान् स्तम्भयन् नग्नजिद्दुहितरं नाग्निजितीम् । एषैव पद्मा ॥ ४ ॥

---

१. ओसिठ्ठं [ अवशिष्टम् ]—ब० ।

किञ्च—

शैब्यां घनप्रणयघूर्णनघोरतृष्णां
कन्दर्पसर्पगरलग्लपिताञ्च भद्राम् ।
स्मेरावलोकसुधया किल सङ्गमय्य
रङ्गस्थलान् मुरहरस्तरसा जहार ॥ ५ ॥

अपि च—

मीनस्य प्रतिबिम्बमम्भसि वरस्तम्भस्य मूलार्पिते
पश्यन् बिम्बमलक्षयन् भ्रमरिका-चक्रे भ्रमन्तं मुहुः ।
उत्क्षिप्तेन शिलीमुखेन शकलीकृत्य प्रमोदादमुं
मद्राधीश्वरनन्दिनीं पुनरसौ लेभे सुभद्राग्रजः ॥ ६ ॥

शरद्—( सानन्दम् ) दिट्ठिआ पुणो वि गोउलसोक्खं पेक्खिस्सं । [ दिष्ट्या पुनरपि गोकुलसौख्यं प्रेक्षिष्यामि । ]

नववृन्दा—सखि, मधुश्रिया सार्द्धमधुना मण्डपवृन्दाटवीं पश्यायं माधवो राधया सह साधयति ।

शरद्—कहं देइए अणुमदि लद्धा ? [ कथं देव्या अनुमतिर्लब्धा ? ]

नववृन्दा—

साधवीविरहितां मधुवीरः कुण्डिनेश्वरसुतां निशमय्य ।
नन्दयन् स्फुरदमन्दविलासैर्हासकन्दललसन्मुखमाह ॥ ७ ॥
सत्याख्यस्य विलोकाय लोकस्यात्मभुवार्थितः ।
प्रतिष्ठासुरहं देवि तत्रानुज्ञा विधीयताम् ॥ ८ ॥

---

शैब्यामिति । घनीभूतप्रणयस्य घूर्णनेन घोरा तृष्णा यस्यास्तां शैब्यां कन्दर्प एव सर्पस्तस्य गरलेन ग्लपितां ग्लानां भद्राञ्च रङ्गस्थलाज्जहार ॥ ५ ॥

मीनस्येति । वरस्तम्भस्य मूलार्पितेऽम्भसि मीनस्य मत्स्यस्य प्रतिबिम्बं छायां पश्यन् मुहुर्भ्रमरिकाचक्रे । [1]भ्रमन्तं बिम्बं मीनमसौ सुभद्राग्रजः कृष्णः उत्क्षिप्तेन शिलीमुखेन बाणेन शकलीकृत्य खण्डीकृत्य भद्राधीश्वरनन्दिनीं श्यामां लक्ष्मणाख्यां पुनर्लेभे ॥ ६ ॥

मधुश्रिया वसन्तश्रिया साधयति गच्छति । माधवीमिति । मधुवीरः कृष्णः माधवीविरहितां रुक्मिणीं निशम्य दृष्ट्वा ॥ ७ ॥

सत्याख्येति । सत्याख्यस्य लोकस्य ब्रह्मलोकस्य पक्षे सत्यभामाख्यस्य जनस्य विलोकायात्मभुवा ब्रह्मणा पक्षे कामेनार्थितः सन् । 'आत्मभूः ब्रह्मकामयोः' । प्रतिष्ठासुः प्रस्थानं कर्तुमिच्छुरहं तत्र प्रस्थाने ॥ ८ ॥

---

1. भ्रमन्ती बिम्बमीन-अ० ।

शरद्—सहि, प्पमादो प्पमादो । [ सखि, प्रमादः प्रमादः । ]

नववृन्दा—कः प्रमादः ?

शरद्—मंडणकरंडिअं समप्पिअ माहवीए देएसिणो सिस्सा सुअंठी णाम किण्णरी तत्थ पेसिदत्थि । [ मण्डनकरण्डिकां समर्प्य माधव्या देवर्षेः शिष्या सुकण्ठी नाम किन्नरी तत्र प्रेपितास्ति । ]

नववृन्दा—नात्र कापि शङ्का यदियं सत्यायामनुरागिणी ।

शरद्—तदो वीसद्धा एसा पत्थिदह्मि । [ ततो विस्रब्धैषा प्रस्थितास्मि । ] ( इति निष्क्रान्ता )

विष्कम्भकः ।

( ततः प्रविशति राधामानन्दन् कृष्णः )

कृष्णः—

निर्धूतामृतमाधुरीपरिमलः कल्याणि बिम्बाधरो
वक्त्रं पङ्कजसौरभं कुहुरितश्लाघाभिदस्ते गिरः ।
अङ्गश्चन्दनशीतलस्तनुरियं सौन्दर्यसर्वस्वभाक्
त्वामासाद्य ममेदमिन्द्रियकुलं राधे मुहुर्मोदते ॥ ९ ॥

( समन्तादवलोक्य )

लक्ष्मीः कैरवकाननेषु परितः शुद्धेषु विद्योतते
सन्मार्गद्रुहि सर्वशार्वरकुले प्रोन्मीलति क्षीणता ।
नक्षत्रेषु किलोद्भवत्यपचितिः क्षुद्रात्मसु प्रायिकी

---

देवर्षेर्नारदस्य । एषाऽहं वृन्दावनमण्डपाय प्रस्थितास्मि ।

निर्धूतामृतेति । हे कल्याणि निर्धूता तिरस्कृता अमृतस्य माधुरीपरिमलो येन तथाभूतस्तेऽधरः । कुहुरितस्य कोकिलशब्दस्य श्लाघां भिन्दन्ति यास्तादृश्यस्ते गिरः । सन्धिर्नाम निर्वहणसन्ध्यङ्गमिदम् । तथा च—'बीजोपगमनं सन्धिः' ( ना० चं० का० १११ ) । अत्रानुरागबीजोपगमात् सन्धिः ॥ ९ ॥

लक्ष्मीरिति । राजा भूपतिश्चन्द्रश्च पूर्वदिशि अभ्युदयते । 'राजा भूपतिचन्द्रयोः' । कीदृशः—शङ्करमौलिः । भूपतिपक्षे—शङ्कराणां मङ्गलकराणां श्रेष्ठः । चन्द्रपक्षे—महादेवस्य मस्तकभूषणरूपः । अत्र हेतुमाह—परितः सर्वतो भावेन शुद्धेषु जनेषु । कीदृशेषु—कैरवकाननतुल्येषु लक्ष्मीः सम्पत् विद्योतते । पक्षे—कुमुदकाननेषु लक्ष्मीः शोभा विद्योतते । सर्वशार्वरकुले सर्वघातकसमूहे । कीदृशे—सतां मार्गस्य द्रोहजनके । क्षीणता उन्मीलति । पक्षे—'शार्वरकुलेऽन्धतमसि । कीदृशे—सत्पन्थानं द्रुह्यति तस्मिन् । 'शार्वरं त्वन्धतमसि वाच्यवद् घातकेऽपि च' । क्षुद्रात्मसु क्षत्रेषु क्षत्रियेषु प्रायिकी अपचितिरपचयो नोद्भवति ।

शङ्के शङ्करमौलिरभ्युदयते राजा पुरस्ताद्दिशि ॥ १० ॥

नववृन्दा—( उपसृत्य )

हृतभुवनतमाः क्रमाद्विरागः कलय कलानिधिर्वैष्णवो विशुद्धः ।
रुचिममृतमयीं क्षिपन् विदूरे प्रविशति विष्णुपदप्रपत्तिवीथीम् ॥११॥

कृष्णः—सखे कौस्तुभ, सोऽयं विलासिनीविश्लेषणलब्धशोकः कोकनीतिकोकग्रामणीस्तद्विस्तारय मयूखलेखाम् ।

( राधिका सकौतुकं पश्यति )

कृष्णः—पश्य पश्य ।

मध्येव्योमाधिरूढद्युमणिसममणिग्रामणी-धामपाली-
व्यालीढध्वान्तपूरान् वरतनु परितः प्रेक्षमाणस्तटांस्तान् ।
पारेकालिन्दि रात्रावपि दिवसधिया क्रान्तचेता गभीरे-
रुत्कण्ठाचक्रवालै रथचरणयुवा कान्तया जाघटीति ॥ १२ ॥

( प्रविश्य करण्डिकापाणिः सुकण्ठी )

सुकण्ठी—दिठ्ठिआ एत्थ भट्टा सव्वाए सद्धं रमेदि । ता लद्धंतरिदा

---

आवेद्यिकी तु भवत्येव । पक्षे—क्षुद्रेषु नक्षत्रेषु उडुषु अपचितिरुद्भवति । भूषणं नाम नाटकभूषणमिदम् । तथा च—'गुणालङ्कारबहुलं भाषणं भूषणं मतम् ।' ( ना० चं० का० १५४ )। अत्र प्रसादमाधुर्यादिगुणानामनुप्रासश्लेषोऽनुमाना-द्यलङ्काराणाञ्च सत्तया भूषणम् ॥ १० ॥

हृतेति । कलानिधिश्चन्द्रः एव वैष्णवः । पक्षे—कलानां वैदग्धीनां निधि-श्चासौ वैष्णवश्च । स कीदृशः—विशुद्धः । क्रमाद् विशिष्टरागयुक्तः । पक्षे—रागरहितः । हृतं भुवनस्य तमोऽन्धकारो येन । पक्षे—तमः पापः । अमृतं सुधा मोक्षश्च तन्मयीं रुचिं कान्तिमिच्छाञ्च दूरे क्षिपन् । विष्णुपदप्रपत्तिवीथीमाकाश-प्राप्तिपदवीम् । पक्षे—भक्तिश्रेणीं प्रविशति पश्य पश्य ॥ ११ ॥

हे सखे कौस्तुभ सोऽयं कोकग्रामणीः चक्रवाकश्रेष्ठः । विलासिनी चक्रवाकी । विश्लेषेण लब्धः शोको येन सः । कोकवीति पुनः पुनः शब्दं करोति । किरतेश्चे-क्रीयते इति ककारस्य न चकारः । मयूखलेखां सूर्यकिरणरेखामित्यनेन यत्र चक्रवाकचक्रवाकी वर्तते तत्रैव ।

मध्येव्योमेति । हे वरतनु राधे मध्येव्योम व्योम्नो मध्येऽधिरूढः सूर्यसमो मणिग्रामणीः मणिश्रेष्ठः कौस्तुभस्तस्य धामश्रेण्या व्यालीढः ग्रसितः ध्वान्तपूरो-ऽन्धकारसमूहो यस्य तादृशान् कालिन्द्यास्तटान्तान् प्रेक्षमाणः रथाङ्गयुवा चक्रवाकः पारे-कालिन्दि कालिन्द्याः पारे कान्तया सह जाघटीति मिलति ॥ १२ ॥

करण्डिका विश्वकर्मदत्तभूषणपूर्णपेटिका सैव पाणौ यस्याः सा । अन्तरिता

भविअ पेक्खामि । [ दिष्ट्यात्र भर्त्ता सत्यया सार्द्धं रमते । तस्मादन्तरिता भूत्वा पश्यामि । ] ( इति तथा स्थिता )

नववृन्दा—

कुन्ददन्ति दृशोर्द्वन्द्वं चन्द्रकान्तमयं तव ।
उदिते हरिवक्त्रेन्दौ स्यन्दते कथमन्यथा ॥ १३ ॥

राधा—( साश्चर्यम् ) कधं एत्थ पउमाअरे चंदालोए वि पउमाइं पफुल्लाइं । [ कथमत्र पद्माकरे चन्द्रालोकेऽपि पद्मानि प्रफुल्लानि । ]

कृष्णः—

[1]शुद्धा काचस्थली पश्य पुरः पद्माकरायते ।
पद्मानि पाद्मरागाणि यत्र फुल्लान्यहर्निशम् ॥ १४ ॥

( नेपथ्ये )

वृन्दावने स्फुरत्येषा माधवी सुमनस्विनी ।

( इत्यर्धोक्ते )

कृष्णः—( ससम्भ्रमम् ) हन्त ! देवी प्रत्यासीदति । तदस्माकमस्मादपक्रमः श्रेयान् । ( इति सर्वे सर्वतो निष्क्रान्ताः )

( पुनर्नेपथ्ये )

भवति स्तबको यस्या जगद्भूषण-भूषणम् ॥ १५ ॥

---

तयोराच्छन्ना भूत्वा । कुन्ददन्तीति । हरिमुखचन्द्रे उदिते सति तव दृशोर्द्वन्द्वं स्यन्दते । यतः चन्द्रकान्तमयमित्याह—हे कुन्ददन्तीति । अर्थापत्तिर्नाम नाटकभूषणमिदम् । तथा च—

उक्तार्थानुपपत्त्याऽन्यो यस्मिन्नर्थे[2] प्रकल्पिते ।
वाक्यान्माधुर्यसंयुक्ता सार्थापत्तिरुदाहृता ॥ ( ना० चं० का० १६५ )

अत्र स्यन्दनस्यान्यथानुपपत्त्या नेत्रस्य चन्द्रकान्तमणिमयत्वकल्पनादियमर्थापत्तिः ॥ १३ ॥

शुद्धेति । पुरोऽग्रे शुद्धा काचस्थली पद्माकर इवाचरति । अतएवात्र काचस्थल्यां पाद्मरागाणि पद्मरागमणिमयानि पद्मानि ॥ १४ ॥

वृन्दावने इत्यादि । माधवी रुक्मिण्या सखीति मत्वा श्रीकृष्णस्ताभिस्सह निष्क्रान्तः । परार्द्धे माधवीलता माधवीशब्देनोक्तेत्याह—भवतीति । यस्या माधव्याः स्तबको गुच्छः जगद्भूषणः श्रीकृष्णस्तस्य भूषणं भवति ॥ १५ ॥

---

१. शुद्धकाचस्थली—च० ।

२. यस्मिन्नर्थः प्रकल्पितः इति नाटक-चन्द्रिकास्थपाठः ।

सुकण्ठी—हद्धी ! हद्धी ! महुमंगलहत्थगदेण तिणा कामरूवुप्पण्णेण सुअवइणा विग्घो किदो । ता एत्थ कंदरे पइट्ठं सच्चभामं अणुसरिस्सं। [ हा धिक् ! हा धिक् ! मधुमङ्गलहस्तगतेन तेन कामरूपोत्पन्नेन शुकपतिना विघ्नः कृतः । तदत्र कन्दरे प्रविष्टां सत्यभामामनुसरिष्यामि । ] ( इति तथा करोति )

( प्रविश्य राधा )

राधा—हंत ! कहं दिट्ठह्मि । जं का वि प्पविसदि । [ हंत ! कथं दृष्टास्मि । यत् काऽपि प्रविशति । ]

सुकंठी—सामिणि, वीसद्धा होहि । एसा किंकरी दे सुअंठी । [ स्वामिनि, विस्रब्धा भव । एषा किङ्करी ते सुकण्ठी । ]

राधा—( सहर्षम् ) सुअंठि, जाणामि । [ सुकण्ठि, जानामि । ]

सुकण्ठी—सामिणि, कीस ओल्लंसुआसि ? [ स्वामिनि, कस्मादार्द्रांशुकासि ? ]

राधा—त्थलब्भमेण जले खलिदह्मि । [ स्थलभ्रमेण जले स्खलितास्मि । ]

सुकण्ठी—माहवीए पेसिदं एदं पसाहणं गेण्ह । [ माधव्या प्रेषितमिदं प्रसाधनं गृहाण । ]

राधा—पेक्ख एत्थ पत्थरे किं पि [1]आलेक्खं लक्खीअदि; ता इमस्स दंसणे जुत्तिं कुण । [ पश्यात्र प्रस्तरे किमप्यालेख्यं लक्ष्यते, तस्मादस्य दर्शने युक्तिं कुरु । ]

सुकण्ठी—[2]बाहिरे गदुअ आलोअस्स उवाअं करिस्सं । [ बहिर्गत्वाऽऽलोकस्योपायं करिष्यामि । ]

राधा—अहं पि ओल्लसुअं परिहरेमि । [ अहमप्यार्द्रांशुकं परिहरामि । ] ( इति करण्डकमादाय निष्क्रान्ता ) ( शुकं निष्क्रम्य )

शुकः—कहं महुमंगलेण समं भट्टा पुरदो वट्टेदि ! [ कथं मधुमङ्गलेन समं भर्त्ता पुरतो वर्तते ! ]

( ततः प्रविशति कृष्णः )

कृष्णः—सखे, क्वानर्थकारकस्तव हस्तवर्ती सः कीरः ?

मधुमङ्गलः—दिट्ठिआ उड्डिअ पुरो दाडिमे पडिदो । [ दिष्ट्या उड्डीय पुरो दाडिमे पतितः । ]

कृष्णः—तदेहि । प्राणवल्लभामेव मृगयावहे । ( इति मारुतमुपलभ्य )

---

1. आलेक्खो–अ० । 2. बहिरे–अ० ।

भजसि नहि रजस्त्वं धीरदाक्षिण्यचर्या-
मनुसरसि विधत्से माधवस्यानुवृत्तिम् ।
इति मलयसमीर त्वां सखे प्रार्थयेऽहं
कथय कुवलयाक्षी कुत्र मे राधिकाऽस्ति ॥ १६ ॥

मधुमङ्गलः—भो णिहुणं भणेहि । [ भोः निभृतं भण । ]

कृष्णः—( परिक्रम्य )

लब्धा कुरङ्गि नवजङ्गमहेमवल्ली
रम्या स्फुटं विपिनसीमनि राधिकात्र ।
अस्यास्त्वया सखि गुरोर्यदियं गृहीता
माधुर्यवल्गितविलोकनकेलिदीक्षा ॥ १७ ॥

( पुरो दाडिमीमुपलभ्य )

कान्तिं पीतां शुक स्फीतां बिभ्रती वीक्षिता वने ।
मयाद्य मृग्यमाणा सा त्वया मृगविलोचना ॥ १८ ॥

---

भजसीति । हे मलयसमीर धीर । 'धीरः पण्डितमन्दयोः' । धीरत्वादेव रजसामभाजनम् । दाक्षिण्यचर्चां दक्षिणदेशादागमनचर्चामानुकूल्यचेष्टाञ्चानुसरसि । माधवस्य वसन्तस्य ममाप्यनुवृत्तिं सेवां विधत्से । अतोऽहं त्वां प्रार्थये ॥ १६ ॥

लब्धेति । हे कुरङ्गि, विपिनसीमनि राधिका लब्धा । अस्या राधाया गुरोर्माधुर्यादियुक्ता दीक्षा गृहीता । प्राप्तिर्नाम नाटकभूषणमिदम् । तथा च— 'एकदेशविलोकेन प्राप्तिः शेषाभियोजनम् ।' ( ना० चं० का० १५७ ) । अत्र लोचन-सौन्दर्यदीक्षालाभस्यैकदेशस्य त्वयि विलोकनेन स त्वया लब्ध इति विशेषार्थस्य योजनात् प्राप्तिः ॥ १७ ॥

कान्तिमित्यादि । कृष्णोक्तिरूपप्रश्नपक्षे—हे शुक, मया मृग्यमाणा सा त्वयाद्य वने वीक्षिता । कीदृशी—स्फीतां पीतां कान्तिं बिभ्रती । शुकोक्तिरूपोत्तरपक्षे शुको दाडिमीमुपलभ्याह—हे पीतांशुक कृष्ण स्फीतां कान्तिं बिभ्रती त्वया मृग्यमाणा सा मृगविलोचनाद्य मया वने वीक्षिता । पृच्छा नाम नाटकभूषणमिदम् । तथा च—'प्रश्न एवोत्तरं यत्र सा पृच्छा परिकीर्तिता' ( ना० चं० का०।१८२ ) इति । अत्र हे शुक पीतां कान्तिं बिभ्रती मृगविलोचना मया मृग्यमाणा सा त्वया दृष्टेति प्रश्ने हे पीतांशुक त्वया मृग्यमाणा सा मया दृष्टेत्युत्तरेण पृच्छा ॥ १८ ॥

मधुमङ्गलः—वअस्स, तुम्ह पण्हं अणुवदंतेण च्चेअ उत्तरं दिण्णं कीलेण। [ वयस्य, तव प्रश्नमनुवदतैवोत्तरं दत्तं कीरेण। ]

सुकण्ठी—( उपसृत्य ) जेदु जेदु भट्टा। [ जयतु जयतु भर्त्ता ]

मधुमङ्गलः—( सभयम् ) भोदि, कित्ति आअदासि ? [ भवति, किमिति आगतासि ? ]

सुकण्ठी—इमस्स पण्होत्तरस्स सरिच्छं अण्णंवि महुरं सुणिदुं। [ अस्य प्रश्नोत्तरस्य सदृशमन्यदपि मधुरं श्रोतुम्। ]

मधुमङ्गलः—भोदि, पण्णोत्तरं वि तुए सुणिदं ? [ भवति, प्रश्नोत्तरमपि त्वया श्रुतम् ? ]

सुकण्ठी—ण केअलं इदं ज्जेव्व। [ न केवलमिदमेव ]

मधुमङ्गलः—अअरं किं। [ अपरं किम् ? ]

सुकण्ठी—जं किं पि दिठ्ठं ता गदुअ देइए णिवेदिस्सं। [ यत् किमपि दृष्टं तद्गत्वा देव्यै निवेदयिष्यामि। ] ( इति परिक्रामति )

कृष्णः—( ससम्भ्रमम् ) भद्रे सुकण्ठि, मा खलु देवीमनःकालुष्याय समुद्यथाः। वृणीष्व मत्तः सङ्गीतविद्यासाम्राज्यम्।

सुकण्ठी—देइए प्पसादेण रुद्दाणीगाअणीहिं पि वंदिदचलणह्मि। ता किं इमिणा। [ देव्याः प्रसादेन रुद्राणीगायिकाभिरपि वन्दितचरणास्मि। तत किमनेन। ]

कृष्णः—तर्हि प्रार्थयस्व किं तवाभीष्टम् ?

सुकण्ठी—देअ, एक्कं पत्थइस्सं। [ देव, एकं प्रार्थयिष्ये। ]

कृष्णः—काममावेद्यताम्।

सुकण्ठी—एत्थ कंदरे किं पि आलेक्खं विलोइदुं मह आराहणिज्जा एक्का विज्जाहरी उक्कंठेदि। ता कोत्थुहालोएण एणअं पआसिअ पसादीकरेदु भट्टा। [ अत्र कन्दरे किमप्यालेख्यं विलोकयितुं ममाराधनीयैका विद्याधरी उत्कण्ठते। तत् कौतुकालोकेनैनां प्रसाद्य प्रसादीकरोतु भर्त्ता। ]

कृष्णः ( स्मित्वा। परिक्रामन् ) सखे रत्नमण्डलीमूर्द्धाभिषिक्त, साधु साधु ! यदनुक्तोऽपि मे मनोरथं करोषि।

---

मधुमङ्गलः सभयमित्यादि। अत्र परिभाषणं नाम निर्वहणसन्ध्यङ्गमिदम्। तथा च—'परिभाषा मिथो जल्पः परिवादोऽथवा भवेत्।' ( ना० चं० का० ११३ )। अत्र मिथोजल्पस्योदाहरणं—'भो किंत्ति' इत्यारभ्य—णिवेदिस्सं इत्यन्तं मधुमङ्गलसुकण्ठयोः मिथो जल्पः।

मधुमङ्गलः—हंत ! दरीमज्झे मज्झंदिणादो वि जादो बलिठ्ठो उज्जोदो । [ हन्त ! दरीमध्ये मध्यन्दिनतोऽपि जातो बलिष्ठ उद्योतः ]

( ततः प्रविशति राधा )

राधा—( स्वाङ्गमवेक्ष्य ) कहं माहवीए देइप्पसाहणं पेसिदं । [ कथं माधव्या देवीप्रसाधनं प्रेषितम् । ] ( परिक्रम्य । कृष्णं पश्यन्ती )

अंजलिमेत्तं सलिलं सभरीए अहिलसंदीए ।
उवरि सअं णअजलदो धारावरिसी समुल्लसइ ।। १६ ।।
[ अञ्जलिमात्रं सलिलं शफर्या अभिलषन्त्याः ।
उपरि स्वयं नवजलदो धारावर्षी समुल्लसति ।। ]

मधुमङ्गलः—( अपवार्य ) भो वअस्स, दुठ्ठदासीए पुत्तीए वणेअरीए महासंगडे पडिदह्मि । [ भो वयस्य, दुष्टदास्याः पुत्रीए वनचर्या महासङ्कटे पातितोऽस्मि । ]

कृष्णः—सखे, किन्नाम सङ्कटम् ?

मधुमङ्गलः—( सरोषम् ) मं जेव्व पुच्छसि । वामं पेक्ख । [ मामेव पृच्छसि । वामे पश्य ]

कृष्णः—( समीक्ष्य । सावेगम् ) कथमत्र देवी !

राधा—( स्वगतम् ) हद्धी ! हद्धी ! कंदरे वि देइ पइठ्ठा ।
[ हा धिक् ! हा धिक् ! कन्दरेऽपि देवी प्रविष्टा । ] (इत्यन्तरिता भवति ।)

कृष्णः—( स्वगतम् ) नूनं मन्युसंरम्भस्य गभीरतया प्रच्छन्नेयं बभूव ।

मधुमङ्गलः—( नीचैः ) हदासे किण्णरि, पिअवअस्से वि तुज्झ जुत्ता एरिसी णिइदी । [ हताशे किन्नरि, प्रियवयस्येऽपि तव युक्तेदृशी निकृतिः । ]

सुकण्ठी—( स्वगतम् ) गहिददेइणेवच्छं सच्चभामं च्चेअ देइ तक्किय भाएदि एसो । ता गदुअ विण्णएमि । [ गृहीतदेवीनेपथ्यं सत्यभामामेव देवीं तर्क्य बिभेति एषः । तद्गत्वा वियापयामि ] ( इत्युपसृत्य । जनान्तिकम् ) सामिणि, एव्वं एदं । [ स्वामिनि, एवमेतत् । ]

---

अनुक्तोऽपि सुकण्ठ्या सह संवादरूपं मनोरथम् । दरीमध्ये कन्दरामध्ये । उद्योतः प्रकाशः । अञ्जलिमेत्तमिति । ग्रथनं नाम निर्वहणसन्ध्यङ्गमिदम् । तथा च—'ग्रथनं सदुपक्षेपः ।' ( ना० चं० का० ११२ ) अत्र पुनरपि सहसा कृष्णदर्शनरूपस्य सदर्थोपक्षेपाद् ग्रथनम् ।

तयोर्वाक्यं श्रुत्वा राधा स्वगतमाह—हा धिगिति । क्रोधावेशस्य गम्भीरतया इयं देवी ।

निकृतिः शाठ्यम् । 'शाठ्यं कुसृतिर्निकृतिः' । दक्षिणा अनुग्रा इयं देवी

राधा—( सस्मितम् ) परिहसेहि णं। [ परिहसैनम्। ]

सुकण्ठी—( परिक्रम्य ) अज्ज महुमंगल, रुट्ठा क्खु देइ भणादि।
[ आर्य मधुमङ्गल, रुष्टा खलु देवी भणति। ]

मधुमङ्गलः—किं तं ? [ किन्तत् ? ]

सुकण्ठी—अंदेउरे गदं णं बह्मबंधुअं बंधिअ रक्खिस्सं।
[ अन्तःपुरे गतमेनं ब्रह्मबन्धुं बद्ध्वा रक्षिष्यामि। ]

मधुमङ्गलः—( सभयम् ) भो दाणिं वि खंभो विअ गभीरो सि। [ भोः इदानीमपि स्तम्भ इव गम्भीरोऽसि। ]

कृष्णः—सखे, विस्मयेन स्तम्भितोऽस्मि। यदियं दक्षिणा नैसर्गिकीमपि धीरतामवधीरितवती ( विमृश्य ) अथवा—

धीरः प्रकृत्यापि जनः कदाचिद् धत्ते [1]विकारं समयानुरोधात्।
क्षान्तिं हि मुक्त्वा बलवच्चलन्ती सर्वंसहा भूरपि भूरि दृष्टा ॥ २० ॥

सुकण्ठी—( स्वगतम् ) अलं इमिणा भट्टारअपुरदो धिठ्ठदासाहसेण। ता जहत्थं कहेमि। [ अलमनेन भट्टारकपुरतो धृष्टतासाहसेन। तद्यथार्थं कथयामि। ] ( प्रकाशम् ) अज्ज, सच्चभामा एसा। ण क्खु देइ। [ आर्य, सत्यभामैषा। न खलु देवी। ]

मधुमङ्गलः—भो सुदो तुए दुम्मुहीए सोलुंठो पलाओ।
[ भोः श्रुतस्त्वया दुर्मुख्याः सोल्लुण्ठः प्रलापः। ]

कृष्णः—सुकण्ठि, वैदर्भीप्रियत्वाद् गर्वेण तरलासि। किन्ते गिरां दारिद्र्यम्।

मधुमङ्गलः—( संस्कृतेन )
असि विषकण्ठी कठिने किमिति सुकण्ठीति भण्यसे चेटि।

---

नैसर्गिकीं स्वभावसिद्धां धीरतामवधीरितवती त्यक्तवतीति हेतोः विस्मयेन स्तम्भितोऽस्मि।

धीर इति। धीरस्य जनस्यापि समयकृतविकारे दृष्टान्तमाह—सर्वंसहापि भूः पृथ्वी चलन्ती चलायमाना भूरि दृष्टा [ अत्र दृष्टान्तो नाम नाटकभूषणमिदम्। तथा च—'स्वपक्षे दर्शनं हेतोर्दृष्टान्तः साध्यसिद्धये' ( ना० चं० का० १६० ) इति ] ॥ २० ॥

आर्य मधुमङ्गलेत्यादि। मधुमङ्गलवाक्येन तां देवीं निश्चित्याह—रुक्मिण्याः प्रियत्वाद् गर्वेणाभिमानेन चञ्चलासि।

असीति। हे कठिने विषकण्ठी भूत्वा सुकण्ठी किमिति भण्यसे। चेटि

---

१. विकारो-अ०।

अथवा काममशस्ता भद्रेत्यभिधीयते [1]विष्टिः ॥ २१ ॥

कृष्णः—( परिक्रम्य । सानुनयम् ) देवि, प्रसीद ।

राधा—( सस्मितम् ) णाहं देइ । पेक्ख माणुसी ह्मि । [ नाहं देवी । पश्य मानुष्यस्मि । ]

कृष्णः—( सहर्षम् ) सुकण्ठिके, बाढमस्मिन्नर्थे दुष्करस्ते मया निष्क्रयः ।

मधुमङ्गलः— ही ! ही ! हंजे तुरंगमुहि, एसा वंकिमविज्जा वि किं क्खु देइस्सिणो पढिदा ? [ ही ही चेटि तुरङ्गमुखि, एषा वक्रिमविद्याऽपि किं खलु देवर्षेः पठिता ? ]

कृष्णः—प्रिये, सन्निधाय चित्रं दृश्यताम् ।

राधा—णूणं णअवंदागुरुणो कलाकोसलं एदं । [ नूनं नववृन्दागुरोः कलाकौशलमेतत् । ]

( प्रविश्य नववृन्दा )

नववृन्दा—सखि, समीक्ष्यतां विचित्रमिदं चित्रं यत्रानुक्रमकी माधुरी साधुरीतिर्लीलामण्डली ।

---

हे दासि अशस्ता अप्रशस्ता । 'तृतीया दशमी शेषे पञ्चम्यर्द्धस्तु पूर्वतः । कृष्णे विष्टिः शितेः तद्वत् परतिथिष्वपि ।' इत्यादिनोक्ताया विष्टेर्यथा तृतीयादितिथीनां शेषभागपूर्वभागस्य भद्रा संज्ञा विष्टिशब्दस्यामाङ्गल्यात् सर्वैर्भद्रैवोच्यते तथैव त्वमपि सुकण्ठीत्याख्यावत्यसि । परिभाषणं नाम निर्वहणसन्ध्यङ्गमिदम् । तथा च—'परिभाषा मिथो जल्पः परिवादोऽथवा भवेत् ।' ( ना० चं० का० ११३ ) । अत्र सुकण्ठ्या दोषदर्शनात् परीवादः ।

तदा राधां ज्ञात्वाऽह—सुकण्ठिकेत्यादिना । ते निष्क्रयः प्रत्युपकारः मया दुष्करः । प्रसादो नाम निर्वहणसन्ध्यङ्गमिदम् । तथा च—'शुश्रूषाद्युपसम्पन्ना स्यात् प्रसादः प्रसन्नता' ( ना० चं० का० ११४ ) । अत्र कृष्णस्य प्रसादः स्फुट एव । हञ्जे चेटि । तुरङ्गमुखि अश्वमुखि । नववृन्दावनगुरोर्विश्वकर्मणः ।

व्रजसम्बन्धिलीलानां पटादिषु चित्रदर्शनेन श्रीकृष्णस्य तत् परिकरस्य च चमत्कारकारित्वमानन्ददातृत्वं प्रेमदत्वं श्रीनन्दादिसर्वव्रजवासिनामाशुमिलनकर्तृत्वं यथा भूत्तथा आसक्तिपूर्वकचित्रपटस्य व्रजलीलादर्शनेनान्येषामपि भवेदिति दिग्दर्शनमपि ज्ञेयम् । यत्र चित्रेऽनुक्रमिकी अनुक्रमेण भवा माधुरी मथुरासम्बन्धिनी साधुरीतिर्यस्यां सा लीलामण्डली वर्तते तच्चित्रं समीक्ष्यताम् ।

---

१. वृष्टिः–च० ।

मधुमङ्गलः—एसो णंदमहूसवो पढ़मो । [ एष नन्दमहोत्सवः प्रथमः । ]

नववृन्दा—

क्षेपेण नवनीतानां चित्रं [1]बाल्यस्य चेक्षया ।
ऊहुः स्नेहभरं सान्द्रं बहिरन्तश्च वल्लवाः ॥ २२ ॥

( पुनः प्रदेशिन्या प्रदर्श्य )

कः पूतनागतिं गन्तुं पूतनापि क्षमो भवेत् ।
कण्ठे बभूव हरिणा या हरिन्मणिहारिणी ॥ २३ ॥

कृष्णः—

मत्पदाङ्गुलिदलेन खण्डिते
भाण्डभाजि शकटे कटीजुषि ।
चत्वरेऽपि तरमार्तिकातरं
मातरञ्च नितरां स्मराम्यहम् ॥ २४ ॥

नववृन्दा—तृणावर्तमरुन्नर्तनमिदम् ।

कृष्णः—

समचेष्टत निष्ठुरं व्रजे स तथा दुष्टसमीरणासुरः ।
तमसी वत येन निर्मिते पिदधाते सुहृदां मनोदृशौ ॥ २५ ॥

मधुमङ्गलः—एसा सअं च्चेअ गोउलेसरी मथिदुं आरद्धा । [ एषा स्वयमेव गोकुलेश्वरी मथितुमारब्धा । ]

---

क्षेपेणेति । वल्लवाः गोपाः नवनीतानां क्षेपेण बहिः सान्द्रं निविडं स्नेहभरं चित्रं बाल्यस्येक्षया चान्तः स्नेहभरमूहुः । चित्रं नाम सन्ध्यन्तरमिदम् । तथा च—'चित्रन्त्वाकाराणां विलोकनम् ।' ( ना० चं० का० १४७ ) । अत्र माथुरचरित्रं चित्रलिखितम् ॥ २२ ॥

प्रदेशिन्या तर्जिन्या । कः पूतनेति । कः पूतनापि पूतः पवित्रश्चासौ ना पुमानपि पूतनायाः गतिं प्राप्तुं क्षमो भवेत् । या पूतना हरिणा कृष्णेन हरिन्मणिहारिणी बभूव । यस्याः कण्ठे कृष्णो हाररूपोऽभूदित्यर्थः ॥ २३ ॥

शकटभञ्जनं पश्य मत्पदेत्यादि ॥ २४ ॥

समचेष्टतेति । स तृणावर्तासुरस्तथा निष्ठुरमचेष्टत येन चेष्टितेन तमसी शोकान्धकारौ निर्मिते ततस्ते तमसी शोकान्धकाररूपे सुहृदां मनोदृशौ पिदधाते ॥ २५ ॥

---

[1] चित्रवालस्य—अ०, चित्र बाल्यस्य—ब० ।

राधा—अंब गोउलेसरी वंदीअसि। [अम्ब गोकुलेश्वरि, वन्द्यसे।]
(इत्यसम्भ्रममभिनयति)

कृष्णः—(सकरुणम्)

कदर्थनादप्युरुबाल्यचापलै-
'रुत्सर्पता प्रेमभरेण विक्लवाम्।
विलोकमानस्य ममाद्य मातरं
²हविर्विलायं हृदयं विलीयते ॥ २६ ॥

नववृन्दा—गुरुणा मे पद्यं लिखितम्। तथा हि—

गुणैस्त्रिभिरनर्गलैः किल जगत्त्रयीवर्तिनं
चतुर्मुखपुरःसरानपि बबन्ध यः प्राणिनः।
व्रजेन्द्रमहिषि ब्रुवे किमिह ते प्रभावावली-
मबन्धि तनुभिर्गुणैः स बलवान् मुकुन्दस्त्वया ॥ २७ ॥

मधुमङ्गलः—एदं अज्जुणजुअभंजणं। [एतदर्जुनयुगलभञ्जनम्।]

नववृन्दा—कथं गुह्यकाभ्यामुलूखलबन्धमविमुच्यैव प्रस्थितम्।

कृष्णः—(सास्रम्)

वात्सल्यमण्डनमयेन ममोरुदाम्ना[3]
यः कोऽपि बन्धगरिमा निरमायि मात्रा।

---

चित्रगतां यशोदां साक्षान्मत्वाऽह—अम्बेति।

कदर्थनादिति। उत्सर्पता प्रेमातिशयेन उरुबाल्यचापलैः कदर्थनादपि विक्लवां व्याकुलां मातरं विलोकमानस्य मम हृदयं हविर्विलायं हविरिव विलीयते इत्यर्थः। तुल्यतर्को नाम नाटकभूषणमिदम्। तथा च—

'रूपकैरुपमाभिर्वा तुल्यार्थाभिः प्रयोजितः।
अप्रत्यक्षार्थसंस्पर्शस्तुल्यतर्क इतीरितः॥' (ना० चं० का० १६८)

अत्र हविर्विलायमिति लुप्तोपमयाऽप्रत्यक्षस्य [4]चित्रस्यैव कथनं तुल्यतर्कः ॥ २६ ॥

गुणैरिति। यः कृष्णस्त्रिभिस्सत्त्वरजस्तमोभिर्गुणै-र्ब्रह्मपुरःसरान् प्राणिनो बबन्ध। स कृष्णस्त्वया तनुभिर्गुणैः सूक्ष्मरज्जुभिः श्लेषेण दुर्ज्ञेयप्रेमरज्जुभिः अबन्धि। हे व्रजेन्द्रमहिषि ईदृश्यास्ते प्रभावावलीं किं ब्रुवे ॥ २७ ॥

उलूखलबन्धनमविमुच्यैव कथं गुह्यकाभ्यां प्रस्थितमत्र कारणं वदेति भावः।

वात्सल्येति। मात्रा वात्सल्यसमूहमयेन उरुदाम्ना मम सम्बन्धे कोऽप्य-

---

१. रुत्सर्पतो—इति ना० चं०।

२. हविर्विलापं—अ०; हविर्विलोयमिति ना० चं०।

३. ममोरुदाम्नः—अ०। ४. चित्तद्रवस्य—ना० च० पाठः।

तन्मुक्तये परमबन्धविमोक्षणोऽपि
नाहं क्षमे सखि परस्य तु का कथाऽत्र ॥ २८ ॥

नववृन्दा—

त्वं वत्सामृतदायी युक्तं वत्सामृतत्वमाचरसि ।
विदधदमित्राबकतां मित्राबकतां कथं तनुषे ॥ २९ ॥

कृष्णः—( राधामवेक्ष्य )

सखिभिरलघुनातिवाहितेभ्य-
स्तटभुवि तर्णकचारणोत्सवेन ।
गुरुमिह कुरुते ममाद्य तेभ्यः
शशिमुखि चित्तमहो स्पृहा महोभ्यः ॥ ३० ॥

नववृन्दा—

तासां पादावलिमविरतं बल्लवीनां गवाञ्च
न्यञ्चत्काया वयमिह नमस्कुर्महे शर्म हेतुम् ।
यासामन्तःप्रणयमधुरक्षीरपानाय लुब्धो
दुग्धाम्भोधेः पतिरपि मुदा पुत्रभावं बभार ॥ ३१ ॥

कृष्णः—

अघस्य पवनाशिनः पशुपडिम्भकेलिस्थली-
पुरो गिरिदरीनिभा तनुरियं दरीदृश्यते ।

---

निर्वचनीयो बन्धगरिमा निरमायि तद्बन्धनमुक्तये नाहं क्षमे । अत्र बन्धनमोचने परस्यान्यस्य का कथा ॥ २८ ॥

त्वमिति । त्वं वत्सो वत्सासुरस्तस्य सम्बन्धेऽमृतं मोक्षस्तद्दायी । अतो युक्तमेव वत्सामृतत्वं वत्समृतिशून्यत्वमाचरति । 'अमृतं मुक्तिसुधयोः' । अमित्राणां शत्रूणां बकासुरस्य च वधादबकतां बकराहित्यं विदधद् मित्राणामबकतां रक्षकतां कथं तनुषे । अत्र विरोधाभासालङ्कारेण शत्रुमित्रयोर्यथायोग्यफलदातृत्वमुक्तम् ॥ २९ ॥

सखिभिरिति । मम चित्तं कर्तृ सखिभिः सहालघुना तर्णकः क्षुद्रवत्सस्तस्य चारणोत्सवेनातिवाहितेभ्यगमितेभ्यः स्तेभ्योऽहोभ्यः गुरुं स्पृहां कुरुते । 'सद्योजातस्तु तर्णक' इत्यमरः ॥ ३० ॥

तासामिति । ब्रह्मकृतवत्साहरणानन्तरलीलायां दुग्धाम्भोधेः पतिरपि यासां बल्लवीनां गवाञ्चान्तःप्रणयेन मधुरं यत्क्षीरं स्वं तत्पानाय लुब्धः सन् पुत्रभावं बभार । तासां पादावलिं वयं नमस्कुर्महे ॥ ३१ ॥

अघस्येति । अघस्य पवनाशिनः सर्पस्येयं तनुः दरीदृश्यते । कीदृशी पशुपालबालस्य केलिस्थली पर्वतकन्दरतुल्या च या तनुः मुखादिकुहरेण विरचित-

मुखादिकुहरेण या विरचितप्रवेशैः सदा
मृतापि पवनैरभूद्वनरुहाक्षि कुक्षिम्भरिः ॥ ३२ ॥

नववृन्दा—पश्य पश्य ।

सखि वेदचतुष्टयस्य सारैश्चतुरोऽयं चतुराननीनिसृष्टैः ।
जनकं जनचक्षुषामभीष्टं परमेष्ठी प्रमदादभिष्टवीति ॥ ३३ ॥

मधुमङ्गलः—एदं सुहंधि तालवणं पेक्खिअ जीविदह्मि । [ एतत्सुगन्धि तालवनं प्रेक्ष्य जीवितोऽस्मि । ]

नववृन्दा—( वाममवेक्ष्य )

त्वमद्भुतोऽसि धेनूनां पातापि हतधेनुकः ।
तालाङ्कोऽपि किलोत्तुङ्गतालभङ्गाय रङ्गवान् ॥ ३४ ॥

कृष्णः—न्यग्रोधरोधसि सेयमार्यस्य विक्रमाडम्बरसम्भाविनी प्रलम्बपशोरालम्भवेदी[1] ।

नववृन्दा—( स्वगतम् ) शङ्के राधिकाखेदमवधार्य देवेनावधीरिता कालियदमनलीला ।

कृष्णः—

मुञ्जाटवी स्फुरति मञ्जुलकण्ठि सेयं
यत्र क्षणादनुसरन्तमिषीकतूलैः ।
दावं विलोक्य कृपयाम्बुजमालधारि
आभीरवीथिरभितोऽभवदावृतिर्मे ॥ ३५ ॥

---

प्रवेशैः पवनैर्मृतापि कुक्षिम्भरिरभूत् असुरोऽभूदन्यस्य यत्तद्भवतु । स्वोदरं यो भरति स कुक्षिम्भरः । एतद्देवासुरप्रभावः ॥ ३२ ॥

सखीति । चतुरः परमेष्ठी ब्रह्मा जनकं श्रीकृष्णमभिष्टवीति स्तौति । कैः—चतुर्णामाननानां समाहारः चतुराननी ततो निसृष्टैर्निर्गतैर्वेदचतुष्टयस्य सारः ॥ ३३ ॥

अद्भुतत्वमाह श्लेषेण—त्वमिति । धेनूनां गवां पाता रक्षितापीत्यत्र विरोधाभासालङ्कारेण श्रीबलदेवस्य कार्यं चिह्नञ्चोक्तम् ॥ ३४ ॥

न्यग्रोधो वटवृक्षस्तस्य रोधसि । आर्यस्य श्रीरामस्य प्रलम्बासुररूपपशोः संबन्धे विक्रमाडम्बरस्य सम्भावना यत्र साऽलम्भवेदी । कालियदमनलीलेति । श्रवणमात्रादपि राधिकायाः खेदो भविष्यतीति ज्ञात्वा सा लीलावधीरिता नावधानविषयीकृता । देवेन विश्वकर्मणा ।

मुञ्जाटवीति । इषीकतूलैरनुसरन्तं दावं वनाग्निं विलोक्याभीरवीथिर्गोपसमूहः अम्बुजमालाधारि मेऽभितः आवृत्तिरभवत् ॥ ३५ ॥

---

1. रालम्भनवेदी—अ० ।

नववृन्दा—पुरस्तादिदं वासोहरणतीर्थम् ।

कृष्णः—प्रिये, विशाखायाः पृष्ठतो मूर्ध्नि कृताञ्जलिरवस्थिता केयं न परिचीयते ।

राधा—( सलज्जमात्मगतम् ) मं लिहिदं जाणन्तो च्चेअ परिहसेदि [ मां लिखितां जानन्नेव परिहसति ] ( प्रकाशम् ) एसा पडमा [ एषा पद्मा ]

कृष्णः—पद्माक्षि, पद्मायाः सव्यतः ?

राधा—( सासूयम् ) अलं अत्तणो गुणं वित्थरिअ । [ अलमात्मनो गुणं विस्तार्य । ]

कृष्णः—

शिरसि कुरुत पाणिद्वन्द्वमादत्त मुग्धाः
सिचयमिति मदुक्त्या भुग्नदृष्टि स्थितायाः ।
स्फुरदधरमुदञ्चन्मन्दहास्यं तवास्यं
सरुदितमनुबद्धभ्रूविभेदं स्मरामि ॥ ३६ ॥

राधा—का एत्थं मत्थअप्पिदहण्डिआओ चिठ्ठन्ति ? [ का अत्र मस्तकार्पितभाण्डास्तिष्ठन्ति ? ]

नववृन्दा—यज्ञपत्न्यो भविष्यन्ति ।

कृष्णः—

मन्दस्मितं प्रकृतिसिद्धमपि व्युदस्तं
सङ्गोपितश्च सहजोऽपि दृशोस्तरङ्गः ।
धूमायिते द्विजवधूगणरागवह्ना-
वह्नाय काऽपि गतिरङ्कुरिता मयाऽसीत् ॥ ३७ ॥

---

शिरसीति । हे मुग्धाः शिरसि पाणिद्वन्द्वं कुरुत । सिचयं वस्त्रमादत्त गृहाण इति मदुक्त्या हेतुभूतया भुग्नदृष्टं स्थितिर्यस्यास्तथाभूतायास्तव मुखं स्मरामि । भुग्नदृष्टि इत्यस्य विशेषणं वा । अत्र पक्षे मदुक्त्या स्थितायास्तवेति योजना । कीदृशं मुखम्—स्फुरदधरमित्यादि । किलकिञ्चितमिदम् । भुग्नदृष्टि इत्यनेन गर्वः, स्फुरदधरमित्यभिलापः, अनुविद्धभ्रूविभेदमित्यसूयाभयक्रोधाः । अन्यत् स्फुटम् । किलकिञ्चितलक्षणं यथा—

गर्वाभिलाषरुदितस्मितासूयाभयक्रुधाम् ।
सङ्करीकरणं हर्षादुच्यते किलकिञ्चितम् ॥ इति ( ...... ) ॥ ३६ ॥

मन्देति । द्विजवधूगणस्य रागवह्नौ मदनार्तौ अह्नाय शीघ्रं धूमायिते सति मम कापि गतिरङ्कुरिताऽभूत् । गतिराह—मन्दस्मितं व्युदस्तमन्तर्हितं दृशोस्तरङ्गश्चापलम् । अनेन व्रजभूमिजातगोपकिशोरीभिन्नासु स्त्रीषु श्रीकृष्णस्य रतेरभाव-

मधुमङ्गलः—( सतृष्णं संस्कृतेन )

इदं स्मरति किं भवान् प्रियवयस्य लप्स्यामहे
महीसुरवधूकुलाद्विविधमन्नमाह्लादनम् ।
वयं किमपि कुण्डलीकृतशिखण्डकाण्डोपमं
क्रमेण किल कुण्डलीपटलमत्र भोद्यामहे ॥ ३८ ॥

नववृन्दा—पश्य गोवर्द्धनोद्धरणमिदम् ।

राधा—( संस्कृतेन )

शिखरिभरवितर्कतः प्रतप्तं समहमहर्निशमीप्सया प्रियस्य ।
हृदयमिह समस्तवल्लवीनां युगपदपूर्वविधं द्विधा बभूव ॥ ३९ ॥

नववृन्दा—गिरिमेखलायां लिखितमिदं पद्यम्—

दरोदञ्चद्गोपीस्तनपरिसरप्रेक्षणभरात्
करोत्कम्पादीषच्चलति सति गोवर्द्धनगिरौ ।
भयार्त्तैरारब्धस्तुतिरखिलगोपैः स्मितमुखं
पुरो दृष्ट्वा रामं जयति नमितास्यो मधुरिपुः ॥ ४० ॥

कृष्णः—( शैलेन्द्रकन्दरमवेक्ष्य । सस्मितम् )

---

एव । पुरसुन्दरीषु तासामैक्यात् । कुब्जायां भूशक्तित्वात् क्वापि साधकेषु श्रूयते सा रतिः तु तासामनुगतभावभावितान्तःकरणेषु ज्ञेयम् ॥ ३७ ॥

इदमिति । महीसुरो ब्राह्मणस्तस्य वधूकुलाद् वयं विविधमन्नं लप्स्यामहे । स्मृत्युक्तौ वा आकाङ्क्षायामतीतकालेऽपि लृट् । कुण्डलीकृतश्चासौ शिखण्डो मयूरपुच्छस्तत्काण्डस्तन्मूलवर्तिशुक्लवर्णगोलाकारश्च स एवोपमा यस्य तं क्रमेण कुण्डलीकृतं 'जिलेबी'ति यस्य प्रसिद्धिस्तमत्र भोद्यामहे । इदं भवान् स्मरति ॥ ३८ ॥

शिखरीति । इह गोवर्द्धनोद्धरणे समस्तवल्लवीनां हृदयमेव दैवादपूर्वविधं द्विधा बभूव । द्वैधमेवाह—शिखरी गोवर्द्धनस्तस्य भरो भारस्तस्य वितर्कनात् प्रतप्तं प्रियस्याहर्निशमीप्सया समहः सोत्सवश्च । 'मह उद्धव उत्सवः' इत्यमरः ॥ ३९ ॥

दरोदञ्चदिति । स्मितमुखं रामं दृष्ट्वा नमितास्यो मधुरिपुर्जयति । बलरामस्य स्मिते कारणमुक्त्वा श्रीकृष्णस्य विशेषणमाह—दरेत्यादि । दरमीषदुदञ्चद्गोपी[1] स्तनपरिसरस्य प्रेक्षणभराद्यः करस्योत्कम्पस्तस्माद् गोवर्धनगिरौ चलति सति भयार्त्तैरखिलगोपैरारब्धा स्तुतिर्यस्य सः ॥ ४० ॥

---

१. गोपीनां स्तनपरि—अ० ।

सरोरुहाक्षि स्मरसीदमद्भुतं त्वं छद्मना द्यूतविधौ विनिर्जिता ।
इतः सखीसाक्षितया पणीकृतं स्वयङ्गृहाश्लेषयुगं विधास्यति ॥४१॥

राधा—( सापत्रपं पुरो दृष्ट्वा ) कधं एत्थ गिरिसिहरे णिसण्णाणं दोण्हं अम्हाणं कंठे हारो णत्थि । [ कथमत्र गिरिशिखरे निषण्णयोरावयोः कण्ठे हारो नास्ति । ]

कृष्णः—

कथमिदमपि विस्मृतं भवत्या सखि तव कुण्डतटीनिकुञ्जधाम्नि ।
रतिपरिमललब्धनिद्रयोनौं यदवहिता ललिता जहार हारौ ॥ ४२ ॥

नववृन्दा—

यैर्वीक्ष्यसे विपक्षानपि तान्भवबन्धनतो विमोक्ष्यसि ।
वारुणबन्धान्नन्दं मोक्षयतस्ते किमाश्चर्यम् ॥ ४३ ॥

( इत्यग्रतो दर्शयन्ती )

भूमौ भारतमुत्तमं मधुपुरी तत्रापि तत्राप्यलं
वृन्दारण्यमिहापि हन्त पुलिनं तत्रापि रासस्थली ।
गोपीकान्तपदद्वयीपरिचयप्राचुर्यपर्याचिता
यस्यां सन्ति महामुनेरपि मनोराज्यार्चिता रेणवः ॥ ४४ ॥

राधा—( सचमत्कारम् ) हन्त ! कधं सा वेणुसद्दमाहुरी सुणीअदि । [ हन्त ! कथं सा वेणुशब्दमाधुरी श्रूयते ] ( इत्यानन्दभरावेशेन कतिचित्पदानि गत्वा । सोन्मादम् )

वंशी मातर्वनभुवि जगन्मोहयन्तीं निशम्य
प्रोद्यद्घूर्णाभरतरलधीर्गन्तुमस्मि प्रवृत्ता ।

---

सरोरुहाक्षीति । द्यूतविधौ त्वं निर्जिता सती पणीकृतं यदि त्वं मां जेष्यसि तदाऽहं त्वां स्वयमेवाग्रहपूर्वकमालिङ्गनयुगं करिष्यामि । इति हेतोर्यत् स्वयंगृहाश्लेषयुगं विधास्यसि कृतवती । स्मृत्युक्तौ लृट् ॥ ४१ ॥

कथमिति । परिमलः परिमलनं विमर्द इत्यर्थः । तेन लब्धनिद्रयोर्नावावयोर्हारावहिता सावधाना ललिता जहार ॥ ४२ ॥

यैरिति । यैः विपक्षैस्त्वं वीक्षसे तान् विपक्षान् । भवः संसारस्तद्बन्धतः॥४३॥

भूमाविति । भूमौ भारतं वर्षमुत्तमं तत्रापि भारतभूमौ मधुपुरी उत्तमा । तत्र मधुपुर्यामलमतिशयेन रासस्थली यतः श्रीकृष्णचरणद्वयपरिचयातिशयेन व्याप्ता अतस्तस्या रासस्थल्या रेणवः । मुनेरित्यादिना मनोरथेनैव पूज्या न तु साक्षात्कारविषयाः ॥ ४४ ॥

वंशीति । वनभुवि वंशी जगन्मोहयन्तीति निशम्य प्रोद्यद्घूर्णाभरेण

द्वारि स्थूलं निहितमचिरादर्गलं चेत्त्वयाऽग्रे
केनेदं वा मदसुपदवीसीम्नि शक्यं [1]विधातुम् ॥ ४५ ॥

( इत्युद्घूर्णते )

कृष्णः—( सौत्सुक्यम् )

निमज्जति निमज्जति प्रणयकेलिसिन्धौ मनो
विघूर्णति विघूर्णति प्रमदचक्रकीर्णं शिरः ।
अहो किमिदमावयोः सपदि रासनामाक्षर-
द्वयीजनुषि निःस्वने श्रवणवीथिमारोहति ॥ ४६ ॥

नववृन्दा—सखि, चित्रगतोऽपि रासोत्सवस्तव सत्यो बभूव ।

राधा—हद्धी ! हद्धी ! कहं क्खु चित्तं जेव्व एदं । [ हा धिक् ! हा धिक् ! कथं खलु चित्रमेवेदम् । ]

कृष्णः—

नवमदनविनोदैः केलिकुञ्जेषु राधे
निमिषवदुपरामं काममासेदुषीणाम् ।
उपचितपरिपोषप्रोषितापत्रपाणां
स्मरसि किमिव तासां शारदीनां क्षपाणाम् ॥ ४७ ॥

( इत्युत्कम्पमभिनीय )

---

तरला धीः यस्याः साऽहं गन्तुं प्रवृत्तास्मि । ततो वंशीध्वनिमाधुर्येण गन्तुमसमर्थाहं हे मातर्वंशि मम निर्गमद्वारि त्वया स्थूलमर्गलं चेद्यदि निहितम् । केन जनेन वा मदसुपदवीसीम्नि मम प्राणनिर्गममार्गे इदमर्गलं विधातुं शक्यम् । अनेन मम गमने निरोधे कृते मे प्राणाः न स्थास्यन्तीति भावः ॥ ४५ ॥

निमज्जतीति । रास इति नामाक्षरद्वयस्य जनुरुत्पत्तिर्यत्र तस्मिन्निःस्वने शब्दे श्रवणवीथिमारोहति सति आवयोर्मनः प्रणयकेलिसिन्धौ निमज्जति । प्रहर्षसमूहव्याप्तं शिरश्च विघूर्णति ॥ ४६ ॥

नवमदनेति । हे राधे तासां शारदीनां क्षपाणाम् । कर्मणि षष्ठी । ताः शारदीः क्षपाः स्मरसि । कीदृशीनाम्—नवमदनविनोदैर्निमिषवदुपराममासेदुषीणाम् उपरामं प्राप्तानाम् । उपचितो वर्द्धितो यः परि सर्वतोभावेन परिपोषस्तेन प्रोषिता दूरीकृता अपत्रपा लज्जा यासु तासाम् । निर्णयो नाम निर्वहणसन्ध्यङ्गमिदम् । तथा च—'निर्णयस्त्वनुभूतोक्तिः' ( ना० चं० का० ११२ ) इति । अत्र स्पष्ट एव निर्णयः ॥ ४७ ॥

---

१. निधातुम्–व० ।

यमुनोपवने भवद्विधाभिर्विविधैः केलिभिरस्मृतापराणि ।
पुनरप्यतुलोत्सवानि राधे भवितारः किमु तानि वासराणि ॥ ४८ ॥

नववृन्दा—

विद्योतते तस्य सुदर्शनस्य प्रसादतीर्थं वनमम्बिकायाः ।
नीतस्तनुं कुण्डलिनीं हरिर्यं विमोक्षयन् कुण्डलिकायतोऽपि ॥ ४९ ॥

मधुमङ्गलः—एसो संखउडो । [ एष शङ्खचूडः । ]

राधा—( सभयम् ) परित्ताहि परित्ताहि ! [ परित्रायस्व परित्रायस्व ] ( इति कृष्णमालिङ्गति )

कृष्णः—( परिरम्भसुखमभिनीय ) साधु रे भ्रातः शङ्खचूड, संरम्भादुन्मथितोऽपि मे त्वमलब्धपूर्वं प्रमोदमेव कृतवान् ।

नववृन्दा—पश्य पश्य ।

शम्भुर्वृषं नयति मन्दरकन्दरान्त-
र्भीतः सलीलमपि यत्र शिरो धुनाने ।
आः कौतुकं कलय केलिलवादरिष्टं
तं दैत्यपुङ्गवमसौ हरिरुन्ममाथ ॥ ५० ॥

( पुनः प्रदर्श्य )

स्कन्धेष्विन्दीवराक्षीणां यः किलेन्दीवरायते ।

---

यमुनोपवने इति । भवद्विधाभिः सह विविधैः केलिभिः न स्मृतिविषयाण्यपराणि येषु तानि वासराणि किमु पुनरपि भवितारः भविष्यन्ति । कीदृशानि—अतुला उत्सवा येषु तानि । श्रीकृष्णोक्तपद्यद्वयेन रासलीलायाः सर्वलीलासु महाराजचक्रवर्तित्वमवश्यम्भावित्वञ्च सूच्यते । भगवतः सङ्कल्पमात्रमेव सिद्ध्यति किम्पुनरेतादृशाभिलापपूर्वकं कथनम् ॥ ४८ ॥

विद्योतते इति । अम्बिकाया वनं विद्योतते । सुदर्शनस्य सर्पदेहगतदुःखहरणात् हरिः कुण्डलिकायतः सर्पदेहतोऽपि यं सुदर्शनं नाम गन्धर्वं विमोचयन् तनुं कुण्डलिनीं कुण्डलयुक्तां नीतः प्रापितः ॥ ४९ ॥

एषेत्यारभ्य परित्रायतामित्यन्तम् । अत्र भयं नाम सन्ध्यन्तरमिदम् । तथा च—'भयन्त्वाकस्मिकत्रासः' ( ना० चं० का० १४० ) इति । अत्र शङ्खचूडप्रसङ्गेन राधायास्त्रासः भयम् । संरम्भादुन्मथितो नाशितोऽपि अलब्धपूर्वमितः पूर्वमिदं कदापि स्वयमेवालिङ्गनं न कृतमिति ।

शम्भुरिति । यत्रारिष्टे सलीलमिति शिरो धुनाने सति भीतः शम्भुर्वृषं स्ववाहनं मन्दरकन्दरान्तर्नयति । हरिस्तमुन्ममाथ ॥ ५० ॥

स्कन्धेष्विति । तव यो भुजः सुन्दरीणां स्कन्धेष्विन्दीवर इवाचरति स

चित्रं भुजः स ते केशिभिदायां भिदुरायते ॥ ५१ ॥

कृष्णः—एतद् व्योमासुरं वंवृत्या मुक्तिपतिम्वरायाः रङ्गस्थलम् ।

मधुमङ्गलः—एसो अक्कूरो । [ एष अक्रूरः ] ( इत्यर्द्धोक्ते )

राधा—हा ! हा ! किं करिस्सं ! [ हा ! हा ! किं करिष्ये ! ] ( इति मूर्च्छति )

कृष्णः—( ससम्भ्रममाश्लिष्य ) कोमले, मा कातरीभूः । इदं खलु चित्रम् ।

राधा—( सावहित्थम् ) अंब दारुणदाप्पसंगस्स जो चिद्दगदोवि संतावेदि । [ अम्ब, दारुणताप्रसङ्गस्य यश्चित्रगतोऽपि सन्तापयति । ]

नववृन्दा—एष मथुराप्रस्थानोपक्रमः ।

कृष्णः—

विरमतु नववृन्दे गान्दिनेयस्य यात्रा
विवृतिमनुसरेमामग्रिमालेख्यलक्ष्मीम् ।
स्मृतिपथमधिरूढैर्भूरिभिस्तैः प्रियायाः
करुणविलपितैर्मे विस्फुटत्यन्तरात्मा ॥ ५२ ॥

नववृन्दा—

हतराजकीयरजकं [1]वायकवरदायकं देवम् ।
धृतदमनकनामानं सुदामदयितं नमस्यामि ॥ ५३ ॥

कृष्णः—( स्मित्वा ) प्रिये, पश्य ताम्बूलिकानामनुरागं यैरुभयथा रञ्जितोऽस्मि ।

राधा—कीस एदं उल्लंघिदं ? [ कस्मादिदमुल्लङ्घितम् ? ]

कृष्णः—( स्वगतम् ) कथमपह्नोतुं न शक्तोऽस्मि यदियं सैरन्धीमेव विलोक्यते ।

राधा—णअवुंदे, का एसा राअमग्गे-गोउलणाधस्स पीदंसुअंचलं [2]आअट्टेदि ? [नववृन्दे, का खल्वेषा राजमार्गे गोकुलनाथस्य पीतांशोरञ्चलमाकर्षति ? ] ( नववृन्दा स्मितं कृत्वा मुखं [3]नामयति )

---

भुजः 'केशी'नामासुरस्य भेदने भिदुरायते वज्रायते ॥ ५१ ॥

एतद्व्योमासुरमित्यादिना तस्य मुक्तिरुक्ता । विरमत्विति । गान्दिनेयस्याक्रूरस्य यात्राविवृतिर्विरमतु । रजकवधादिरूपामग्रिमलेख्यलक्ष्मीमनुसर ॥ ५२ ॥

---

१. वायक—अ० । २. आ अट्ठदि—अ० । ३. नमयति—अ० ।

कृष्णः—( किञ्चिद्विहस्य )

अनियुक्तापि निपुणा दूतीयं त्वयि वत्सला ।
मामभ्यर्थयते धृत्वा पदे गोष्ठनिनीषया ॥ ५४ ॥

राधा—एसा मुहलीकिदबम्हंडा कित्तिमंडली । ता केत्तिअं [1]ढक्किस्ससि । [ एषा मुखरीकृतब्रह्माण्डा कीर्तिमण्डली । तस्मात् कियदाच्छादयिष्यसि । ]

नववृन्दा—पश्य पश्य—

वनमालां भजमानैर्गुरुरपि पोष्टाऽपि दानपूरेण ।
अलिभिरमोचि करीन्द्रो हरिसेवाधर्मता हि वरा ॥ ५५ ॥

अहह भोः पश्यत—

त्रासितमल्लमरालः कृष्णघनोऽयं निराकृतोत्तापः ।
जगते जीवनदायी न हि कंसस्योदयं कुरुते ॥ ५६ ॥

राधा—को एसो केसवेण केसे आअड्ढिअ मंचादो पाडिदो ? [ क एषः केशवेन केशे आकृष्य मञ्चात्पातितः ? ]

नववृन्दा—एष दुष्टो भूपतिः ।

राधा—( सानन्दम् ) पिअं मे पिअं । [ प्रियं मे प्रियम् । ]

कृष्णः—नूनमतिक्रान्तो यामिन्याः प्रथमो यामः यदेष छायाप्रपञ्चः सञ्चुकोच । तत् कालिन्दीतीरमनुसरामः ।

( इति सर्वे निष्क्रान्तिमनुनाटयन्ति )

---

त्वयि वत्सलेयं दूतीत्याह—अनियुक्तापीति ॥ ५४ ॥

एषा कीर्तिमण्डली ब्रह्माण्डव्यापिनी बभूव । तस्मात् कियदाच्छादयिष्यसि ।

वनमालामिति । वनमालां भजमानैरलिभिर्भ्रमरैर्दानपूरेण मदजलेन मदजलस्य प्रदानेन च पोष्टापि । 'दान मदजले प्रदाने च' । गुरुरपि स्थूलोऽपि करीन्द्रः कुवलयापीडनामा हस्ती अमोचि । तथा च—भ्रमराः हस्तिकुम्भस्थलस्थाः श्रीकृष्णस्य वनमालां लेभुरित्यर्थः । अर्थान्तरन्यासोपन्यासमाह—धर्मतोऽन्यधर्मात् हरिसेवा वरा ॥ ५५ ॥

त्रासितेति । श्रीकृष्ण एव घनो मेघः । कीदृशः—त्रासितो मल्लरूपो मरालो हंसो येन सः । उत्तापो ग्रीष्मादिजातोऽसुरादिकृतश्च । जगते जगद्रूपाय जीवनं जलं दातुं शीलं यस्य । पक्षे—जगद्वर्तिजनाय जीवनं प्राणम् । मेघपक्षे—कंसस्योदयं न कुरुतेऽपि तु सर्वसस्योदयं कुरुते । कृष्णपक्षे—कंसस्योदयं न कुरुते ॥ ५६ ॥

---

1. ढक्किस्सदि-अ० ।

कृष्णः—नेदिष्ठेयं मदङ्गप्रतिमायाः पिण्डिका यदुपकण्ठे महाविलास-विद्यासिद्धिभूमिस्तमालरसालयोरन्तरालवर्तिनी सा मे कुञ्जशालिका ।

( सव्यतो विलोक्य )

माणिक्यकुट्टिमतटेषु कलिन्दजायाः
पूरे च कौस्तुभमणावपि बिम्बितेन[1] ।
एकेन चन्द्रमुखि ते मुखमण्डलेन
चन्द्रावली वनभुवि प्रकटीकृतास्ति ॥ ५७ ॥

( प्रविश्य माधव्या सह चन्द्रावली )

चन्द्रावली—हला, विरहब्भमिदा वुंदावणं प्पविट्ठह्मि । जं इंदणील-पडिमं विणा दाणिं अण्णो मे ओलंबो णत्थि । [ सखि, विरहभ्रमिता वृन्दावनं प्रविष्टास्मि । यदिन्द्रनीलप्रतिमां विनेदानीमन्यो मे आलम्बो नास्ति ।]

माधवी—भट्टदारिए, सुदं मए सुहक्खणे पत्थाणं कदुअ इध ज्जेव्व कहिं पि चिट्ठदि भट्टा । ण क्खु एण्हि वि इदो बह्मलोअं पत्थिदो । [ भर्तृदारिके, श्रुतं मया शुभक्षणे प्रस्थानं कृत्वा इत एव कुत्रापि तिष्ठति भर्त्ता । न खल्विदानीमपीतो ब्रह्मलोकं प्रस्थितः । ]

चन्द्रावली—सहि, सच्चं भणासि । जं एदं तस्स सोरभं पसरेदि । ता एत्थ ज्जेअ हविस्सदि । [ सखि, सत्यं भणसि । यदिदं तस्य सौरभं प्रसरति । तदत्रैव भविष्यति । ]

कृष्णः—( कुञ्जदेहलीमुपलभ्य ) प्रिये, क्षिप्रमिहोपेहि । क्षणमनुभवावो विश्रामसुखम् ।

नववृन्दा—( स्वगतम् प्रणयाभ्यसूयया भ्रुवौ भङ्गुरीकृत्य नम्रमुखी ) कथं रसालान्तरिता बभूव राधा ।

चन्द्रावली—( सोद्ग्रीविकम् ) हला, पेक्ख । कुंजघरदुवारे अज्ज-उत्तो । [ सखि, पश्य । कुञ्जगृहद्वारे आर्यपुत्रः । ]

कृष्णः—

अत्र भावि निरातङ्कमारामे रमणं मम ।
स्फुरत्यन्ते कुशस्थल्या यद्विदर्भाङ्गभूरियम् ॥ ५८ ॥

---

माणिक्येति । माणिक्यस्य कुट्टिमतटेषु यमुनायाः पूरे प्रवाहे च कौस्तुभ-मणौ च बिम्बितेन ते मुखेन ॥ ५७ ॥

अत्रेति । अत्र रमणं मे भावी भविष्यति यद् यस्मात् कुशस्थल्याः द्वारकायाः पक्षे कुशयुक्तायाः अन्ते मध्ये इयं विदर्भाङ्गभूः रुक्मिणीपक्षे दर्भ-रहिता इयं भूः स्फुरति ॥ ५८ ॥

---

1. बिम्बतेन–( ? )–अ० ।

चन्द्रावली—माहवि, णूणं दिट्ठह्मि । जं विदब्भंगभुत्ति वाहरीअदि । [ माधवि, नूनं दृष्टास्मि । यद् विदर्भाङ्गभूरिनि व्याहरति । ]

माधवी—लतंतरिदासि, कुदो दंसणसंभावणा ! णूणं उक्कंठिदो एसो भावणाए तुमं पेक्खदि । ता अतक्किदं एक्किआ गदुअ आणंदेहि णं । [ लतान्तरितासि, कुतो दर्शनसम्भावना ! नूनमुत्कण्ठित एष भावनया त्वां पश्यति । तदतर्कितैकाकिका गत्वानन्दयैनम् । ]

कृष्णः—

उचिता हृदयार्पणाय गौरी तरलालोकमयी गुणोज्ज्वलात्मा ।
नवहारलतेव रुक्मिणी मे किमियं कण्ठतटे न सन्निधत्ते ॥ ५९ ॥

( चन्द्रावली उपसृत्य कृष्णमपाङ्गेन पश्यन्ती पुरोऽवतस्थे )

कृष्णः—( सविस्मयानन्दम् ) अहो ! रसालतरुणा तिरोधाय कथं तमालमूलादुपस्थितासि ?

( चन्द्रावली साशङ्कं नववृन्दामुखमीक्षते )

नववृन्दा—देव, देवी साक्षादियमाकल्पेन दीव्यति ।

कृष्णः—नववृन्दे, न केवलमाकल्पेन किन्तु सङ्कल्पेनापि । यदियं तादृशीमेव गम्भीरतामवलम्बते ।

चन्द्रावली—( स्वगतम् ) इमिणा वाहारेण सुठ्ठु संदिहाणाह्मि किदा । [ अनेन व्याहारेण सुष्ठु सन्दिग्धास्मि कृता । ]

---

व्याहरति मां दृष्ट्वैवं वदति । भ्रान्तिर्नाम सन्ध्यन्तर मिदम् । तथा च—'भ्रान्तिर्विपर्ययज्ञानं प्रसङ्गस्यापि निश्चयात् ।' ( ना० चं० का० १४२ ) । अत्र विदर्भभूरित्यस्य विगतभूमित्वाज्ञानं देव्या भ्रान्तिः । अतर्किता अलक्षिता एकिका गत्वा ।

उचितेत्यादि पद्यं सत्यभामामुद्दिश्यैवमाह । तत्पक्षव्याख्या यथा नवहारलतेवेयं रुक्मिणी रुक्मं सुवर्णस्तेन युता सत्यभामा मे कण्ठतटे किं न सन्निधत्ते । पक्षे-रुक्मिणी । उचितेत्यादि हारलतासत्यभामयोर्विशेषणानि । हृदयार्पणायोचिता गौरी हारपक्षे शुक्ला राधापक्षे पीतवर्णा । तरलस्य हारनायकस्योद्योतमयी पक्षे तरलश्चपलो यस्याश्चालोको दर्शनं तन्मयी । गुणेन सूत्रेण पक्षे सौन्दर्यादिना उज्ज्वलात्मा । रुक्मिणीपक्षेऽपि सत्यभामापक्ष इवार्थो ज्ञेयः ॥ ५९ ॥

रुक्मिणीति शब्दं श्रुत्वा चन्द्रावल्याश्चेष्टितमाह—चन्द्रेति । राधिकाज्ञानेन श्रीकृष्ण आह—हे नववृन्दे आकल्पेन भूषणेन न तादृशीं रुक्मिण्याः सदृशीं गम्भीरताम् अवलम्बते ।

कृष्णः—( नववृन्दामवेक्ष्य ) सत्यभामा मयि कथम् ( इत्यर्द्धोक्ते नववृन्दा दृशं कूणयति )

चन्द्रावली—( सखेदं नीचैः ) हुँ ! विण्णादं पेम्मगउरवं । [ हुँ ! विज्ञातं प्रेमगौरवम् । ]

कृष्णः—( निभाल्य । स्वगतम् ) हन्त ! कथमसौ देवी । भवतु । संवरीतुं प्रयतिष्ये । ( प्रकाशम् )

सती कथमभामा मे देवी नाद्य प्रसीदति ।
निदानमविदत्तस्याः खिद्यते हृदयं मम ॥ ६० ॥

चन्द्रावली—माहवि, कुदोसि ? [ माधवि, कुत्रासि ? ]

माधवी—( उपसृत्य ) एसह्मि । [ एषाऽस्मि । ]

कृष्णः—( सशङ्कमात्मगतम् )

निजतनोर्वितनोतु सखे भवान्
सपदि बालरसालविशालताम् ।
वरतनुं परतस्तव तस्थुषीं
न हि यथा परिपश्यति रुक्मिणी ॥ ६१ ॥

माधवी—भट्टदारिए, रसालमूले पेक्ख अप्पणो दुदिअं तणुअं । [ भर्तृदारिके, रसालमूले पश्यात्मनो द्वितीयां तनुम् । ]

चन्द्रावली—( साचि समीक्ष्य ) जुत्तं क्खु एदं । [ युक्तं खल्वेतत् ] ( इति नम्रीभवति )

कृष्णः—( स्वगतम् ) सहकारस्य नात्र सहकारिता जाता । भवतु । कैतवमेव सहायं करिष्ये । ( प्रकाशम् )

---

सत्यभामा मयि कथं नाद्य प्रसीदतीत्यस्याद्धोक्ते नववृन्दा दृशः कूणनेन निवारयति । नीचैराह—हुँ इति । संवरीतुमिति सत्यभामाशब्दस्यार्थान्तरं कृत्वैवाह—सती कथमित्यादि । अभामाऽनुग्रा सती देवी मे न प्रसीदति । निदानं कारणमविदन्मे हृदयं खिद्यते । संवृतिर्नाम निर्वहणसन्ध्यङ्गमिदम् । तथा च—

'संवृतिः स्वयमुक्तस्य स्वयमाच्छादनं भवेत् ।' ( ना० चं० का० १४१ ) अत्र स्वयमुक्तस्य सत्यभामेत्यस्य शब्दस्य सती कथमभामेत्यर्थान्तरेण संवरणात् संवृतिः ॥ ६० ॥

आम्रवृक्षतले स्थिताया राधाया आवरणार्थं तं वृक्षप्रार्थनारूपमात्मगतमाह—निजतनोरिति । निजतनोर्विशालतां वितनोतु । वरतनुं राधाम् ॥ ६१ ॥

तुण्डमुन्नमय ताण्डविताक्षं लज्जतां दिवि [1]कुरङ्गकलङ्कम् ।
म्लानतां तव समीक्ष्य विदूये जीवितादपि ममाभ्यधिकाऽसि ॥६२॥

माधवी—देअ, इमाणं पेम्मकोमलाणं अक्खराणं मा क्खु णं अहिरूवं जाणीहि । जं एसा सच्चा ण होदि । [ देव, एषा प्रेमकोमलानामक्षराणां मा खल्वभिरूपं जानीहि । यदेषा सत्या न भवतीति ]

कृष्णः—साधु माधविके, साधु । मदीयहृदयाशङ्का त्वया निरस्ता । तदिन्द्रजालाभिज्ञया नववृन्दयैव निर्मितेयं मायिकी देवी रसालमूलवर्तिनी खलु सत्या । ( इति सम्भ्रमेणाभ्युपेत्य । सानुनयम् )

अन्तःप्रसादसुधया प्लवनाद्विशुद्धा
शुद्धान्ततस्त्वमभितः स्वयमागतासि ।
एतां वृथा प्रथयसि प्रबलामकाण्डे
किं कुण्डिनेश्वरसुते मयि मानमुद्राम् ॥ ६३ ॥

नववृन्दा—देव, माधवीपार्श्वे देवी ।

कृष्णः—नववृन्दे, तर्हि किमियं ( केयं ? ) रसालमूले मायिकी ?

नववृन्दा—न मायिकी किन्तु देव्याः काचिदेषा प्रियसखी सत्या नाम ।

कृष्णः—अहो गम्भीरता देवीकारुण्यनिर्झराणां यैरालीजनोऽपि सारूप्यामृतं प्रणीय वाढं भ्रमितोऽस्मि ।

---

तुण्डमिति । ताण्डविताक्षं यथा स्यात्तथा तुण्डमुन्नमय । तव मुखं समीक्ष्य कुरङ्गकलङ्कश्चन्द्रः लज्जताम् । तव म्लानतां समीक्ष्याहं विदूये उत्तप्तोऽस्मि । यतो मम तु त्वं जीवतादप्यधिका ॥ ६२ ॥

मा खल्वेनामनुरूपां जानीहि यदेषा सत्या न भवतीति माधव्या आक्षेपवाक्यं श्रीकृष्णश्छलमाश्रित्याह—साधु साध्विति । भ्रंशो नाम नाटकभूषणमिदम् । तथा हि—'पतनात् प्रकृतादर्थाद् अन्यस्मिन् भ्रंश ईरितः ( ना० चं० का० १७५ ) । अत्र सत्याशब्दस्य प्रकृतार्थं सत्यभामारूपं परित्यज्य तथ्यार्थलक्षणस्य कथनाद् भ्रंशः ।

अन्तरिति । अन्तः प्रसाद एव सुधा तया प्लवनात् त्वं विशुद्धा । अभितः शुद्धान्ततः स्वयमागतासि । एतां प्रबलां मानमुद्रां वृथा मयि प्रथयसि ॥ ६३ ॥

यैः कारुण्यनिर्झरैर्भूषणपरिधानैरेव सारूप्यामृतं प्रणीय प्रापय्य वाढं भ्रमितोऽस्मि ।

---

1. कुरङ्गकलङ्कः–ब० ।

राधा—( स्वगतम् ) इदो णीसरणं क्खु सरणं। [ इतो निस्सरणं खलु शरणम्। ] ( इति नववृन्दया सह निष्क्रान्ता। )

चन्द्रावली—( सोत्प्रासस्मितम् )

कंजलसामलमज्झं पल्लअसोणुज्जलं मुउंदस्स।
गुंजाफलं व्व अहरं माहवि दठ्ठूण णंदामि॥ ६४॥
[ कज्जलश्यामलमध्यं पल्लवशोणोज्ज्वलं मुकुन्दस्य।
गुञ्जाफलमिव अधरं माधवि दृष्ट्वा नन्दामि॥ ]

कृष्णः—देवि, मान्यथा शङ्किष्ठाः समाघ्रायमाणाद्दामोदिनः शैलशिलाखण्डात् कस्तूरी विलग्ना।

चन्द्रावली—देअ, आकोमारं सुठ्ठु अज्झाविदह्मि। ता अलं इमिणा अज्झावणपरिस्समेण। [ देव, आकौमारं सुष्ठु अध्यापितास्मि। तदलमनेनाध्यापनपरिश्रमेण। ]

माधवी—भट्टिदारिए, ओसरे उवसप्पणिज्जा ईसरा होंति। ता [1]अणहिण्णाणं अम्हाणं णीदिप्पबंधादिक्कमं खमावेहि [2]दुवारवदीणाधे। [ भर्तृदारिके, अवसरे उपसर्पणीया ईश्वरा भवन्ति। तदनभिज्ञानामस्माकं नीतिप्रबन्धातिक्रमं क्षमापय द्वारवतीनाथे। ]

कृष्णः—माधवि, विचित्रा ते प्रकृतिः। या धृतजिह्मगीभावाऽपि न कुलीनां चर्यामुद्गिरति। ( इत्यञ्जलिं बद्ध्वा )

अद्य प्रसीद देवि प्राणाधिकवल्लभे सहसा।
स्पृशति न चन्द्रकलाश्च त्वां चन्द्रावलि तमः किमुत॥ ६५॥

माधवी—अलं इमिणा संबोहणेण। जं एसा ण सच्चभामा।
[ अलमनेन सम्बोधनेन। यदेषा न सत्यभामा। ]

कृष्णः—सखि, सत्यमात्थ। यदेषा न सत्यकोपा देवी।

---

यद्येवं तर्हि अधरे कज्जलं कुत आगतमित्यत आह—कंजलेत्यादि॥ ६४॥

अन्यथा सत्यया सह मिलनेन। किन्तु कस्तूरी विलग्ना संलग्ना। अलं व्यर्थम्। उपसर्पणीयाऽऽराधनीया। या प्रकृतिः अधृतजिह्मगीभावा जिह्मः कुटिलस्तत्पक्षे कुलीनां कुलीनजनकृतां चर्यां चेष्टामपि न उद्गिरति पक्षे जिह्मगी सर्पिणी तदा न कुलीनां न कुलस्त्रीणां तद्विपक्षाणां चर्यामुद्गिरति।

अद्येति। हे चन्द्रावलि चन्द्रकलां क्षयलक्षणां न स्पृशति किमुत त्वां तमोऽन्धकारं क्रोधश्च स्पृशति॥ ६५॥

---

१. अणहिण्णाणं—अ०। २. णाहे—अ।

चन्द्रावली—देअ, तुम्ह संकुइदं मणो पेक्खिअ च्चेअ दूएमि । ता प्पसीद । णीसंकं कीलेहि । एसा अंतेउरं गच्छह्मि। [देव, तव सङ्कुचितं मनः प्रेक्ष्यैवाहं दूये । तत्प्रसीद । निःशङ्कं क्रीडय । एषाऽन्तःपुरं गच्छामि । ]

( इति सपरिजना निष्क्रान्ता )

कृष्णः—गतावरोधं देवी । तद्वयमपि गच्छामः । ( इति परिक्रम्य )

राधा मदाननतरङ्गदपाङ्गकोटिः
क्रीडाप्रसङ्गभरभङ्गविवर्णवक्त्रा ।
देवीं विलोक्य सहसा नमितोत्तमाङ्गा
माकन्दगूढतनुराश्रयते मनो मे ॥ ६६ ॥

( इति निष्क्रान्तः )

( इति निष्क्रान्ताः सर्वे )

इति चित्रदर्शनो नाम नवमोऽङ्कः ।



---

दूये उपतप्तास्मि । एषाऽहम् ।

राधेति । मदानने तरङ्गदपाङ्गस्य नेत्रान्तस्य कोटिरग्रभागो यस्याः सा इत्यनेनेर्ष्या, क्रीडा प्रसङ्गातिशयस्य भङ्गेन विवर्णं वक्त्रं यस्याः सा इत्यनेन विषादः, देवीमित्यादिना लज्जा, माकन्देत्यादिना शङ्का च । एतेषां सन्धिर्यत्र तादृशी राधा मे मनः आश्रयते ॥ ६६ ॥

इति नवमाङ्कव्याख्या



# अथ दशमोऽङ्कः

( ततः प्रविशतो युवत्यौ )

प्रथमा—सखि मालति, काऽपि मङ्गलवार्ता कर्णपदवीं किं तवाधिरूढा ।

मालती—सहि तुलिसिए, कीरिसी सा ? [सखि तुलसि, कीदृशी सा ?]

तुलसी—सा भगवती पौर्णमासी सकुटुम्बं गोष्ठेश्वरमादाय सौराष्ट्रं विवेश ।

मालती—( सानन्दम् ) हला माहवि, चउस्सालं गदुअ एदं [1]सुहवुत्तं राहिआए णिवेदिस्सं । [ सखि माधवि, चतुश्शालं गत्वैतच्छुभवृत्तान्तं राधिकायै निवेदयिष्यामि । ]

तुलसी—सरले, नाधुना माधवीचतुश्शाले राधिका ।

मालती—तदो कहिं एसा ? [ तदा कुत्रैषा ? ]

तुलसी—तत्र चित्रदर्शनदिवसे देव्या केलिलक्षणावलोकनेन परिहस्य सा खलु शुद्धान्तमुपनीताऽस्ति ।

मालती—केरिसं परिहसिदं ? [ कीदृशं परिहसितम् ? ]

तुलसी—

स्तने कीरैर्मन्ये तव निबिडया दाडिमधिया
तथा बिम्बभ्रान्त्या क्षतमधरमध्ये कृतमिदम् ।
मयूरैर्मालेयं व्यदलि फणिबुद्ध्या मणिमयी
वनान्तर्वासस्ते भगिनि हृदयं मे व्यथयति ॥ १ ॥

---

श्रीकृष्णस्य श्रीराधया सह विहारमहोत्सवमुक्त्वाऽधुना श्रीव्रजेश्वरादिभिर्मिलनाद्युत्सवं वक्तुं दशमाङ्कमारभते—तत इत्यादिभिः । युवत्यौ मालतीतुलस्यौ । प्रथमा तुलसी । सा वार्त्ता । सौराष्ट्रं द्वारिकायाम् । एषा राधिका ।

स्तनादौ सम्भोगजन्यचिह्नं दृष्ट्वाऽह—स्तने इति । तव स्तने दाडिमधिया निबिडिया इत्यनेन भ्रान्तौ कारणम् कीरैः शुकैः क्षतं कृतमित्यहं मन्ये न तु नखक्षतमिति परिहसितम् । तथा दाडिमभ्रान्त्या कीरैरधरमध्ये क्षतं कृतं, न तु दन्तैः । फणिः सर्पस्तद्बुद्ध्या मणिमयी माला मयूरैर्व्यदलि न तु केलिभिः । अतस्ते वनान्तर्वासः मे हृदयं व्यथयति । व्यथायां हेतुरुभयपक्ष एव स्फुटः ॥ १ ॥

---

१. सुहवुत्तं–अ० ।

मालती—हसिज्जउ णाम। तहवि लहुइच्चेअ सोहग्गेन गुरुइ।
[ हसतु नाम। [1]तथापि लघ्वी एव सौभाग्येन गुर्वी। ]

तुलसी—सत्यं ब्रवीमि। पश्य पश्य—

करैस्तिरस्कृत्य सहस्ररश्मिं परस्सहस्रैरिह कौस्तुभस्य।
सञ्ज्ञाय युक्तिं हरिरद्य तस्याः कुर्वन्नसौ तिष्ठति सौधपृष्ठे ॥ २ ॥

तदावामपि [2]स्ववाटिकां प्रयावः। ( इति निष्क्रान्ते )

विष्कम्भकः।

( ततः प्रविशति कीरावलम्बजाम्बूनददण्डिकामण्डितपाणिना विदूषकेणोपास्यमानः कृष्णः )

कृष्णः—( सोत्कण्ठम् )

स्नेहेन दीप्तापि तमः प्रिया मे हर्तुं विदर्भेन्द्रसुतोपरुद्धा।
शक्तिं न धत्ते कलसीपरीता प्रदीपरेखेव निकेतनस्य ॥ ३ ॥

मधुमङ्गलः—भो मा क्खु उच्चं भणाहि। सव्वदो संचारी एत्थ देइपरिजणो। [ भोः मा खलूच्चैर्भण। सर्वतः सञ्चार्यत्र देवीपरिजनः। ]

कृष्णः—सखे कौस्तुभ, भवद्विद्योतनादत्र मामनुयास्यन्ति दास्यः। तदद्य मार्दवमापद्यस्व।

( प्रविश्य नववृन्दा )

नववृन्दा—देव, देव्या प्रेषिताऽस्मि।

कृष्णः—नववृन्दे किमिति ?

नववृन्दा—कीरराजार्थम्।

कृष्णः—सखे, समर्पय शुकेन्द्रम्।

( मधुमङ्गलः नववृन्दाकरे कीरदण्डिकामर्पयति )

कृष्णः—( सोत्कण्ठम् ) सखि नववृन्दिके,

अद्य प्रियां परिमलोज्ज्वलरम्यगात्रीं[3]

---

करैरिति। हरिः कृष्णः कौस्तुभस्य परःसहस्रैः सहस्रात् परैः करैः सहस्ररश्मिं सूर्यं तिरस्कृत्य तस्या राधायाः सञ्ज्ञाय युक्तिं कुर्वन् सौधपृष्ठे तिष्ठतीति ॥ २ ॥

स्नेहेनेति। विदर्भेन्द्रसुतया रुक्मिण्या उप आधिक्येन रुद्धा मे प्रिया राधा मे मम स्नेहेन दीप्तापि तमो मदनव्यथां हर्तुं शक्तिं न धत्ते। प्रदीपरेखा यथा तैलादिना दीप्तापि कलसीपरीता निकेतनस्यान्धकारं हर्तुं न धत्ते ॥ ३ ॥

मार्दवमापद्यस्व स्वप्रकाशं मन्दं कुरु। अद्येति। हा खेदे राधिकां यद्वा

---

१. तदपि—ब। २. वाटिके—अ०। ३. गात्राम्—व०।

सत्राजितीति विदितामवरोधमध्ये ।
तां रत्नकुण्डलमरीचिपरीतगण्डां
हा राधिकां कलयितुं वलते मनो मे ॥ ४ ॥

नववृन्दा—देव, दुर्लभोऽयमर्थः प्रतिभाति । सा खलु देवी बहुधा वञ्चने स्वयमेव चातुरीविद्यामध्यापिता । यदद्य निर्भररागमभिव्यज्य कायच्छायामिव सत्यभामामकरोत् ।

मधुमङ्गलः—हीणामहे ! सच्चं तरलो एसो कोत्थुहो । जं णिवारिदो वि हम्मपुट्ठं विज्जोदेदि । [अहो ! सत्यं तरल एष कौस्तुभः । यन्निवारितोऽपि हर्म्यपृष्ठं विद्योतयति । ]

कृष्णः—सखे, नामी कौस्तुभस्य गभस्तयः । तदलमुपालम्भेन ।

नववृन्दा—आर्य, सेयं पिङ्गला नाम भामायाः सखी स्यमन्तकेन सह इत एवाभिवर्तते ।

( प्रविश्य पिङ्गला )

पिङ्गला—( कृष्णं दृष्ट्वा सापत्रपम् ) देअ, सामिणा सत्ताजिदेण भट्टिदारिआए सच्चाए पेसिदो एसो मणींदो । [ देव, स्वामिना सत्राजितेन भर्तृदारिकायै सत्यायै प्रेषित एषो मणीन्द्रः । ] ( इति कृष्णकरेऽर्पयति ) ।

कृष्णः—( मणिं हृदये निधाय सानन्दम् ) हन्त ! प्रियापरिवारस्य सङ्गमादस्य तस्याः सङ्गमाय लब्धतीर्थोऽस्मि ।

मधुमङ्गलः—केरिसं तं । [ कीदृशं तम् ? ]

कृष्णः—

पिङ्गलामनुसृतो मणिसङ्गी सङ्गतो युवतिवेषकलाभिः ।
आदरादनुमतो निशि देव्या तामहं रमयितास्मि मृगाक्षीम् ॥ ५ ॥

---

हारेण अधिकां तां प्रियां कलयितुं द्रष्टुं सम्भोक्तुं वा मे मनो वलते उत्कण्ठते । परिमलेन सह उज्ज्वलं रम्यञ्च शरीरं यस्यास्तां सत्राजितकन्यात्वेन ख्यातां, रम्यकुण्डलकान्त्या व्याप्तं गण्डं यस्याः ताम् ॥ ४ ॥

स्वयं स्वमेव बहुधा वञ्चनेन चातुरी विद्या । राधिकायां निर्भरानुरागं मिथ्यैव कृत्वा शरीरच्छायामिव तां न त्यजति । हीणामहे खेदे । गभस्तयः कान्तयः कौस्तुभस्य न सन्ति । अस्य प्रियापरिवारस्य सङ्गमात् तस्याः प्रियायाः सङ्गमाय लब्धतीर्थः लब्धावसरोऽस्मि । तमवसरम् ।

पिङ्गलामिति । युवतिवेषकलाभिर्वैदग्धैः पिङ्गलानुगतोऽहं देव्या अनुमतः । मां युवतिं ज्ञात्वा तस्या निकटगमनेऽनुमतिं दास्यति । निशि तां मृगाक्षीं श्रीराधां रमयितास्मि ॥ ५ ॥

नववृन्दा—देव, सत्यं दुर्लभोऽयं विधिः।

कृष्णः—नववृन्दे, नेदीयसी सन्ध्या। ततस्त्वं साधयाऽवरोधम्। वयमत्र विविक्ते योषिद्वेषं रचयामः। ( इति उभाभ्यां सह निष्क्रान्तः )

नववृन्दा—( परिक्रम्य ) इयं सपरिवारा सत्ययालंकृतवामपार्श्वा देवी मणिमन्दिरे निविष्टा विराजते।

( ततः प्रविशति तथाविधा चन्द्रावली )

चन्द्रावली—( सनर्मस्मितम् ) सहि सच्चे, मए गहिरगोरवेण अंतेउरे लालिदा वि वणमालासहवाससोक्खं च्चेअ सुमरंती हरिणी व्व कीस उव्विग्गासि! [ सखि सत्ये, मया गभीरगौरवेणान्तःपुरे लालिताऽपि वनमालासहवाससौख्यमेव स्मरन्ती हरिणीव कस्मादुद्विग्नासि! ]

राधा—( विहस्य। साकूतम् ) देइ, एत्थ सअलसोक्खसंरोहणे अवरोहे किं मे वणमालासंगाहिलासेण। [ देवि, अत्र सकलसौख्यसंरोहणेऽवरोधे किं मे वनमालासङ्गाभिलाषेण। ]

नववृन्दा—( उपसृत्य ) देवि, सोऽयं कामरूपादानीतः श्रुतपूर्वस्त्वया कीरेन्द्रः।

चन्द्रावली—( सानन्दम् ) सुट्ठु परितुट्ठह्मि। जं आइदीसुंदरो एसो। [ सुष्ठु परितुष्टास्मि। यदाकृतिसुन्दरः एषः। ]

नववृन्दा—देवि, मेधासमृद्धिं धारयन् प्रकृतिसुन्दरश्च।

चन्द्रावली—सोइदल्ल, पाइमदालिमीफलेहिं णंदेहि कीरिंदं। [ सौविदल्ल, पाकिमदाडिमीफलैर्नन्दय कीरेन्द्रम्। ]

कञ्चुकी—यदादिशति देवी। ( इति सकीरो निष्क्रान्तः )

( ततः प्रविशति प्रमदावेषधारिणा कृष्णेन पिङ्गलया चानुगम्यमानो मधुमङ्गलः )

मधुमङ्गलः—( परिक्रम्य ) देइ, सत्ताजिदेण सच्चाए समंतअं दादुं पहिदा एसा इत्थिआजुअली। [ देवि, सत्राजितेन सत्यायै स्मयन्तकं दातुं प्रहितैषा स्त्रीयुगली। ]

चन्द्रावली—( कृष्णमवेक्ष्य। स्वगतम् ) अम्महे! सोन्देरं इमाणं

---

नेदीयसी निकटवर्तिनी। साधय गच्छ। अवरोधमन्तःपुरम्। सत्यालंकृतं वामपार्श्वं यस्याः सा देवी। वनमाला वनश्रेणी पक्षे वैजयन्तीमाला सहवाससुखमेव स्मरन्ती। हरिणी मृगी स्वर्णप्रतिमा च। सा इव। 'हरिणी स्यान्मृगी हेमप्रतिमा हरिता च या' इत्यमरः। संरोहणे प्ररोहणे पक्षे संरोधने। अवरोधेऽन्तःपुरे।

सौविदल्ल हे कञ्चुकिन्।

( प्रकाशम् ) का एसा सामलुज्जला सुन्दरी कंतिकंदलीहिं मह अलिंदं इंदणीलमअं करेदि । [ अहो ! सौन्दर्यमस्याः ( प्रकाशम् ) का एषा श्यामलोज्ज्वला सुन्दरी कान्तिकन्दलीभिः ममालिन्दमिन्द्रनीलमयं करोति । ]

नववृन्दा—देवि, सौभाग्यभागसौरथाङ्गी नाम सत्यायाः सवयाः ।

( राधिका कृष्णं परिचित्य स्मितं करोति )

माधवी—अज्ज महुमंगल, एसा सामला सुट्ठ ओगंठिदा णअबहू विअ अंतेउरे कीस लज्जेदि ? [ आर्य मधुमङ्गल, एषा श्यामला सुष्ठु अवगुण्ठिता नववधूरिव अन्तःपुरे कस्माल्लज्जते ? ]

पिङ्गला—सहि, वाढं संकोइणी इमाए पइदी । [ सखि, वाढं सङ्कोचिन्यस्याः प्रकृतिः । ]

नववृन्दा—( देवीं विलोक्य )

मुहुरुत्सुकधीरपि त्वदग्रे त्रपते वक्तुमसौ सखीं रथाङ्गी ।
तदिमां प्रियलोकसङ्गकामां प्रहिणु स्वर्णनिकेतनाय भामाम् ॥६॥

चन्द्रावली—सहि सच्चे, सुअण्णमंदिरं गदुअ आलिंगीअदु रहंगी । [ सखि सत्ये, सुवर्णमन्दिरं गत्वाऽऽलिङ्ग्यतां रथाङ्गी । ]

राधा—( स्मित्वा ) जहा आणवेदी देइ । [ यथाज्ञापयति देवी ] ( इति कृष्णेन समं सपरिवारा निष्क्रान्ता )

चन्द्रावली—माहवि, सुदं मए । बहिणीए राहिआए वि रइबिंबसरिच्छं मणिरअणं आसी । [ माधवि, श्रुतं मया । भगिन्या राधिकाया अपि रविबिम्बसदृशं मणिरत्नमासीत् । ]

( नेपथ्ये 'स्नेहेन दीप्तेत्यादि' पद्यं पठति )

चन्द्रावली—( नेपथ्याभिमुखमवलोक्य ) सुणम्ह एसो कीरो किं पठेदि । [ शृणुमः एषः कीरः किं पठति । ]

( पुनः नेपथ्ये 'अद्य प्रियां परिमलोज्ज्वलरम्ये' त्यादि )

चन्द्रावली—( सखेदम् ) हला, सुदं सोदव्वं । [ सखि, श्रुतं श्रोतव्यम् ]

( पुनर्नेपथ्ये 'पिङ्गलामनुसृतो मणिसङ्गी' त्यादि )

---

कान्तिकन्दलीभिः कान्तिसमूहैः । अवगुण्ठिता मस्तकस्थवस्त्रेणाच्छादितमुखी । मुहुरिति । असौ रथाङ्गी । सखीं राधाम् ॥ ६ ॥

उत्कण्ठया श्रीराधाया मिलनार्थं नवबृन्दामुद्दिश्य श्रीकृष्णेन पठितं पद्यं तत्र स्थितेन श्रुतिधरेण कामरूपदेशीयकीरेण तदेव पद्यं पठितं 'स्नेहेन दीप्तापीत्यादि' श्रुत्वा रुक्मिण्याह—सुणम्हेत्यादि । ततः 'पिङ्गलामनुसृत' इत्यादि पद्यमपि श्रीकृष्णेन पठितं कीरमुखात् पुनः श्रुत्वाह—हे माधवीत्यादि ।

चन्द्रावली—माहवि, आअण्णिदं तुए ! [ माधवि, आकर्णितं त्वया ! ]

माधवी—ण केअलं आअण्णिदं आअलिदं अ । [ न केवलमाकर्णितमाकलितञ्च । ]

चन्द्रावली—

अंतेउरम्मि सच्चा जइ वसइ सुहं तदो कहिं सहि मे ।
इअणं कुंडिणवइणो पहिणोमि घरे उवाएण ॥ ७ ॥
[ अन्तःपुरे सत्या यदि वसति सुखं तदा कुत्र सखि मे ।
इत्येनां कुण्डिनपतेः प्रहिणोमि गृहे उपायेन ॥ ]

माधवी—साहु मंतिदं भट्टदारिए । [ साधु मन्त्रितं भर्तृदारिकया । ]

चन्द्रावली—अम्महे ! [1]वंचणविज्जावेअक्खणं । जं अप्पमत्ताओ वि भामिदह्म अह्मे । ता एण्हिं हेममंदिरं गच्छह्म । [ अहो वञ्चनविद्यावैचक्षण्यम् । यदप्रमत्ताः अपि भ्रामिता स्म वयम् । तदिदानीं हेममन्दिरं गच्छामः । ] ( इति निष्क्रान्ते )

( ततः प्रविशति कृष्णः सपरिजना राधा च )

कृष्णः—( सानन्दम् )

सुतनु किञ्चिदुदञ्चय लोचने
[2]चलचकोरचमत्कृतिचुम्बिनी ।
स्मितसुधाञ्च सुधाकरमाधुरी-
विधुरताविधयेऽद्य धुरन्धराम् ॥ ८ ॥

राधा—( सलज्जम् ) सुंदर, अलं इमिणा मुहमेत्तवत्तिणा पिअत्तणेण । [ सुन्दर, अलमनेन मुखमात्रवर्त्तिना प्रियत्वेन । ]

( इति संस्कृतेन )

---

अन्तःपुरे इति । कुण्डिनपतेर्मम पितुः ॥ ७ ॥

सुतन्विति । हे सुतनु अद्य लोचने किञ्चिदुदञ्चय । कीदृशे—चलेत्यादि । 'चलचकोरचमत्कृतिकारणा' इति पाठे त्वयेत्यर्थः । स्मितसुधाञ्च उदञ्चय । कीदृशीम्—सुधाकरश्चन्द्रस्तस्य माधुर्याः विधुरता म्लानता तस्या विधाने धुरन्धरां निपुणाम् । पदोच्चयं नाम नाटकभूषणस्य प्रकारान्तरमिदम् । तथाहि—'उच्चयोऽर्थानुरूपो यः पदानां सः पदोच्चयः' इति ( सा० द० ६।१८० ) कश्चिदाह । अत्रानुरूपाणां पदानामुच्चयः ॥ ८ ॥

---

१. वेअक्खणनं—अ० । २. चमत्कृतिवन्दिनी—ब० ।

जगत्त्रयचमत्कारी दत्तो मे देव यस्त्वया ।
स मूकः साम्प्रतं वृत्तः प्रेमोड्डामरडिण्डिमः ॥ ९ ॥

कृष्णः—प्रिये मैवं ब्रवीः ।

सन्तु भ्राम्यदपाङ्गभङ्गिखुरलीखेलाभुवः सुभ्रुवः
स्वस्ति स्यान्मदिरेक्षणे क्षणमपि त्वामन्तरा मे कुतः ।
ताराणां निकुरम्बकेण वृतया श्लिष्टेऽपि सोमाभया
नाकाशे वृषभानुजाश्रियमृते निष्पद्यते स्वच्छता ॥ १० ॥

नववृन्दा—चारुमुखि, सोपचारेयं नोक्तिमुद्रा ।

कृष्णः—प्रिये, त्वदास्यं पश्यतो मे नोपमानवस्तूनि हृदयमारोहन्ति । यतः—

धत्ते न स्थितियोग्यतां चरणयोरङ्केऽपि पङ्केरुहं
नाप्यङ्गुष्ठनखस्य रत्नमुकुरः कक्षासु दक्षायते ।
चण्डि त्वन्मुखमण्डलस्य परितो निर्मञ्छनेऽप्यञ्जसा
नौचित्यं भजते समुज्ज्वलकला सान्द्रापि चन्द्रावली ॥ ११ ॥

---

जगदिति । हे देव त्वया मे यः प्रेमोड्डामरडिण्डिमो डिण्डिमस्य घोषणारूपो दत्तः स साम्प्रतं मूको वृत्तः ॥ ९ ॥

सन्त्विति । भ्राम्यदपाङ्गस्य नेत्रान्तस्य भङ्ग्या या खुरली अभ्यासस्तजन्यखेलाया भूरुत्पत्तिर्यासां तथाभूताः सुभ्रुवः सन्तु । हे मदिरेक्षणे । 'मत्तश्चकोरो मदिरः' । त्वां विना मे क्षणमपि स्वस्ति कुतः स्यात् । ताराणां निकुरम्बकेण समूहेन वृतयापि सोमाभया चन्द्रावल्या पक्षे चन्द्रदीप्त्या श्लिष्टे आलिङ्गितेऽप्याकाशे वृषभानुजां ज्येष्ठमासीयसूर्यजातां श्रियमृते स्वच्छता न निष्पद्यते । साम नाम सन्ध्यन्तरमिदम् । तथा च—'भवेत् साम प्रियं वाक्यं स्वानुवृत्तिप्रकाशनम् ।' ( ना० चं० का० १२९ ) अत्र कृष्णेन स्वहृदयानुवृत्तिप्रकाशनात् साम ॥ १० ॥

इयमुक्तिमुद्रा न सोपचारा किन्तु हृदयङ्गमा सत्यैव । उपमानवस्तुनि पद्मरत्नमुकुरचन्द्रादीनि तव चरणाङ्गुष्ठनखमुखानां केनाप्यंशेन सदृशानि न भवन्तीत्याह—धत्ते इति । चरणयोरङ्के चिह्नेऽपि पङ्केरुहं स्थितियोग्यतां न धत्ते कुतश्चरणे । रत्नस्य मुकुरो दर्पणः । कक्षासु तुल्यतासु न दक्षायते तदा कुतस्तस्योपमानता । चण्डीति सम्बोधनं प्रीत्यातिशयबोधकम् । यथार्थभाषणेऽपि मुखमात्रवर्तिनेत्यादिना चण्डि मानं करोषि त्वन्मुखमण्डलस्य समुज्ज्वलकलेत्यादि पूर्णचन्द्रावली निर्मञ्छनेऽप्यौचित्यं न भजते कुत उपमानयोग्यता । सिद्धिर्नाम नाटकभूषणं कस्यचिन्मतेन । तथा च—

( प्रविश्य माधव्या सह चन्द्रावली )

चन्द्रावली—माहवि, सुदं तुए ! [ माधवि, श्रुतं त्वया ! ]

माधवी—अध इं । [ अथ किम् । ]

कृष्णः—( पुरोऽवलोक्य ) पश्यत पश्यत देवीयमदवीयसीति ।

इति सर्वे ससम्भ्रमेणाभ्युत्थानं नाटयन्ति ]

चन्द्रावली—( उपसृत्य ) हला सच्चभामे, तादेण सत्ताजिदेण तुज्झ पेसिदं अच्चरिअं मणिंदं विलोइदुं आअदह्मि । [ सखि सत्यभामे, तातेन सत्राजितेन तव प्रेषितम् आश्चर्यमणीन्द्रं विलोकितुमागताऽस्मि । ]

( नववृन्दा कृष्णकरान्मणिमुत्तार्य दर्शयति )

चन्द्रावली—सुदं मए मणिंदो एसो छीरसाअरमंथणे समुप्पणो । [ श्रुतं मया मणीन्द्र एष क्षीरसागरमन्थने समुत्पन्नः । ]

मधुमङ्गलः—देइ, एव्वं एदं । [ देवि, एवमेतत् । ]

चन्द्रावली—अण्णं वि तत्थ एक्कं अच्चरिअं आसी [1]। [ अन्यदपि तत्रैकमाश्चर्यमासीत् । ]

नववृन्दा—देवि, तत् कीदृशम् ?

चन्द्रावली—धण्णंतरिणो हत्थादो अमिअकुंभे दाणएहिं आअड्डिअ णीदे अय्यउत्तेण किंपि अउपुव्वं रूवं पअडिदं । जस्स मोहिणी त्ति विक्खादी । [ धन्वन्तरेः हस्तादमृतकुम्भे दानवैराकृष्य नीते आर्यपुत्रेण किमप्यपूर्वं रूपं प्रकटितम् । यस्य मोहिनीति विख्यातिः । ]

कृष्णः—( स्वगतम् ) नूनमभिज्ञातोऽस्मि देव्या । यदकाण्डे मोहिनी प्रस्तूयते ।

चन्द्रावली—जहत्थणामा सा क्खु मुत्ती जाए जोईसरो संकरो वि सुठ्ठु मोहिदो, तत्थ अम्हाणं का कधा ! [ यथार्थनामा सा खलु मूर्तिः यया योगेश्वरश्शङ्करोऽपि सुष्ठु मोहितस्तत्रास्माकं का कथा ! ]

---

'बहूनां कीर्तनं सिद्धिरभिप्रेतार्थसिद्धये ।' ( सा० द० ६।१८६ ) अत्र स्पष्टमेव गुणकीर्तनम् ॥ ११ ॥

अदवीयसी अदूरस्था समीपवर्तिनीत्यर्थः ।

स्त्रीवेषं धृत्वाऽऽगतोऽहं देव्या अभिज्ञातोऽस्मि । उन्नीतं तर्कितम् । तां मोहिनीम् । श्रीकृष्ण एव किं स्त्रीवेषं कृत्वा मया सहागत्यात्र प्रविष्ट इति ज्ञापनार्थं वाह्य एव सेर्ष्यं भ्रूभङ्गेन कृष्णमीक्षते ।

---

1. आअड्डिठ–अ० ।

सत्या:—( स्वगतम् ) एदं दुरूहं संविहाणअं कहं देइए उण्णीदं ! [ एतद्दुरूहं संविधानकं कथं देव्या उन्नीतम् ! ]

चन्द्रावली—( सस्मितम् ) सहि सच्चभामे, किं सो उवाओ अत्थि जेण अह्मे वि तं पेक्खह्म । [ सखि सत्यभामे, किं स उपायोऽस्ति येन वयमपि तां पश्यामः । ]

( राधिका सेर्ष्यं भ्रूभङ्गेन कृष्णमीक्षते )

कृष्णः—( स्वगतम् ) साक्षादेवं गतस्य मम वाङ्मात्रेणापि वञ्चनचातुरी सत्यमातुरीबभूव । ( प्रकाशम् ) देवि, किमद्य मां प्रत्यभिज्ञातुं क्षमासि न वेति परीक्षणाय मयेदं नाट्यमङ्गीकृतम् ।

चन्द्रावली—( कृत्रिमसम्भ्रममभिनीय ) हंत ! अज्जपुत्तो ज्जेव्व एसो । [ हन्त ! आर्यपुत्र एव एषः । ] ( इति शिरो नामयति )

मधुमङ्गलः—भो पिअवअस्स, तुमं पच्चाहिजाणंदीए जिदं, अम्ह देइए ता अलं एत्थ चउरंमण्णत्तणेण । [ भोः प्रियवयस्य, त्वां प्रत्यभिजानन्त्या देव्या जितं, तदलमत्र चतुरम्मन्यत्वेन । ]

माधवी—अज्ज, कालभुअंगदट्ठे कुलिसप्पहारो एसो । [ आर्य, कालभुजङ्गदष्टे कुलिशप्रहार एषः । ]

चन्द्रावली—मुद्धे माहवि, महूसवे वि कीस खिज्जेसि । णं दुल्लहं रूवामिअं पिवेहि । [ मुग्धे माधवि, महोत्सवेऽपि कस्मात् खिद्यसे एनं दुर्लभं रूपामृतं पिव । ]

राधा—( स्वगतम् ) हंत ! अणुहूदा पारवस्सस्स पराकट्ठा । [ हन्त ! अनुभूता पारवश्यस्य पराकाष्ठा । ]

चन्द्रावली—देअ, इमाए मंदाए मणिदस्सणुक्कंठाए तुअम्मि अवराहिणी किदह्मि मंदभाइणि । [ देव, अनया मन्दया मणिदर्शनोत्कण्ठया त्वयि अपराधिनीकृतास्मि मन्दभागिनी । ]

कृष्णः—देवि, यथाकाममुपालभ्यताम् । त्वत्कारुण्येव नः शरणम् ।

( नेपथ्ये )

हला ! सुदं सोदव्वं । [ सखि, श्रुतं श्रोतव्यम् । ]

---

वञ्चनचातुरी आतुरी व्यक्ता बभूवेत्यर्थः । पुरा श्रीकृष्णत्वेन ज्ञानाभावसूचनार्थं शिरो नमयति । कालभुजङ्गदष्टे जने कुलिशं वज्रं । सर्पदंशनस्थानीयः सत्यायां श्रीकृष्णस्य गाढानुरागस्तत्र वज्राघातः स्त्रीवेषधारणादिपूर्वकवञ्चनादिचातुर्यम् ।

मधुमङ्गलः—एसो कंचुइहत्थे कीरो पठेदि । [ एष कन्चुकीहस्ते कीरः पठति । ]

कृष्णः—( स्वगतम् ) मेधाविना कीरेणैव कृतेयं कदर्थना ।

( पुनर्नेपथ्ये 'अंते उरम्मि सच्चा' इत्यादि )

राधा—( निशम्य । सखेदमात्मगतम् ) साहु रे कीर, वाढ़मणुग्गहिदह्मि ता दाणिं दुल्लहाहिट्ठदाणदक्खिणं तित्थवरं कालिअदहं प्पविसिअ अप्पाणं सप्पाणं तुरिअं उवहरिस्सं [ साधु रे कीर, वाढमनुगृहीतास्मि । तदिदानीं दुर्लभाभीष्टदानदक्षिणं तीर्थवरं कालियह्रदं प्रविश्यात्मानं सर्पेभ्यस्त्वरितमुपहरिष्यामि । ]

( इति नववृन्दापिङ्गलाभ्यां सह निष्क्रान्ता )

चन्द्रावली—देअ, एक्कं विण्णविस्सं । [ देव, एकं विज्ञापयिष्यामि । ]

कृष्णः—देवि, काममाज्ञापय ।

चन्द्रावली—देअ, तुम्ह विलाससोक्खाणां वाहादेण किदमहापावह्मि । ता कारुण्णेण आणवेहि जधा गोट्ठवइणो गोट्ठं गदुअ वसंती तुमं सुहिणं करेमि । [ देव, तव विलाससौख्यानां व्याघातेन कृतमहापातकास्मि । तस्मात् कारुण्येनाज्ञापय यथा गोष्ठपतेर्गोष्ठं गत्वा वसन्ती त्वां सुखिनं करोमि । ]

( नेपथ्ये )

एष क्षिप्रं मधुरिपुपरिस्वङ्गरङ्गाय लुब्धो
गोष्ठाधीशः कनकशकटीपृष्ठपल्यङ्कसङ्गी ।

---

'अन्तःपुरे सत्या' इति माधवीं प्रति स्वपितुर्गृहे श्रीराधाया नयने यद् रुक्मिणीवाक्यं कीरमुखात्तच्छ्रुत्वा श्रीराधाह—साध्विति । दुर्लभाभीष्टदानमत्र मरणं तत्र दक्षिणमनुकूलं तीर्थवरं कालियह्रदं प्रविश्य । सर्पाणां सर्पेभ्यः । साहसं नाम सन्ध्यन्तरमिदम् । तथा च—'स्वजीवितनिराकाङ्क्षो व्यापारः साहसं भवेत् ।' ( ना० चं० का० १२९ ) । अत्र राधाया कालियह्रदप्रवेशोद्योगः साहसम् ।

देवेत्यादि । अर्थापत्तिर्नाम नाटकभूषणस्य प्रकारान्तरमिदम् । तथा हि—
उक्तार्थानुपपत्त्यान्यो यस्मिन्नर्थः प्रकल्प्यते ।
वाक्यान्माधुर्यसंयुक्ता सार्थापत्तिरुदाहृता ॥ ( ना० चं० का० १६५ )

अत्र गोष्ठगमनार्थस्यान्यथानुपपत्त्या सत्यासङ्गमनिषेधः प्रकल्प्यते ।

एष इति । एष गोष्ठाधीशो नन्दः द्वारकाद्वारस्य वीथीं मार्गं प्रविशति । कीदृशः—मधुरिपु इत्यादि । श्रीकृष्णपरिकरभक्तादीनां प्राणान्तदुःखादिकमिव प्रदर्श्य परिणामे तदेव सुखमयं भवतीत्यपि वैष्णवसिद्धान्तं युधिष्ठिरप्रह्लादादी-

बन्धुश्रेणीव्रतपरिसरः पौर्णमासीयशोदा
पूर्णाभ्यासः प्रविशति मुदा द्वारकाद्वारवीथीम् ॥ १२ ॥

कृष्णः—( सानन्दम् ) सखे, देव्याः सदभिध्यानेन सकुटुम्बो गोष्ठाधीशः प्राप्तः । तदेहि तत्र गच्छावः । ( इति निष्क्रान्तौ )

चन्द्रावली—समये संवुत्तो मे बांधवानां समाअमो । [ समये संवृत्तः मे बान्धवानां समागमः । ]

( नेपथ्ये )

इयमुद्दिश्यमानाध्वा पौर्णमास्या व्रजेश्वरी ।
परीता परिवारेण रोहिणीमन्दिरं ययौ ॥ १३ ॥

माधवी—दिट्ठिआ दिट्ठिआ जं सुदतुम्हदुक्खा ठक्कुरानी रोइणो । [ दिष्ट्या दिष्ट्या यत् श्रुततवदुःखा ठक्कुराणी रोहिणी । ]

चन्द्रावली—ता गदुअ गुरूणं वंदेणं कुणह्म । [ तद्गत्वा गुरूणां वन्दनं कुर्मः ] ( इति परिक्रम्य ) एदं च्चेअ राउलाणोए रोहिणीए अंतेउरं । [ एतदेव[1] राज्याः रोहिण्या अन्तःपुरम् ]

( नेपथ्ये )

नयनयोः स्तनयोरपि युग्मतः परिपतद्भिरसौ पयसां भरैः ।
अहह वल्लवराजविलासिनी स्वतनयं प्रणयादभिषिञ्चति ॥ १४ ॥

चन्द्रावली—एसो गोउलेसरी अंकम्हि णिविठ्ठो अज्जउत्तो । ता खणं एत्थ चिठ्ठह्म । [ एषः गोकुलेश्वर्यङ्के निविष्ट आर्यपुत्रः । तस्मात् क्षणमत्र तिष्ठामः । ]

( ततः प्रविशति यथानिर्दिष्टा यशोदा पौर्णमासी रोहिणी मुखरादयश्च )

यशोदा—( मूर्ध्नि हरिमाघ्राय । सास्रम् ) जाद, णूणं विसुमरिदह्मि । जं चिरं ण मे उब्भालणं किदं । [ जात, नूनं विस्मृतास्मि । यच्चिरं न मे उद्भालनं कृतम् । ]

---

नामिवात्र प्रकरणे विवेचनीयम् । योगमायाकल्पितश्रीकृष्णतत्प्रेयस्योश्छलकपटौत्सुक्यदैन्यचापल्याद्यनेकप्रकारं श्रीराधाया श्रीकृष्णप्रेयसीशिरोमणित्वञ्च बोधयति ॥ १२ ॥

दिष्ट्येति । अत इयं यशोदापौर्णमास्योर्निकटे तव दुःखं कथयिष्यतीति भावः नयनयोरिति । नयनयोः स्तनयोर्युग्माज्जलदुग्धक्षरणजनितश्रीकृष्णभिषेकं वात्सल्यस्योत्कर्षञ्च व्यनक्ति । आनन्दं नाम निर्वहणसन्ध्यङ्गमिदम् । तथा च—'आनन्दोऽभीष्टसम्प्राप्तिः' (ना०चं०का० ११५) । अत्र यशोदाया आनन्दः ॥१४॥

उद्भालनं वार्त्तादिकं कृतम् । शुभमनुध्यायतां भवतीनां सम्बन्धे यथाऽहं

---

१. इदमेव—ब० ।

कृष्णः—( सबाष्पम् ) अम्ब, कथमेवं व्याहरन्ती लज्जितमपि मां लज्जयसि !

मुखरा—भअवदि, बह्मण्डकोडिणाहो त्ति तुह्तो सुदो वि कण्हो मम उण गोअणाअरो त्ति पडिभादि। [ भगवति, ब्रह्माण्डकोटिनाथ इति त्वत्तः श्रुतोऽपि कृष्णो मम पुनर्गोपनागर इति प्रतिभाति। ]

कृष्णः—( स्मित्वा ) आर्ये मुखरे, हृदयङ्गममुक्तं किन्तु शुभमनुध्यायतां यथा भूतोऽपि तथा मङ्गलभाजनं भवेयम्।

पौर्णमासी—हन्त ! चिरादङ्कुरितानि मद्भागधेयबीजानि यदद्य यशोदोत्सङ्गमारूढं माधवं पश्यामि।

कृष्णः—अम्ब, मया संवर्द्धितं पशुपक्षिणां कदम्बं किं वस्तत्र सौख्यमातनोति ?

पौर्णमासी—मुकुन्द, दुःखे वक्तव्ये किन्तु सौख्यं ब्रवीषि !

यशोदा—( संस्कृतेन )

> यः पारीपरिवाहितेन कपिलाक्षीरेण खिन्नस्त्वया
> पुष्टः प्रेमभराद्विनष्टजननीसङ्गः कुरङ्गीशिशुः।
> त्वामप्रेक्ष्य स कातरः प्रतिदिशं मुक्तार्तनादस्तुदन्
> मर्माणि ब्रजवासिनां वितनुते शार्दूलविक्रीडितम्॥ १५॥

पौर्णमासी—

> कस्तान्पश्यन्भवदुपहतस्निग्धपिच्छावतंसान्
> कंसाराते न खलु शिखिनः खिद्यते गोष्ठवासी।
> उन्मीलन्तं नवजलधरं नीलमद्यापि मत्वा
> ये त्वामन्तर्मुदितमतयस्तन्वते ताण्डवानि॥ १६॥

---

प्रतिभामि तथा गोकुलनागरत्वेन पुनरपि मङ्गलभाजनं भवेयम्। मङ्गलभाजनत्वकथनात् गोकुलविलासस्यैव सर्वोत्कर्षत्वमवश्यभावित्वञ्च कथितम्।

यः पारीति। पारी दुग्धभाण्डं तत्परिवाहेन धाराप्रवाहेन कपिलादुग्धेन जननीसङ्गाभावात् खिन्नः कुरङ्गीशिशुः त्वया पुष्टः सः त्वामप्रेक्ष्य कातरः सन् ब्रजवासिनां मर्माणि तुदन् शार्दूलविक्रीडितं दुःखदायित्वं व्याघ्रवच्चरितं वितनुते॥ १५॥

कस्तानिति। को वा गोष्ठवासी तान् शिखिनः पश्यन्न खिद्यते। भवता उपहतं कृतं स्निग्धपिच्छैरवतंसं शिरोभूषणं येषां तान्। ये शिखिनः उन्मीलन्तमुदितं नीलं नवजलधरमपि त्वां मत्वा ताण्डवानि तन्वते॥ १६॥

कृष्णः ( क्षणं तूष्णीं स्थित्वा ) भगवति, कच्चिदमी स्वस्तिमन्तो मम वयस्याः ?

पौर्णमासी—भवद्विलोकनायोत्कण्ठया ते व्रजेन्द्रेण सार्द्धं सुधर्मा-मध्यासते। ततस्त्वरया पूर्णकामाः क्रियन्ताम्।

कृष्णः—यथादिशन्ति तत्रभवत्यः ( इति परिक्रम्य। स्वगतम् ) मातुर्वन्दनाय ललितापद्मयोरुपसत्तिरत्रोचिता। ( इति निष्क्रान्तः )

चन्द्रावली—उपसप्पणस्स एसो ओसरो। [उपसर्पणस्य एष अवसरः] ( इति तथा करोति )

पौर्णमासी—( सहर्षम् ) गोष्ठेश्वरि, पुरस्तादियं चन्द्रावली ! ( इत्युपसाद्य भुजाभ्यामावृणोति )

यशोदा—( सस्नेहमुत्थाय ) वच्छे, दिट्ठिआ पुणो वि दिट्ठासि ! [ वत्से, दिष्ट्या पुनरपि दृष्टासि। ] ( इति कण्ठे गृह्णाति )

चन्द्रावली—( यशोदामभिवाद्य। सास्रम् ) अम्म, इदो वि भूइट्ठो दे अण्णो को क्खु कालुण्णविलासो जं अप्पणो पाअप्फंससोहग्गाणं आअणीकिदह्मि। [ अम्ब, इतोऽपि भूयिष्ठस्तेऽन्यः कः खलु कारुण्यविलासः यदात्मनः पादस्पर्शसौभाग्यानां भाजनीकृतास्मि। ]

यशोदा—वच्छे, अवि णाम ण विसुमरिदो सो अम्ह गोउलणिवासो। [ वत्से, अपि नाम न विस्मृतः सोऽस्माकं गोकुलनिवासः। ]

चन्द्रावली—अम्म, मादुकोडिसिणिद्धाओ जहि तुम्हे वसेध तत्थ अवत्थाणकल्लाण का णाम पामरी वि ण विसुमरेदि। [ अम्ब, मातृकोटिस्निग्धाः यत्र यूयं वसथ तत्रावस्थानकल्याणं का नाम पामरी अपि न स्मरति।]

मुखरा ( चन्द्रावलीमालिङ्ग्य ) हा ! राहि, चिरादो तुमं च्चेअ ण दिट्ठासि। [ हा ! राधे, चिरात् त्वमेव न दृष्टासि। ] (इति मुक्तकण्ठं रोदिति)

यशोदा—( सव्यथम् ) हंत ! धात्तिए, पत्थुदा कीस एसा सोअणअरग्गलकुंचिआ राहित्ति अक्खरजुअली। [ हन्त ! धात्रिके, प्रस्तुता कस्मादेषा शोकनगरार्गलकुञ्चिका राधेत्यक्षरयुगली। ]

---

उपसत्तिरागमनमुचितेति विचार्य नयनार्थं कथितं ज्ञेयम्। यया मन्दभागिन्या मया एकवारमपि न दृष्टा त्वमिति। सत्यभामायां द्वेषस्तु राधिकात्वेन ज्ञानाभावादेव रुक्मिण्याः एवं राधिकाया अपि स्वभगिनीत्वेन रुक्मिण्यां ज्ञानाभावादेव। अतएव आदावपि—'हा ! भगिनि रुक्मिणि हा भगिनि राधे' इत्यादि राधारुक्मिण्योः फूत्कारं मुहुर्मुहुः श्रुतम्। विन्ध्याचलकन्यात्वेनाभिमानवत्यो राधारुक्मिण्योरेव विलापादिकं न तु वृषभानुचन्द्रभानुकन्ययोरिति

चन्द्रावली—हा वहिणिए, अंधम्मि मंदभाइणी जाए एक्कवारं पि ण दिट्ठा तुमं। [ हा भगिनिके अन्धास्मि मन्दभागिनी यया एकवारमपि न दृष्टा त्वम्। ]

रोहिणी—हा तिल्लोअसुन्दरि वच्छे, कहिं गदासि ? [ हा ! त्रैलोक्य-सुन्दरि वत्से, कुत्र गतासि ? ]

पौर्णमासी—हा ! हन्त ! शतकोटिकठोरास्मि यदद्यापि जीवामि।

रोहिणी—( सधैर्यम् ) पिअसहि जसोए, तप्पइ बाढं चंदाअली। ता सोअं मुक्किअ [1]आससिज्जउ। [ प्रियसखि यशोदे, तप्यति बाढं चन्द्रावली। तत् शोकं मुक्त्वाऽऽश्वसिहि। ]

यशोदा—( चन्द्रावलीमालिङ्ग्य ) अम्ब मा झीणेहि। अप्पडिकादव्वो एसो अत्थो। [ अम्ब, मा क्षीणा भव। अप्रतिकार्यः एषोऽर्थः। ]

( ततः प्रविशतः कञ्चुकिनावनुसरन्त्यौ वियुक्ते ललितापद्मे )

पद्मा—( सव्यतः प्रेक्ष्य साश्चर्यम् ) का एसा अउरुव्वरूवा दिट्ठपुव्वत्ति-पडिभादि। [ कैषाऽपूर्वरूपा दृष्टपूर्वेति प्रतिभाति। ] ( इत्युपसृत्य। सास्रम्। ) सुंदरि, तुमं पेक्खिअ पिअसहीं ललिदं सुमरंदी पेम्मघुम्मिदह्मि। [ सुन्दरि, त्वां प्रेक्ष्य प्रियसखीं ललितां स्मरन्ती प्रेमघूर्णिताऽस्मि। ]

ललिता—( सगद्गदम् ) सहि, अवि णाम पोम्मासि ? [ सखि, अपि माम पद्मासि ? ]

---

रहस्यम्। अनयोः पितृव्यकन्यात्वेन भगिनीत्वेऽपि न सहोदरभगिनीत्वम्। अत्रैवाग्रे ललितां प्रति रुक्मिणीवाक्यं—'यथा मे सोदर्यौ लोकः क्षणमपि ययौ नाक्षिपदवी'मित्यनेन राधायाः सोदरात्वं वक्तव्यम्। जाम्बवतः प्रमुखात्तयोः विवाहवार्त्तां श्रुत्वा विन्ध्याचलस्यागमनमपि वक्तव्यम्। एवं श्रीराधिका विरह-जर्जरितहृदयानां ललितादीनां विषादवाक्यानन्तरं रुक्मिण्याः सखेदवाक्यम्—'हा भगिनिके, अन्धास्मि' इत्यादि। अत्र एकवारमपि दर्शनाभावः व्रजस्थराधा-चन्द्रावल्योर्न सम्भवेदिति च रोहिण्याह—'हा त्रैलोक्यसुन्दरीति'।

शतकोटिकठोरा वज्रादपिकठोराऽस्मि। राधामदृष्ट्वा यदद्यापि जीवामि। बाढमतिशयम्। श्रीकृष्णेनन श्रीनन्दागमनवार्त्तां श्रुत्वा ललितां पद्माञ्चानेतुं यदुक्तं तदेवाह—ततः प्रविशतीति। कस्मात्ते वियुक्तेति। व्रजे ललितादिषु प्रविश्य विहारादिकृतानां जाम्बवत्यादीनामेकाकारतया तद्रूपत्वेन ज्ञानात् तथोक्तिर्युक्तैव न तु मूलभूतललितादीनाम्। तथात्वे ग्रन्थस्यादिमध्यावसानेषु व्रजरमण्यः

---

1. आसारिज्जदु—अ०।

पद्मा—( सावेगम् ) हंत कधं ललिदा ज्जेव्व । [ हन्त ! कथं ललितैव ] ( इति भुजाभ्यां गृह्णाति )

ललिता—( गाढं परिष्वज्य । सास्रम् ) पिअसहि चंदाअलि, कीस दे विजुदा ? [ प्रियसखि चन्द्रावलि, कस्मात्ते वियुक्ता ? ]

पद्मा—सहि, मंदभाइणी ह्मि । [ सखि, मन्दभागिन्यस्मि । ]

कञ्चुकी—इदं भगवत्या रोहिण्या मन्दिरम् । तदत्र प्रविशतां भट्टिन्यौ ।

उभे—भइण्णौ उहे णूणं राउलाणीए वंदणस्स [1]आणीदह्म । [ भगिन्यावुभे नूनं राज्ञ्याः वन्दनायानीते स्वः ]

रोहिणी—भअवदि, का क्खु एसा ललिदाविब्भमं उप्पादेदि । [ भगवति, का खल्वेषा ललिताविभ्रममुत्पादयति । ]

पौर्णमासी—( सवैयग्र्यम् ) हन्त ! पश्यत सैवेयं राधिकायाः प्राणसखी । ( इति सर्वाः पुरो धावन्ति )

ललिता—अम्महे ! कधं गोउलेसरीपमुहं एदं सव्वं ज्जेअ गोउलबंधुउलं । [ अहो ! कथं गोकुलेश्वरीप्रमुखमिदं सर्वमेव गोकुलवन्धुकुलम् । ] ( इति विक्रोशन्ती सर्वासां पादान्तेषु पतति । सर्वाः साक्रन्दमुत्थाप्य कण्ठे गृह्णन्ति । )

चन्द्रावली—हा सहि ललिदे, पराणं धारेसि । [ हा सखि ललिते, प्राणान् धारयसि । ] ( इत्यालिङ्गति )

ललिता—( सहर्षाद्भुतम् ) कधं पिअसही चंदाअली । ( इत्यालिङ्ग्य ) एसो अभिअसाअरे दिव्वचिंतामणिलाहो जो क्खु गोउलकुडुंबेसु तुम्ह संगमो । [ कथं प्रियसखी चन्द्रावली ! ( इत्यालिङ्ग्य ) एष अमृतसागरे दिव्यचिन्तामणिलाभः यः खलु गोकुलकुटुम्बेषु तव सङ्गमः ]

चन्द्रावली—ललिदे, तुमं जेव्व सा वहिणी लद्धासि । [ ललिते, त्वमेव सा भगिनी लब्धाऽसि । ]

ललिता—हा सहि राहे, तुमं च्चेअ दुल्लहदंसणा संवुत्ता । [ हा सखि राधे, त्वमेव दुर्लभदर्शना संवृत्ता । ] इति मुखरामालिङ्ग्य रोदिति )

पद्मा—( चन्द्रावलीमालिङ्ग्य ) हा पिअसहि, दिठ्ठिआ दिठ्ठासि । [ हा प्रियसखि, दिष्ट्या दृष्टासि । ]

---

पुररमण्य एकतत्वा अपि विग्रहादिभिर्भिन्ना एव इत्यादिना कथितं तासां भिन्नाकृतित्वं न घटते । भगिन्यौ महिष्यावुभे ललितापद्मे । विभ्रममुत्पादयतीति ।

---

1. आणीदम्ह–अ० ।

पौर्णमासी—पश्येयं रुक्मिणीमूर्तिः पद्मामाश्लिष्य बाष्पैर्विद्रवन्तीव लक्ष्यते।

ललिता—( सविस्मयम् ) भअवदि, पिअसही चंदाअली ज्जेव्व किं खु रुप्पिणिन्ति सुणीअदि। [ भगवति, प्रियसखीचन्द्रावल्येव किं खलु रुक्मिणीति श्रूयते। ]

पौर्णमासी—अथ किम्।

ललिता—तदो सूरदिण्णा अव्वाइणा सच्चभामा णाम कुअरी कधं इमाए दुक्खणिदाणं त्ति पसिद्धी। [ तदा सूर्यदत्ताऽर्वाचीना सत्यभामा नाम कुमारी कथमस्या दुःखनिदानमिति प्रसिद्धिः। ]

पौर्णमासी—वत्से चन्द्रावलि, तालाङ्कमातुर्मुखादस्माभिरपि एतावधिराकर्णितः। तदद्य मा चिन्तय।

यशोदा—वच्छे, राही-ठाणे तुमं वट्टसि, ता दाणिं अम्हाणं पुरदो का दे चिंदा णाम। [ वत्से, राधास्थाने त्वं वर्तसे, तदिदानीमस्माकं पुरतः का ते चिन्ता नाम। ]

चन्द्रावली—सहि ललिदे, सुणाहि। [ सखि ललिते, शृणु ] ( इति संस्कृतेन )

> अपि प्राणेभ्यो मे भवितुमुचितो यः प्रियतरः
> स सोदर्यो लोकः क्षणमपि ययौ नाक्षिपदवीम्।
> दुरन्ताधिश्रेणीवितरणविधौ यः खलु कृती
> स साक्षादत्रासीदहह सहवासी मम परः॥ १७॥

( प्रविश्य सम्भ्रान्ता बकुला )

बकुला—देइ, मए पुणो पुणो णिवारिदा वि सप्पभीसणं कालिअ-

---

लीलाशक्त्या यदपारसुखसमुद्रानुभवार्थं विच्छेदादिकं कृतं तदेव सुखमाह—सेत्यादिना।

सा भगिनी राधा। तालाङ्को तालदेवः। वत्से राधास्थाने त्वं वर्तसे। गोकुलवासिनान्तु चन्द्रभानुकन्यात्वेनैव तथा तथा कथनं तस्मादिदानीमस्माकं पुरतः का ते चिन्ता नाम।

अपीति। प्राणेभ्योऽपि प्रियतरो भवितुमुचितः सोदर्यो लोकोऽत्र राधा। स क्षणमपि अक्षिपदवीं न ययौ। यो लोकः दुरन्ताधिश्रेणी मनःपीडापरम्परा तस्यादाने कृती स परो लोकः मम सहवासी आसीत्। परो लोकोऽत्र सत्या॥ १७॥

दहं सप्पदि सच्चा । [ देवि, मया पुनः पुनः निवारिताऽपि सर्पभीषणं कालिय-ह्रदं सर्पति सत्या । ]

पौर्णमासी—दिष्ट्या पद्मिनीहृदुत्तापिका शीतवातावली व्यालाना-माननबिले विलीना ।

बकुला—दिट्ठं मए णअवुंदाविण्णत्तो भट्टा भेम्हलो विअ णं अणु-सप्पदि । [ दृष्टं मया नववृन्दाविज्ञप्तो भर्त्ता विह्वल इवैनामनुसर्पति । ]

सर्वाः—अलं विलंबारंहेण । फणिवासं गच्छेह्म । [ अलं विलम्बा-रम्भेण । फणिवासं गच्छामः । ] ( इति स्खलन्त्यो निष्क्रान्ताः )

( ततः प्रविशति पिङ्गलयाभ्यर्थ्यमाना राधा )

राधा—( संस्कृतेन ) ।

परतन्त्रतया समन्ततो मम रङ्गाय न शार्ङ्गिसङ्गमः ।
धिगिहापि पुनर्वियोगभीर्मृतिरेवाद्य गतिर्विनिश्चिता ॥ १८ ॥

पिङ्गला—भट्टिदारिए, ण क्खु एव्वं साहसं दे जुत्तं । [ भर्तृदारिके, न खल्वेवं साहसं ते युक्तम् । ]

राधा—( सावज्ञम् )

आलि कालिअदहेण दिठ्ठिणो रंजणं घणतरंगभंगिणा ।
सामलुज्जलभुअंगमंडली संगिणा मह चिरेण किज्जइ ॥ १९ ॥
[ सखि कालियह्रदेन दृष्टेः रञ्जनं घनतरङ्गभङ्गिना ।
श्यामलोज्ज्वलभुजङ्गमण्डली सङ्गिना मम चिरेण क्रियते ॥ ]
( इति वामाक्षिस्पन्दनमभिनीय । सोपालम्भं संस्कृतेन )
मद्वामदृष्टिलूता परिस्फुरन्ती समन्ततः कृपणा ।
आशाबन्धं तनुते प्राणपतङ्गोपरोधाय ॥ २० ॥

---

पद्मिनी कमलिनी । पक्षे रुक्मिणी । तस्या हृदुत्तापिका शीतपवनश्रेणी सर्पाणामाननगर्त्ते विलीना । पक्षे सत्या कालियह्रदे । श्रीकृष्णागमनं श्रुत्वाहुः सर्वाः वयं गच्छाम इति । परतन्त्रेति । समन्ततः परतन्त्रतया शार्ङ्गिसङ्गमो न रङ्गाय । श्रीकृष्णसङ्गेऽपि रङ्गाभावहेतुमाह—इहापि पुनः वियोगभीतिः ॥ १८ ॥

आलीति । मम दृष्टे रञ्जनमनुरागः चिरेण क्रियते । श्यामभुजङ्गसमूहसङ्गिना कालियह्रदेन मम दृष्टेरञ्जनं क्रियते इति मरणानुकूलतया श्रीकृष्णभुजवर्णसाम्यत्वेन च प्रीतिविषयतया ॥ १९ ॥

मद्वामेति । मम वामनेत्रलूता 'मकडी'ति ख्यातिः प्राणपतङ्गोपरोधाय आशाबन्धं तनुते । पक्षे—लूता तन्तुवितानम् ॥ २० ॥

पिङ्गला—आसण्णमंगलसंसि एदं ता मुहुत्तं पडिवालेहि। [आसन्न-मङ्गलशंसीदं [1]तन्मुहूर्तं प्रतिपालय।]

राधा—दिट्ठिमक्कडीए आसासे को मे वीसासो। [दृष्टिमर्कट्या आश्वासे को मे विश्वासः।] (इत्यवतारं नाटयति)

(ततः प्रविशति नववृन्दया सह कृष्णः)

कृष्णः—

गतिर्जाता या मे चिरविरहिणः प्राणशकुनेः
घनच्छायामेतां परिमलवतीं मूर्तिलतिकाम्।
क्षिपन्ती सद्यस्त्वं फणिविषकृशानौ कृशतरां
कठोरेणाकार्षीर्मयि किमनुकम्पालवमपि॥ २१॥

(इति हृदावगाहमभिनयति)

नववृन्दा—देव, सर्वानर्थहरोऽयं मणीन्द्रः सत्यापाणिमानीयताम्। (इति हरेर्मणिबन्धे मणिं बध्नाति।)

राधा—हद्धी! हद्धी! कधं मंदभाइणं इमं जणं दंदसूआ वि ण [2]डंसंदि। [हा धिक्! कथं मन्दभागिनमिमं जनं दंदशूका अपि न दंशन्ति।] (इति सर्पाननुसर्पति)

कृष्णः—(सम्भ्रमेणोपसृत्य) महासाहसिनि, किमेतदसौष्ठवमनुष्ठितम्? (इति पृष्ठतो भुजाभ्यां कण्ठं गृह्णाति)

राधा—(शोकादश्रुतिमभिनीय। सानन्दम्) दिट्ठिआ भुअंगजुएण [3]वेढ्ढिदह्मि। [दिष्ट्या भुजङ्गयुगेन वेष्टितास्मि।] (इति स्पर्शसुखमभिनीय) ठाणे समए उअआरो सव्वं पिअं होदि जं पण्णअप्फंसो वि सुहावेदि। [स्थाने समये उपकारी सर्वं प्रियं भवति यत् पन्नगस्पर्शोऽपि सुखयति।] (इति संस्कृतेन)

कृष्णभुजङ्गमिताहं विधिनाभिमतं किलानुकूलेन।

---

गतिरिति। चिरविरहिणी मे प्राणशकुनेर्या मूर्तिलतिका गतिर्जाता तमेतां मूर्तिलतिकां त्वं फणिविषरूपवह्नौ सद्यः क्षिपन्ती मयि अनुकम्पालवमपि नाकार्षीः॥ २१॥

दन्दशूकाः सर्पा अपि। स्थाने युक्तम्।

कृष्णेति। यातनावलिभिर्हेतुभिश्चिररात्राय चिररात्रिं व्याप्य कृतेयं यात्राऽनु-

---

1. तस्मान्मुहूर्तं-ब०। 2. डंसंति—ब०।
3. वेटिदह्मि—अ०।

चिररात्राय कृतेयं यात्रा मम यातनावलिभिः ॥ २२ ॥

नववृन्दा—दिष्ट्या कृष्णभुजाभिज्ञानमस्याः सम्बभूव ।

राधा—( दृशं दरोन्मील्य ) अम्मो मणिकंतिकिम्मीलिदमत्थओ वि एसो भुअंगो मं ण डंसेदि । ( अहो ! मणिकान्तिकिर्मीरितमस्तकोऽपि एष भुजङ्गो मां न [1]दंशति । )

नववृन्दा—

चक्राङ्कितस्य निर्मलमलयजपरिशीलिनो मणिं दधतः ।
कृष्णभुजगस्य[2] सुभगे कृष्णभुजस्य च गतो भेदः ॥ २३ ॥

कृष्णः—

त्रासितेन्दिरममन्दमाधुरी कन्दलैर्वपुरपूर्वमुज्झती ।
बन्धुराङ्गि जगदेव किं वृथा बन्ध्यनेत्रमसि कर्त्तुमुद्यता ॥ २४ ॥

राधा—( साचिकन्धरमवेक्ष्य ) हद्धी ! हद्धी ! हदा वि सुठ्ठु ज्जेव्व हदह्मि जं इमाए वराईए किदे एसो [3]तिल्लोअसोक्खआरी अप्पा सप्पदहे[4] तुए पारक्खत्तो । [ हा धिक् ! हा धिक् ! हतापि सुष्ठु एव हतास्मि यदस्या वराक्या कृते एष त्रैलोक्यसौख्यकारी आत्मा सर्पह्रदे त्वया प्रक्षिप्तः । ]

कृष्णः—( तीरमासाद्य राधाहस्ते रत्नमाबध्नन् सोपालम्भस्मितम् )

भजन्ती निस्त्रपे रागाद् भोगिनां स्वयमाशिषः ।
भोगिनीमां किमाशीर्भ्यस्त्वं वारयितुमुद्यता ॥ २५ ॥

---

कूलेन विधिनाऽहमभिमतं कृष्णभुजङ्गं कृष्णसर्पमिता प्राप्ता । वस्तुतः कृष्णस्य भुजं गमिता ॥ २२ ॥

मणिकान्तिकिर्मीरितमस्तको मणिकान्तिभिर्युक्तमस्तकोऽप्येषः । चक्रेति । हे सुभगे चक्राङ्कितस्य निर्मलचन्दनपरिशीलीनो मणिं दधत इत्यादिना भेदाभावेऽपि कृष्णभुजङ्गस्य कृष्णभुजस्य च भेदो दंशनदशनाभावतयैव गतः । श्लेषेण गतो गकारतो भेदः । कृष्णभुज इत्यत्र गकारो नास्ति कृष्णभुजग इत्यत्र गकारोऽस्तीति भेदः ॥ २३ ॥

त्रासितेति । अमन्दमाधुरीसमूहैस्त्रासिता इन्दिरा लक्ष्मीर्येन तादृशमपूर्वं वपुरुज्झती सती हे बन्धुराङ्गि जगद् बन्ध्यनेत्रञ्च कर्त्तुमुद्यतासि ॥ २४ ॥

वराकिन्या मम । भजन्तीति हे निस्त्रपे रागात् क्रोधात् स्वयं भोगिनां सर्पाणामाशिषः सर्पदंष्ट्राः भजन्ती । पक्षे—रागाद् भोगिनामस्माकमाशिषः कामान् भजन्ती स्वयमपि भोगिनी त्वमाशीर्भ्यः कामेभ्यः किं निवारयितुमुद्यता । 'स्त्रीत्वाशीर्हिताशंसाऽहिदंष्ट्रयो' रित्यमरः ॥ २५ ॥

---

१. दशति–अ० । २. भुजंगस्य–अ० ।
३. तिल्लोकसोक्ख–व० । ४. सप्पहदे–अ० ।

तदेहि माधवीमण्डपं प्रयावः ।

( इति पिङ्गलया सह निष्क्रान्तौ )

( ततः प्रविशति पौर्णमास्यादिभिरनुगम्यमाना विक्रोशन्ती यशोदा )

यशोदा—हंत अदिक्किदो वि सो हदासो कालिओ मह मंदभाइणीए किदे पुणो वि पुरावुत्तो । [ हन्त ! अतिक्रान्तोऽपि स हताशः कालियः मम मन्दभागिन्याः कृते पुनरपि परावृत्तः । ]

नववृन्दा—( स्वगतम् ) राधापारवश्यबाधानिरोधाय मया प्रणीतेयं चातुरी सिद्धा बभूव । ( प्रकाशम् ) हन्त ! परमार्याः समाश्वसत समाश्वसत । खेदं मुञ्चथ । यदेष सत्यामुद्धार्य तटीमवाप नागरिककेतुः ।

सर्वाः—( सगद्गदम् ) बाढं मङ्गलं मङ्गलम् । ( इति धैर्यं नाटयन्ति )

( नेपथ्ये )

त्रिभुवनगुरुमग्रे प्रेर्य राजीवयोनिं
कलयितुमधिमौलिं सत्वरः सात्वतानाम् ।
विशति पुरमपर्णापूर्णपार्श्वः परस्ताद्
वृषवरमधिरूढः खण्डशीतांशुचूडः ॥ २६ ॥

नववृन्दा—पश्यत पश्यत गिरीन्द्रनन्दिनीजीवितबन्धोरानन्दनाय मुकुन्दः पुरस्तादयं साधयति ।

( सर्वाः कृष्णं दूरतः समीक्ष्य हर्षं नाटयन्ति )

पौर्णमासी—नववृन्दे, क्व ते प्राणसखी सत्या ?

नववृन्दा—पुरस्तात् वासन्तीमण्डपे ।

पौर्णमासी—हरेः परोक्षमेव सत्यां सत्वरं कुण्डिने प्रेषयामः ।

मुखरा—अहं गदुअ णं आणेमि । [ अहं गत्वैनामानयामि ]

( इति परिक्रामति )

---

अतिक्रान्तो गतोऽपि । परमार्याः यशोदादयः । यद् यस्मात् सर्पह्रदात् । नागरिककेतुः श्रीकृष्णः । त्रिभुवनेति । सात्वतामधिमौलिं श्रीकृष्णं कलयितुं द्रष्टुं त्रिभुवनगुरुं राजीवयोनिं ब्रह्माणमग्रे प्रेर्य कृत्वा खण्डशीतांशुचूडो महादेवः पुरं विशति । अपर्णा पार्वती तया पूर्णः पार्श्वो यस्य सः ॥ २६ ॥

गिरीन्द्रनन्दिनीजीवितबन्धोर्महादेवस्य । साधयति गच्छति । हरेः परोक्षं तत्रापि सत्वरमधुना कुण्डिने रुक्मिण्याः पितुर्गृहे यथा पुनः श्रीकृष्णोऽपि किञ्चिद्वक्तुं न शक्यते । भीष्मकेण सह रुक्मिण्याः पाणिग्रहणसमये रुक्मिण्या अनुमतिं विनाऽन्यनायिकापाणिग्रहणं मया न कर्तव्यमिति नियमात् पौर्णमास्या

( प्रविश्य पिङ्गलया सह राधा )

राधा—हला, काओ एत्थ जप्पंति ? [ सखि, का अत्र जल्पन्ति ? ]

पिङ्गला—मिलिदाइं देइए रुप्पिणीए कुडुंबाइं तुमं आक्खिवंदि। [ मिलितानि देव्या रुक्मिण्याः कुटुम्बानि त्वामाक्षिपन्ति । ]

राधा—हा ! मरणं पि मे दुल्लहं। [ हा मरणमपि मे दुर्लभम् । ] ( इति वक्त्रमावृत्य रोदिति । मुखरा दूरतः प्रेक्ष्य सचमत्कारं परावर्तते । )

पौर्णमासी—मुखरे, किं निवृत्तासि ?

मुखरा—भअवदि, किं पि वत्तुकामा वि संकामि । [ भगवति, किमपि वक्तुकामाऽपि शङ्के । ]

पौर्णमासी—मुग्धे, कृतं शङ्कया । विस्रब्धमुच्यताम् ।

मुखरा—( सास्रगद्गदं कर्णे ) एव्वं एदं । [ एवमिदम् । ]

पौर्णमासी—( सोपालम्भम् ) प्रलापिनि, तूष्णीं भव । कुतस्ते तादृशं भागधेयम् ।

यशोदा—भअवदि, किं भणादि एसा ? [ भगवति, किं भणत्येषा ? ]

पौर्णमासी—गोकुलेश्वरि, बाढ़मसम्भाव्यम् । (मुखरा पुनः कर्णे लगति) मूढ़े, ज्ञातं ज्ञातम् । महारत्नेनैव भ्रान्तासि कृता ।

मुखरा—णत्तिणि ललिदे, तुमं आअदुअ पेक्ख । [ नप्त्रि ललिते, त्वमागत्य पश्य । ] ( ललिता पौर्णमासीमुखमीक्षते )

पौर्णमासी—गच्छामस्तत्र । को दोषः ।

( इति सर्वाः परिक्रामन्ति )

पौर्णमासी—(ललितामुखराभ्यां सह किञ्चिदग्रे गत्वा । सौत्सुक्यम्) कथमलक्ष्यमाणसर्वाङ्गापि वराङ्गी मदन्तरे कारुण्यमुन्मीलयन्ती किञ्चिच्चमत्कारमारोपयति ।

ललिता—( सन्निधाय । सगद्गदम् ) अइ मंदोदरि, किं रोअसि ? [ अयि मन्दोदरि, किं रोदिसि ? ]

राधा—( मुखादञ्चलमपास्य । सविक्रोशम् ) हा ! हा ! कधं पिअसही मे ललिदा । हा ! कधं वच्छला भअवदी । हा ! कधं अविजआ मुहरा ! [ हा ! हा ! कथं प्रियसखी मे ललिता । हा ! कथं वत्सला भगवती । हा ! कथ-

---

अपि एतादृशं चेष्टितं तत्क्षण एव सुखसमुद्रस्य पश्चात् साद्भुतहास्यकौतूहलादेश्च परमावधिलाभार्थम् इति ।

एवमिति । इमां राधामिव पश्यामीत्यर्थः । पुनः कर्णे इत्याह—तदेव राधाहस्तस्थितं रत्नं मया दृष्टमिति ।

मार्या मुखरा ] ( इत्यानन्देन घूर्णयन्ती भूमौ स्खलति । ललिता विचित्रं कूजन्ती राधामालिङ्ग्य प्रमोदमूर्च्छां नाटयति । )

पौर्णमासी—अहह ! भोः, कथं वत्सैव सा मे राधिका । ( इत्युच्चैराक्रन्दति )

मुखरा—णत्तिणि, पुणो वि लद्धासि । [ नप्त्रि, पुनरपि लब्धाऽसि । ] ( इत्युन्मादं नाटयति )

यशोदा—(रोहिण्या सह धावन्ती । सगद्गदम्) हा ! वच्छे, जीअसि । [ हा ! वत्से, जीवसि । ] ( इति मुखं चुम्बति )

चन्द्रावली—( सोत्कम्पम् ) किं क्खु मह वहिणी राही च्चेअ एसा ! [ किं खलु मम भगिनी राधिकैवैषा ! ] ( इति स्खलन्ती कण्ठे गृह्णाति )

पौर्णमासी—अहो तीव्रतृष्णार्तानां मरुजाङ्गले [1]पानकुल्या स्वयमेवोन्मीलिता ।

राधा—( सर्वासां पादानभिवाद्य । सोत्कण्ठम् ) कुसलिणी किं वहिणी मे चंदाअली । [ कुशलिनी किं भगिनी मे चन्द्रावली ]

चन्द्रावली—( गाढं परिष्वज्य ) वहिणीए, सा एसह्मि दुज्जणी हतचंदा अलिआ । [ भगिनि, सैषाऽस्मि दुर्जनी हतचन्द्रावलिका ] ( इति रोदिति )

राधा—( सानन्दसम्भ्रमं पादयोः पतन्ती ) हद्धी ! हद्धी ! विडंबिदह्मि हतदेव्वेण । [ हा धिक् ! हा धिक् । विडम्बितास्मि हतदैवेन ]

( ततः प्रविशति कृष्णः )

कृष्णः—( सानन्दम् ) चिरेणाद्य गोकुलवासिनामिवात्मानमभिमन्यमानः प्रमोदमुग्धोऽस्मि ।

---

प्रमोदमूर्च्छां नाटयतीति । अत्र समयो नाम निर्वहणसन्ध्यङ्गम् । तथा च—'समयो दुःखसङ्क्षयः' ( ना० चं० का० ११५ ) अत्र निजप्रियसुहृद्दर्शनाद् राधायाः दुःखसङ्क्षयः । मरुजाङ्गले जलशून्यदेशीये वने पानकस्य शर्करादिकृतपेयस्य कुल्याऽल्पा कृत्रिमा सरित् स्वयं प्राप्ता । हतदैवेनेति । अत्रोपगूहनं नाम निर्वहणसन्ध्यङ्गम् । तथा च—"अद्भुतार्थपरिप्राप्तिरुपगूहनमुच्यते ।' ( ना० चं० का० ११७ ) अत्र 'राधा सोत्कण्ठं कुशलिनीत्याद्यारभ्य 'हद्धी विडंविदह्मि हतदेव्वेण इत्यन्तं यावददृष्टपूर्वयोर्भगिन्योः परस्परालिङ्गनादद्भुतार्थपरिप्राप्त्योपगूहनम् ।

प्रमोदमुग्धोऽस्मीति । इदमपि आनन्दो नाम निर्वहणसन्ध्यङ्गस्यो-

---

१. पानककुल्या ।—व० ।

यशोदा—( कृष्णमभिमृश्य ) जाद, दिट्ठिआ वहूदुदीओ सप्पदहादो खेमी णिक्कंतोसि । [ जात, दिष्टया वधूद्वितीयः सर्पह्रदात् क्षेमी निष्क्रान्तोऽसि । ]

नववृन्दा—गोकुलेश्वरि, मायामयी सेयं भुजङ्गसंहतिः ।

( सर्वे स्मितं कुर्वन्ति )

ललिता—हला राहि, कहिं विसाहा । ( सखि राधे, कथं विशाखा )

नववृन्दा—पश्येयं विशाखा निजनिर्भराद्दुत्थाय सानन्दमायाति ।

( सर्वाः प्रत्युद्गम्य विशाखामालिङ्गन्ति । विशाखा गुरूणां पादानभिवन्द्य राधामालिङ्गति । )

ललिता—[1]हा सहि विसाहे, कधं पुणो वि दिट्ठासि । [ हा ! सखि विशाखे, कथं पुनरपि दृष्टासि ] ( इत्युभे गाढमालिङ्गतः )

चन्द्रावली—( जनान्तिकम् ) भअवदि, वहिणीए करं गेण्हिदुं मह वअणेण अब्भत्थीअदु अज्जउत्तो । [ भगवति, भगिन्याः करं ग्रहीतुं मम वचनेनाभ्यर्थ्यतामार्यपुत्रः । ]

पौर्णमासी—वत्से, दाक्षिण्यभाजां मूर्द्धन्यासि । तदाकर्णय—

एषा साध्वी चिरमुदयते देवि दैवीप्रसिद्धिः
विन्यस्तायां मधुरिपुकरे राधिकायां भवत्या ।
धिन्वन् भावी भुवनमनयोः प्रेमसौभाग्यघण्टा-
निर्घोषाख्यः परिणयविधौ रत्नराधाभिषेकः ॥ २७ ॥

चन्द्रावली—( सहर्षम् ) अज्जे, मह वि एसो च्चेअ कामो ता गोउ-

---

दाहरणम् । तथा हि—'आनन्दो वाञ्छितागमः' इति । ( ना० चं० का० ११५ ) । अत्र कृष्णस्यानन्दः ।

एषेति । हे देवि, एषा राधा साध्वी पतिव्रता चिरकालं व्याप्य दैवी देवनिर्मिता प्रसिद्धिरुदयते । कृष्णकरे विन्यस्तायां सत्यामनयोः राधाकृष्णयोः परिणयविधौ प्रेमसौभाग्ययोः घण्टानिर्घोषाख्यः रत्नधाराभिषेकः भुवनं धिन्वन् भावी पुरा विवाहं विनैव कृष्णनिष्ठावतीत्वेनास्याः साध्वीत्वमनयोः प्रेमसौभाग्यत्वञ्च प्रसिद्धम् । 'सर्ववाद्यमयी घण्टा' इति शास्त्रोक्त्याऽधुना सर्वप्रकारेण सिद्धं भविष्यति । कृतिः नाम निर्वहणसन्ध्यङ्गमिदम् । तथा च—'लब्धार्थस्य कृतिः स्थैर्यम्' ( ना० चं० का० ११६ ) इति । अत्र यशोदादिसमागमाल्लब्धस्य राधिकारूपार्थस्य चन्द्रावलीप्रार्थनेन स्थैर्यं कृतिः ॥ २७ ॥

---

१. सहि विसाहे–अ० ।

लेसरीए समं संपादीअदु[1] । [ आर्ये, ममाप्ययेष एव कामस्तस्माद् गोकुलेश्वर्या समं सम्पादय[2] । ]

( पौर्णमासी यशोदामावेदयति )

यशोदा—जाद, वच्छा चंदाअली किं पि अब्भत्थेदि । [ जात, वत्सा चन्द्रावली किमप्यभ्यर्थयते । ]

कृष्णः—अम्ब, कथय कमस्याः पूरयाम्यभिलाषम् ।

यशोदा—( कर्णे ) एव्वं एदं । [ एवमेतत् ]

कृष्णः—अम्ब, यथाज्ञापयति । ( इत्युपसृत्य । जनान्तिकम् ) देवि, दुर्वहोऽयं गरीयान् महाभावः । तदितोऽन्यदाज्ञापय ।

चन्द्रावली—( सप्रणयेर्ष्यम् ) ठाणे विज्झसि जं लद्धकंडो सित्ति । [ स्थाने विध्यसे यल्लब्धकाण्डोऽसीति ] ( इति राधां करे धृत्वा ) पुंडरीकक्ख, एसा मे बहिणी अम्हसआसादो वि तुए पउरपेम्मेण संभावणिज्जा । [ पुण्डरीकाक्ष, एषा मे भगिनी अस्मत्सकाशादपि त्वया प्रचुरप्रेम्णा सम्भावनीया । ]

( इति कृष्णपाणौ समर्पयति )

कृष्णः—( नीचैः ) देवि, कस्ते प्रसादं नाभिनन्दतीति ।

( इति सादरं गृह्णाति )

( नेपथ्ये )

उद्दिश्यमानसरणिर्ननु रैवतेन
गोवर्द्धनस्य करसम्भृतवामपाणिः ।
भल्लूकमल्लवदनादुपलभ्य वार्त्तां
विन्ध्यो मुकुन्दनगरीं नगरादुपैति ॥ २८ ॥

पौर्णमासी—पश्यत पश्यत ।

धृतहलधरपाणिः पर्ववेदीमपूर्वां
प्रविशति वसुदेवो वृष्णिवीरैः परीतः ।

---

स्थाने युक्तं विध्यसे यल्लब्धकाण्डो लब्धावसरोऽसि । 'काण्डोऽवसरवाणयोः' ।

उद्दिश्यमानेति । विन्ध्यो विन्ध्याचलः भल्लूकमल्लो जाम्बवान् तस्य मुखात् स्वकन्याद्वयस्य विवाहवार्त्तामुपलभ्य स्वनगरात् मुकुन्दस्य नगरीमुपैति । कीदृशः—रैवतेन उद्दिश्यमानः सरणिर्मार्गो यस्मै सः ॥ २८ ॥

धृतेति । वसुदेवो वृष्णिवीरैः परीतः । यदुस्त्रीभिः सेव्यमाना देवकी च

---

१. संवादिअदु—ब० । २. संवादय—ब० ।

यदुकुलरमणीनां श्रेणिभिः सेव्यमाना
सदयमुपनयन्ती रेवतीं देवकी च ॥ २६ ॥

नववृन्दा—पश्यत पश्यत ।

भद्राया दक्षिणं पाणि शैव्यायाः सव्यमुत्सुका ।
कराभ्यां गृह्णती श्यामा पुरस्तादियमाययौ ॥ ३० ॥

( नेपथ्ये )

विनीते राधायाः परिणयविधानानुमतिभिः
स्वयं देव्या तस्मिन् पितुरिह निबन्धे मुदितया ।
कुमारीणां तासामयमुपनयन् षोडश कृती
सहस्राणि स्मेरः प्रविशति शताढ्यानि गरुडः ॥ ३१ ॥

यशोदा—अम्महे ! देअस्स एक्कदा सव्वदोमुही अणुउलदा ! [ अहो ! देवस्यैकदा सर्वतोमुख्यनुकूलता ! ]

पौर्णमासी—पश्य पश्य ।

दक्षिणतः श्रीदामा वलितः सुबलेन सव्यतः स्फुरता ।
उपचितपरमानन्दः प्रविशत्ययमग्रतो नन्दः ॥ ३२ ॥

( प्रविश्य यथानिर्दिष्टो नन्दः )

नन्दः—भगवति, चरितार्थोऽस्मि चिरसम्भृतस्य मनोरथस्य पूरणेनेति । ( इति कृष्णमालिङ्गति । भगिन्यौ पौर्णमासीमन्तराकृत्य गोपेन्द्रं प्रणमतः । )

---

पर्ववेदीं विवाहवेदिकां प्रविशति ॥ २९ ॥

विनीते इति । पितुर्भीष्मकस्य निबन्धः रुक्मिण्या अनुमतिं विना अन्यस्याः कन्यायाः करग्रहणं न कार्यम् । तत्र राधायाः परिणयविधानेऽनुमतिभिस्तस्मिन् प्रबन्धे स्वयं देव्या विनीते दूरीकृते सति तासां कुमारीणां शताढ्यानि षोडशसहस्राणि गरुडः उप समीपे नयन् प्रविशति । केचित्तु पूर्वभावस्थाने पूर्ववाक्यं पठन्ति । पूर्वभाषमपि केचित् । तथा च—'पूर्ववाक्यन्तु विज्ञेयं यथोक्तार्थोपदर्शकम् ।' ( ना० चं० का० ११८ ) अत्र पूर्वं कृष्णेन तृतीयाङ्के यदुक्तं—'एतास्तूर्णं नयत कियतीः' (ल०) इत्यादिना पुनः स्वसङ्गमनं तस्यैवोपदर्शनम् ॥३१॥

दक्षिणत इति । दक्षिणपार्श्वे श्रीदामानं वामे सुबलं कृत्वा नन्दः प्रविशति ॥ ३२ ॥

भगिन्यौ सत्याचन्द्रावल्यौ पौर्णमासीमन्तरा मध्ये कृत्वा । हे वत्से, युवां परस्परस्य सत्या रुक्मिण्या एवं रुक्मिणी सत्यायाः प्राणाधिक्यं भजन्तौ न तु पूर्ववद्विरोधिन्यौ भूत्वा सौभाग्यवत्यौ भूयास्तम् । भाषणं नाम निर्वहणसन्ध्य-

नन्दः—वत्से, परस्परस्य प्राणाधिक्यं भजन्त्यौ सौभाग्यवत्यौ भूयास्तम्।

पौर्णमासी—

निखिलसतीनां वृन्दैररुन्धतीयं निरुन्धती पदवीम्।
अनवाप्तव्रतलोपा लोपामुद्राप्यसौ मिलति ॥ ३३ ॥

नववृन्दा—

गीर्वाणाधिपतिः पुलोमतनयामृद्धिं सखा धूर्जटेः
धूमोर्णामरविन्दबान्धवसुतो गौरीमपामीश्वरः।
त्वाष्ट्रीं चण्डरुचिः शिवां मरुदसौ स्वाहां कृशानुस्तथा
चन्द्रः पश्यत रोहिणीमुपनयन् प्रापद्यत द्वारकाम् ॥ ३४ ॥

(नेपथ्ये)

स्वैरिन्ध्रीयं सुगन्धान् प्रणयति विविधानङ्गरागप्रबन्धान्
दामान्यग्रे सुमाला मुदितमतिरसौ भूरिशो निर्मिमीते।
भङ्गीभिर्वायकोऽयं रुचिमिह रचयत्यम्बराणां वराणां
पूर्णानन्दाभिघूर्णत्परिजनगहना द्वारकोल्लासतीति ॥ ३५ ॥

---

ङ्गमिदम्। तथा च 'मानाद्याशिस्तु भापगम्' (ना० चं० का० ११६)। अत्र नन्दकृताशीर्वादादिमानप्राप्त्या भाषणम्।

निखिलेति। अरुन्धती वसिष्ठभार्या निखिलसतीवृन्दैः सह पदवीं मार्गं निरुन्धती आवृण्वती मिलति। कीदृशी—न अवाप्तः प्राप्तो व्रतलोपो यस्याः सा लोपामुद्रा वरुणस्य भार्या। 'लोपामुद्रा सधर्मिणी'त्यमरः ॥ ३३ ॥

गीर्वाणेति। गीर्वाणाधिपतिरिन्द्रः पुलोमतनयां शचीं स्वभार्यामुप समीपं नयन् तथा धूर्जटेः सखा कुबेरः ऋद्धिमरविन्दबान्धवसुतो यमः धूमोर्णामपामीश्वरो वरुणः गौरीं चण्डरुचिः सूर्यः त्वाष्ट्रीं विश्वकर्मकन्यां संज्ञामसौ मरुत् शिवां कृशानुरग्निः स्वाहां चन्द्रः रोहिणीमुप समीपं नयन् द्वारकां प्रापद्यत ॥ ३४ ॥

स्वैरिन्ध्रीति। गोकुलवासिनां द्वारकावासिनां स्वर्गवासिनामागमनमुक्त्वा मथुरावासिनामाह—स्वैरिन्ध्रीति। स्वैरिन्ध्री सुगन्धान्। 'स्वैरिन्ध्री परमेश्मस्था स्ववशा शिल्पकारिका' इत्यमरः। सुमाला मालाकारः दामानि माला निर्मिमीते। वायकः सूचिकारः[1] अम्बराणां वस्त्राणां रुचिं कान्तिं भङ्गीभिः पत्रपुष्पादिनिर्माणैः रचयति। पूर्णानन्दादभि सर्वतो भावेन घूर्णत्परिजनैर्गहना दुर्गमा द्वारकाऽतिशयोल्लासयुक्ता सती वर्तते ॥ ३५ ॥

---

१. सूरिकार—ब०।

ललिता—विसाहे, बाढं किदत्थासि पुणो वि दोण्हं संगमसहूसवदंसणेण। [ विशाखे, अतिशयं कृतार्थासि पुनरपि द्वयोस्सङ्गममहोत्सवदर्शनेन। ]

पौर्णमासी—यशोदामात, उपस्थितोऽयं सर्वाभिषेकसम्भारस्तदलङ्क्रियतां प्रथमं राधया सह पर्ववेदी ततः क्रमेण कुमारीभिश्च।

कृष्णः—( सर्वमभिनन्द्य। जनान्तिकम् ) प्राणेश्वरि राधिके, प्रार्थयस्व। किमतः परन्ते प्रियं करवाणि।

राधा—कधं विअ! [ कथमिव! ]

( कृष्णः स्थगितामिवापसव्यतो विलोकते। प्रविश्य गार्ग्या सहापटीक्षेपेणैकानंशा )

एकानंशा—सखि राधे, मात्र संशयं कृथाः यतो भवत्यः श्रीमति

---

द्वयोः राधाकृष्णयोः सङ्गममहोत्सवदर्शनेन। यशोदा माता यस्य स हे कृष्ण अयं सर्वोऽभिषेकसम्भारः उपस्थितः। प्रथमं राधया सह पश्चात् क्रमेण कुमारीभिः शताधिकषोडशसहस्रैश्च सह पर्ववेदी अलंक्रियताम्। पूर्वभावो नाम निर्वहणसन्ध्यङ्गमिदम्। तथा च—'मुख्यकार्यस्य संसर्गः पूर्वभावः प्रकीर्तितः।' ( ना० चं० का० ११८ ) इति। अत्र मुख्यकार्यस्य राधामाधवयोः परिणयोत्सवस्य संसर्गात् पूर्वभावः।

ततः पर्ववेद्यामभिषेकादिसमाप्त्यनन्तरं तत्र महोत्सवे आगतान् दानमानमधुरभाषणादिभिः सत्कारपूर्वकमभिनन्द्य एकान्तस्थले श्रीराधामाह—प्राणेश्वरीति। सर्वथा परिपूर्णायामपि किं प्रार्थनीयमस्ति। श्रीकृष्णस्य वाक्येन प्रार्थनानन्तरं तस्यास्तित्वबुद्ध्याऽऽह—कथमिव कीदृशं प्रियं करवाणि। स्थगितमित्यत्र इवशब्देन स्वकथनादेकानंशाद्वारा कथनमेवास्याः सचमत्कारप्रतीत्यर्थम्। भवेदिति विचारं कथयति प्रविश्य एकानंशाह—हे सखि, हे राधे भवतीनां गोकुलस्थिताभिरपरमूर्तिभिः मिलित्वा श्रीवृन्दावने विहारं कृत्वा तव प्रियं कर्तुमिच्छतीति। अद्भुतं श्रुत्वा तत्र संशययुक्तां राधां वीक्ष्याह—अत्र संशयं मा कृथाः यतो भवत्यस्तत्रैव श्रीमति गोकुले वर्तन्ते किन्तु मयैव पञ्चमाङ्कोक्तप्रकारेण भवतीनां सूर्यादिवाक्यद्वारा श्रीकृष्णप्राप्त्याशया कालक्षेपार्थं गोकुले प्रेममूर्च्छितराधादीनां निद्रितशरीरस्थजीवस्य[1] स्वाप्निकदेहगतसुखदुःखादेरनुभवमिव भवतीभिरैक्यात् श्रीकृष्णप्राप्त्याशया कालक्षेपार्थञ्चान्यथा प्रपञ्चितम्। अन्यथा प्रपञ्चनत्वादौ एकत्वतया गोकुले एकीभूय विहरतां राधासत्यभामादि-

---

१. जीवस्थ—अ।

गोकुले तत्रैव वर्त्तन्ते किन्तु मयैव कालक्षेपार्थमन्यथा प्रपञ्चितम्। तदे-तन्मनस्यनुभूयताम्। कृष्णोऽप्येष तत्र गत एव प्रतीयताम्।

गार्गी—( स्वगतम् ) फलिदं मे तादमुहादो सुदेण। [ फलितं मम तातमुखात् श्रुतेन। ]

( राधा प्रणिधाय वैवश्यं नाटयति )

गार्गी—सहि, समस्ससिहि समस्ससिहि। [ सखि, समाश्वसिहि समाश्वसिहि। ]

( राधिका समाश्वस्य तिर्यक् कृष्णमवलोकयते )

कृष्णः—प्रिये, भूयः किन्ते प्रियं करवाणि।

राधा—( सानन्दं संस्कृतेन )

सख्यस्ता मिलिता निसर्गमधुरप्रेमाभिरामीकृताः
यामीयं समगंस्त संस्तववती श्वश्रूश्च गोष्ठेश्वरी।

---

स्वरूपाणां श्रीकृष्णमथुरागमनसमये श्रीराधाया जलप्रवेशमिषेण राधिकास्वरूपं प्रेममूर्च्छितं कृत्वा अन्यालक्षितं गोकुले स्थापितं सत्यभामास्वरूपं सूर्यलोके नीतम्। अनेन प्रकारेण स्वरूपद्वयेन स्थापनं प्रपञ्चितम्। श्रीराधादीनां स्वरूप-द्वये शास्त्रप्रमाणं प्रथमाङ्के विलिख्येदं प्रपञ्चं योगमायाकृतमित्युक्तम्। योगमाया-कृतस्य नित्यत्वं सात्वतानां सुदृढं मतम्। पुनः एतच्छ्रुत्वा सचमत्कारां राधां प्रत्याह—तदेतत्त्वयैव मनस्यनुभूयताम्। व्रजस्थाभिः सह एकतत्वतयाऽनुभवं कृत्वाऽऽह—कृष्णस्य का वार्ता तत्राह—एषः कृष्णोऽपि तत्र गोकुले गतः प्राप्तः स्थित एव प्रतीयताम्। अतः 'वृन्दावनं परित्यज्य स क्वचिन्नैव गच्छति' इति तन्त्रवाक्यप्रमाणमपि सङ्गतमभूत्।

गर्गमुखश्रुतमुक्तप्रकारं स्मृत्वा मनोगतमाह—फलितमिति। प्रणिधायेति व्रजस्थस्वमूर्तेर्मूर्च्छामनुभूय विवशा बभूव। ततो गार्गी कृतचेतना तां प्राप्य। तिर्यक्कृष्णावलोकनं [1]नायकगतं कमपि चमत्कारमनुभूय। नायकवक्त्रावलोकन-मुत्तमनायिकानां स्वभावजातमेव। भूयः पुनरपि किन्ते प्रियं करवाणीति।

ततः श्रीराधया मनस्येवं विचारितम्—धामद्वयेऽस्माकं प्रकाशद्वयेन लीला भविष्यति। उक्त…न्यायेन धामद्वयगतं स्वकीयापरकीयाभावेन लीलाया द्वैविध्यञ्च निश्चित्य सानन्दं यथा स्यात्तथा श्लोकद्वयेन तदेव वक्तुमादौ स्वकीया-भावेन द्वारकायां मेऽपेक्षितं सर्वं प्रियं सिद्धमेवाऽभूदित्याह—सख्यस्ता इति। ताः ललितादिसख्यः मिलिताः। कीदृश्यः—सहजमधुरप्रेम्णा मनोरमीकृताः इयं यामी भगिनी चन्द्रावली संस्तववती सुपरिचिता समगंस्त सङ्गमिता। 'संस्तवः

---

१. नायकं गतं–अ०।

वृन्दारण्यनिकुञ्जधाम्नि भवता सङ्गोऽप्ययं रङ्गवान्
संवृत्तः किमतः परं प्रियतरं कर्त्तव्यमत्रास्ति मे ॥ ३६ ॥

तथापीदमस्तु—

चिरादाशामात्रं त्वयि विरचयन्तः स्थिरधियो
विदध्युर्ये वासं मधुरिमगभीरे मधुपुरे ।
दधानः कैशोरे वयसि सखितां गोकुलपतेः
प्रपद्येथास्तेषां परिचयमवश्यं नयनयोः ॥ ३७ ॥

किञ्च—

'यान्ते लीलापदपरिमलोद्गारि वन्या परीता
धन्या क्षोणी विलसति वृता माधुरीमाधुरीभिः ।

---

स्यात् परिचयः' इत्यभिधानात् । गोष्ठेश्वरी श्वश्रूर्जाता । वृन्दावने रङ्गवान् सङ्गोऽपि संवृत्तः । अतः कारणात् अत्र द्वारकायां परमितः परं कर्त्तव्यं प्रियतरं मे मम किमस्ति । किमपि नास्तीत्यर्थः । उपसंहारो नाम निर्वहणसन्ध्यङ्गमिदम् । तथा च—'कृतार्थतोपसंहारः सर्वाभीष्टोपलब्धितः' ( ना० चं० का० ११९ ) इति । अत्र राधामाधवयोः सर्वाभीष्टलाभेन प्रकट एवोपसंहारः । इति ॥ ३६ ॥

यद्यपि स्वकीयाभावेन सर्वसिद्धिर्जाता तथापि व्रजलीलैव प्रिया इति वक्तव्ये लीलातोऽपि व्रजस्थभक्तानां प्रियाचरणं ममातिप्रियमित्याह—चिरादिति । ये स्थिरधियो भक्ता चिरात् त्वयि आशामात्रं विरचयन्तः मधुरिम्णा गरिमे मधुपुरे वासं विदध्युस्तेषां सम्बन्धे कैशोरे वयसि सखितां सख्यं दधानस्त्वं तेषां नयनयोः परिचयं प्रपद्येथाः । आशामात्रमित्यत्र मात्रपदेन तादृशसाधनं विनापि श्रीकृष्णस्य प्रियपार्षदप्राप्तित्वं श्रीराधायाः भक्तवात्सल्यं कृपार्द्रहृदयत्वं मथुरामण्डलवासमाहात्म्यञ्च दर्शितम् । प्रशस्तिर्नाम निर्वहणसन्ध्यङ्गमिदम् । तथा च—

'मङ्गलाशंसनं सम्यक् प्रशस्तिरभिधीयते ।' ( ना० चं० का० १२० )

अत्र माथुरमण्डलनिबद्धवासानां नेत्रपथे कृष्णावाप्तिरूपमङ्गलाशंसनं[२] प्रशस्तिः ॥ ३७ ॥

अधुना परकीयाभावेन रासादिलीला ममातिप्रियतमा प्रार्थनीया चेत्याह—यान्ते लीलेति । लीलायाः मधुपानतालभञ्जनादिरूपायाः पदं स्थानं तदेव परिमलो जनमनोहरदूरगामिगन्धः तस्योद्गारि उद्गारे स्वभावो यस्य तादृशः । तालवनमधुवनेत्यादि वन्या वनसमूहस्तेन परीता व्याप्ता । माधुरी मथुरासम्बन्धिनी । 'मधुरा मथुरे'ति द्विरूपकोपः । माधुरीभिः वृता या क्षोणी विलसति

---

१. मङ्गलाशंसनात्—व० ।

२. याते—व० ।

तत्रास्माभिश्चटुलपशुपीभावमुग्धान्तराभिः
संवीतस्त्वं कलय वदनोल्लासि वेणुर्विहारम् ॥ ३८ ॥

कृष्ण—प्रिये, तथास्तु । तदेहि स्वसुस्तवाभ्यर्थनामवन्ध्यां करवावः ।

( इति सर्वैरावृतो निष्क्रान्तः )

( इति निष्क्रान्ताः सर्वे )

इति पूर्णमनोरथो नाम दशमोऽङ्कः ।

---

तत्रास्माभिः संवीतः व्याप्तस्त्वं विहारं कलय कुरु । कीदृशीभिरस्माभिः—व्यभिचारतया चटुलाश्चञ्चला याः पशुप्यः पशुरमण्यः इत्याकारभावेन मुग्धः । व्यभिचारस्य कृष्णैकविषयतया सुन्दरोऽन्तरो यासां ताभिः । आसां सर्वोत्कर्ष-कथने श्रीभागवतीयमुद्धववाक्यमप्येवमेव । तद्यथा—

क्वेमाः स्त्रियो वनचरीर्व्यभिचारदुष्टाः ।
कृष्णे क्व चैष परमात्मनिगूढभावः ॥ इति ।

उज्ज्वलनीलमणौ ग्रन्थकर्त्तुर्यथा—

'अत्रैव परमोत्कर्षः शृङ्गारस्य प्रतिष्ठितः' ( उ० नी० म०··· ) इति ।

वदनोल्लासि वेणुरिति श्रीकृष्णस्योपपतिभावेन वेणुवादनपूर्वकविहारं श्रीमद्भागवतादौ प्रसिद्धम् । श्रीराधिकायाः प्रार्थनामयस्य 'सख्यस्ता' इति 'यान्ते लीलेति' पद्यद्वयस्य तात्पर्यानुसारेण श्रीनन्दयशोदादिपरिकराणां प्रकाशभेदेन नववृन्दावने स्थितिरथवा मथुरावासिनां द्वारकानयनमिवैषां व्रजे प्रापणमित्युभयमेव कर्तुमकर्त्तुमन्यथाकर्तुं समर्थस्य श्रीकृष्णस्य किमपि दुष्करं नेति बोध्यम् ॥ ३८ ॥

तथा तेनैव प्रकारेण विहारमस्त्विति स्वीकारपूर्वकाशीर्वादमिदमुभयत्र लीलां सूचयति । तदेहि तव स्वसुः रुक्मिण्याः अभ्यर्थनां तव पाणिग्रहणपूर्वकं रुक्मिणीतोऽप्यधिकप्रीतिकरणरूपामवन्ध्यां करवाव । तव स्वसुरभ्यर्थनामवन्ध्यां कृत्वा बहिरङ्गजनालक्षतया श्रीगोकुलमपि त्वदीयस्वस्वरूपैरलङ्करवाम इति । पाठान्तरेऽपि लीलायाः द्वैविध्यं कथितम् । ग्रन्थारम्भसमये ग्रन्थकर्त्तारं प्रत्यादौ श्रीसत्यभामाज्ञा यथा मम पृथङ् नाटकं कुर्विति महाप्रभोरप्याज्ञा यथा श्रीकृष्णं व्रजाद् बहिर्मा कुर्विति चैतन्यचरितामृते ग्रन्थकर्त्तुः प्रियसङ्गिना अमीइचूडामणिना श्रीकविचन्द्रराजगोस्वामिना लिखितमित्यनेनापि लीलायाः द्वैविध्यमेवायाति । ग्रन्थार्थतात्पर्यमिदमप्यायाति—श्रीकृष्णेच्छया यथा मथुरावासिनां द्वारकानयनं तथैव निद्राणस्य नन्दादिव्रजपरिकरस्य व्रजे नयनं परशुरामस्य पितुरिच्छया मातुर्भ्रातॄणाञ्च मस्तकच्छेदनं पुनर्जीवनञ्च । परशुरामकृतमस्तकच्छेदनस्य विस्मरणं पूर्ववद् व्यवहारादिकमिव श्रीकृष्णेच्छया नन्दादीनां द्वारकागमनादेर्विस्मरणपूर्वकव्रजभूमौ पूर्ववल्लीलादेः सदैवावस्थानमिति ।

नाटके समुचितामपीश्वरः स्वैरमप्रकटयन्नुदात्तताम् ।
अत्र मन्मथमनोहरो हरिर्लीलया ललितभावमाययौ ॥ १ ॥

॥ इति ललितमाधवाख्यं नाटकं समाप्तम् ॥

पूर्णं कला चतुष्षष्ट्या लक्षणैर्भूषणैरपि ।
भजन्तु श्रितगान्धर्वं[1] धीराः ललितमाधवम् ॥ १ ॥
[2]नन्देषुवेदेन्दुमिते शकाब्दे शुक्रस्य मासस्य तिथौ चतुर्थ्याम् ।
दिने दिनेशस्य हरिं प्रणम्य समापयं भद्रवने प्रबन्धम् ॥ २ ॥

---

अस्य ग्रन्थस्य ललितो माधवो यत्र इति योगार्थपूर्वकं नामाह—नाटकेति । ईश्वरोऽपि मन्मथमनोहरोऽपि हरिरत्र नाटके स्वैरं यथेप्सितमुदात्ततां धीरोदात्तनायकतामप्रकटयन् लीलया ललितभावं धीरललितनायकगुणमाययौ इति हेतोर्ललितमाधवाख्यं नाटकमिदम् ॥ १ ॥

पूर्णमिति । कलायाश्चतुष्षष्ट्या पूर्णं लक्षणैर्भूषणैरपि पूर्णम् । लक्षणं भूषणञ्च नाटकचन्द्रिकोक्तं टीकामध्ये आदावेव सर्वत्र लिखितम् । इदानीं चतुष्षष्टिकलाः शैवतन्त्रोक्ताः लिख्यन्ते । यथा—गीतं वाद्यं नृत्यं नाट्यमालेख्यं विशेषच्छेद्यं तण्डुलकुसुमावलिविकाराः पुष्पास्तरणं दशनवसनाङ्गरागाः मणिभूमिकाकर्म शयनरचनमुदकवाद्यमुदकघातं चित्रायोगाशेखरापीडयोजनं नेपथ्ययोगाः कर्णपत्रभङ्गा गन्धयुक्तिः भूषणयोजनमिन्द्रजालं कौचुमारयोगः हस्तलाघवं चित्रशाकपूपभक्ष्यविकारक्रियाः पानकरसरागासवयोजनं सूचिवायकर्म सूत्रक्रीडा वीणाडमरुकवाद्यानि प्रहेलिका प्रतिमाला दुर्वचकयोगाः पुस्तकवाचनं नाटकाख्यायिकादर्शनं काव्यसमस्यापूरणं पत्रिकावेत्रवानविकल्पा तर्ककर्माणि तक्षणं वास्तुविद्यारूपरत्नपरीक्षा धातुवादः मणिरागज्ञानमाकरज्ञानं वृक्षायुर्वेदयोगः मेषकुक्कुटलावकयुद्धविधिः शुकशारिकाप्रलापनमुत्सादनं केशमार्जनकौशलमक्षरमुष्टिकाकथनं म्लेच्छितक-विकल्पाः देशभाषाज्ञानं मन्त्रमातृकाधारणमातृकासंकुच्यं (?) मानसीकाव्यक्रिया अभिधानच्छन्दोज्ञानं क्रियाविकल्पा छलितकवियोगा वस्त्रगोपनानि आकर्षाक्रीडा बालक्रीडनकानि वैनायिकीनां वैजयिकीनां वैयासिकानाञ्च ज्ञानमिति चतुष्षष्टिकलाः ॥ १ ॥

नन्देन्द्विति । भद्रवने प्रबन्धं ललितमाधवं नाटकं हरिं प्रणम्याहं समापयम् । तत्र शकाब्दानाह—नन्दाः नव इषवः पञ्च इन्दुः एकम् । 'अङ्कस्य वामा गति'रित्यत एव चतुर्दश सहस्रएकोनषष्टिवर्षे ( १४५९ ) सङ्ख्यके शुक्लस्य ज्येष्ठमासस्य चतुर्थ्यां तिथौ दिनेशस्य सूर्यस्य वासरे ॥ २ ॥

---

१. गन्धर्वं—ब० । २. नन्देन्दुवेदेन्दु—अ० ।

तटस्थेनापि गम्भीरे रसस्रोतसि यन्मया ।
सर्वतोमुखमाकीर्णं तत्क्षमध्वं मनीषिणः ॥ ३ ॥

इति श्रीरूपगोस्वामिप्रभुपादप्रणीतं ललितमाधवं नाटकं समाप्तम्



---

तटस्थेनेति । तटस्थेनापि मया गम्भीरे रसस्रोतसि सर्वतः सर्वत्र मुखं यदाकीर्णं प्रसारितम् । पक्षे—सर्वतोमुखं जनं यद् आकीर्णन्तन्मनीषिणः क्षमध्वम् । गम्भीर-रस-मयनद्यां प्रवेशासामर्थ्यात् तटस्थितेन मया तत्रस्थं[1] रसं अस्मिन् ग्रन्थे लिखन-(लेखन)-द्वारा सर्वजनगोचरीकरणरूपं यत् प्रसारितं तत् । पक्षे—रसमयतया जलं प्रणालिकाद्वारा यत्र तत्र नयनम् । इति शिवम् ॥ ३ ॥

॥ इति श्रीमन्नारायणप्रणीता ललितमाधवनाटकस्य दशमाङ्कटीका समाप्ता समाप्तश्चैतल्ललितमाधवव्याख्यानम्[2] ॥



---

१. तत्रस्थोऽवसम्—अ० । २. हस्ताक्षराणि गोपालदासस्य । लिखितं मथुराक्षेत्रे पौषशुक्लाद्वादश्यां शनिवासरे-अ० । श्री वृन्दावनेश्वरीप्राणेशाय नमः । श्रीश्रीराधाविनोदमेवोज्जयति—ब० ।

# पद्यानुक्रमणिका

# शुद्धिपत्रम्

| पृष्ठ | पङ्क्ति | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ५ | ३० | केयमिति | क्वेयमिति |
| १० | १० | मित्रानाप्तिफलागमाः | नियताप्तिफलागमाः |
| १२ | १ | मुत्तं उत्तिअं | जुत्तं उत्तिअं |
| २० | २७ | माधव | मा धाव |
| ४४ | १४ | विहारसुरदीघिका | विहारसुरदीर्घिका |
| ५१ | २ | लोचननरङ्गितभङ्गी | लोचनतरङ्गितभङ्गी |
| ६२ | ११ | गोपुरमेवानुरावः | गोपुरमेवानुसरावः |
| ७८ | २७ | रित्यपि पाठ० | रित्यपि पाठः |
| ८८ | १८ | तत्वानभिज्ञतया युक्तान् | तत्वानभिज्ञतया खेदयुक्तान् |
| ९१ | ७ | पण्याकार्थं | पिण्याकार्थं |
| ९८ | १० | तद्गीर्णाद्भुतमाधुरी | उद्गीर्णाद्भुतमाधुरी |
| ९९ | ११ | मतिमघूर्णत | मतिरघूर्णत |
| १०० | २ | मानवीयां नवीनाम् । | भानवीयां नवीनाम् । |
| ११२ | ११ | गिरसगहिदे | गिरिसगहिदे |
| १२४ | १८ | चन्द्रागभाराधनाय | चन्द्रभागाराधनाय |
| १२६ | २५ | सुलभो यान्यया | सुलभो नान्यया |
| १२७ | २४ | अन्यथा'''स्थितान्तरङ्ग-परिकरस्य | अन्यधामादिस्थितान्तरङ्ग-परिकरस्य |
| १५६ | ८ | शलाका दशा | शलाका दशो- |
| १७२ | १६ | रितः सङ्कान्तस्ते | रितः सङ्क्रान्तस्ते |
| १७९ | २२ | शोभातिशय'''कत्वाच्च (?) | शोभातिशयजनकत्वाच्च |
| १७९ | २७ | अगमनसम्भावना | आगमनसम्भावना |
| १७९ | ३१ | प्रतिविम्वमेप्रति | प्रतिविम्बप्रतिमे |
| १८२ | २५ | वृन्दावनमुवलब्धासि | वृन्दावनमुपलब्धासि |
| १९५ | २१ | सत्यममवया | सत्यमम्बया |
| २१२ | १३ | कुदुरितश्लाघाभिदस्ते | कुहुरितश्लाघाभिदस्ते |
| २१७ | ३० | अत्र मिथोजल्पस्य | तत्र मिथोजल्पस्य |

| पृष्ठ | पंक्ति | अशुद्धम् | शुद्धम् |
| --- | --- | --- | --- |
| २२१ | ११ | तरमार्तिकातरं | चरमार्तिकातरं |
| २२३ | १५ | पुत्रभावं | पुत्रभावं |
| २२४ | २४ | सारः ॥ ३१ ॥ | सारैः ॥ ३२ ॥ |
| २२६ | १७ | ज्ञयम् | ज्ञेयम् । |
| २३५ | २० | जीवतादप्यधिका | जीवितादप्यधिका |
| २४८ | ५ | चन्द्रातली | चन्द्रावली |
| २५० | ३१ | मुहुर्मुदुः | मुहुर्मुहुः |
| २५१ | १८ | माम पद्मासि | नाम पद्मासि |
| २५५ | २५ | तमेतां | तामेतां |
| २५६ | २२ | परिशीलीनो | परिशीलिनो |



